श्री हरिकृष्ण निबन्ध मणि माला याः

त्रयोदशो (१३) मणिः।

॥ श्रीः ॥

# मुद्राराक्षसम्

## नाटकम्

महाकवि-श्रीविशाखदत्त-विरचितम्।

व्याकरण-काव्यतीर्थेन

ठक्कुरोपनामक पं० श्रीकनकलालशर्म्मणा मैथिलेन

विरचितया

भावबोधिनीसमाख्यया संस्कृतव्याख्यया

आशुबोधिन्याख्यया हिन्दीव्याख्यया

च समलङ्कृतं तेनैव च संशोधितम्।

प्रकाशक—

श्रीहरिकृष्णनिबन्धभवनम्

बनारस सिटी।

१९९३

# अभिज्ञानशकुन्तल

## 'किशोरकेलि' नाम्नी संस्कृतव्याख्या

तथा

## 'रुचिरा' नाम भाषाटीका सहित।

संस्कृतसाहित्यप्रेमियों!

आप महानुभावों को मालूम होगा कि महाकवि 'कालिदास' विरचित जितने दृश्य श्रव्य नाटक हैं उनमें 'शकुन्तल नाटक' ही को सबसे शीर्षस्थान प्राप्त हुआ है। अनुभवी महानुभावों ने कहा है—"काव्येषु नाटकं रम्यम्, तत्रापि च शकुन्तला" इससे मालूम होता है कि वस्तुतः श्रीवाग्देवीने स्वयं प्रबन्ध रूपसे कालिदासकी वाणीमें आविर्भूत होकर संस्कृत साहित्यके गौरवको बढ़ाया है। ऐसे रसभावोज्ज्वल नाटकके ऊपर नानाप्रान्तों से नानाप्रकार की टीकाएं निकल चुकी हैं। परन्तु इतनी टीकाओं के होने पर भी सर्वसाधारण बालकों को सुविधा नहीं देखी जाती थी। अतः परीक्षार्थियों की इस असुविधा के निवारण करने के लिये कवितार्किकोत्कल-पण्डित-श्रीनवकिशोरशास्त्री, काव्यव्याकरण-तीर्थ, काव्यसाहित्यशास्त्राचार्य—न्यायवैशेषिकवेदान्तशास्त्रीजीने वैदर्भिरीति तथा प्रसादगुणरञ्जित 'किशोरकेलि' नाम की संस्कृत टीका तथा 'रुचिरा' नाम की भाषा टीका बनाई है। जितनी टीका टिप्पणी इस ग्रन्थ पर छपी हैं उन सबसे उत्तम परीक्षाके ढङ्ग पर यह टीका बनी है। किशोर (बालक) लोगोंका केलि अर्थात् खेल जैसा आनन्द बढ़ाने वाला होता है; ऐसी ही यह 'किशोरकेलि' टीका किशोर अवस्था वाले छात्रों के लिये अत्यन्त आनन्ददायिनी हुई है। साधारण सस्ते संस्करण ७४० पृष्ठों का मूल्य लागत मात्र केवल १॥।)

विद्यार्थियों को कमिशन काट कर केवल रु० १-६-० में मिलेगा। तथा लाईब्रेरी राजसंस्करण भूमिका, महाभारतीय तथा पद्मपुराणोक्त शकुन्तलोपाख्यान, विस्तृत नाटकीय पदार्थ सूची जो किसी भी संस्करण में नहीं है सहित का मूल्य २) कमीशन काट कर १॥=) है।

॥ श्रीः ॥

# मुद्राराक्षसनाटकस्य समालोचना ।

मुद्राराक्षसं नाम नाटकं विशाखदत्तप्रणीतमित्यादावन्ते च समुल्लेखेन स एवास्य कविः प्रणेतेति नात्र कश्चिद्विसम्वादः । परं नात्र किमपि कविपरिचयसाधकं प्रमाणमस्तीति कविपरिचयस्तावत्प्रस्तूयते ।

प्रस्तावनायां तत्पितामहादिनामोल्लेखादेष कविः सामन्तवटेश्वरदत्तस्य पौत्रः महाराजपदभाक्पृथोः ( भास्करदत्तस्य ) पुत्रः । अयमेव विशाखदत्तोऽस्य नाटकस्य प्रणेतेति लोकप्रसिद्धिः ।

अयं कविः कदा कुत्र वा जात इति नावधारयितुं शक्यते । किन्तु ग्रन्थेऽस्मिन् गौडीरीतेर्बाहुल्यदर्शनात् गौडदेशीयोऽयमिति प्रतिभाति । वटेश्वरशब्दोपादानात् वटेश्वरनामनगरे, वटेश्वरनाम्नः शिवस्य वा भक्तजनमध्ये कवेर्जन्म सम्भाव्यते ।

अत्र विलसनमहोदयमतं तु पृथुश्चौहानवंशीयः । परं शार्मण्यदेशीयाध्यापकेन हिलीब्राण्डेन शोधितेऽस्मिन्नाटके पृथुस्थाने भास्करदत्तेति पाठदर्शनात् विलसनमहोदयमतं हेयप्रायम् ।

अस्य कवेः कालनिर्णयोऽपि बहुविवादग्रस्तो दृश्यते । अत्र पाश्चात्या विपश्चितः खृष्टस्य जन्मनो नवमे शतके कवेरुत्पत्तिमाहुः । काशीनाथत्र्यम्बकतैलङ्गमहोदयैस्तु अनेकयुक्त्या बहुतरग्रन्थोद्धारेण च कवेः खृष्टजन्मनोऽष्टमशतकार्वाचीनत्वं खण्डितम् । साम्प्रतं तु—हिलीब्राण्डनामधेयः शार्मण्यदेशीयाध्यापकप्रवरो निखिलभारतवर्षभ्रमणानन्तरमनेकस्थानस्थितबहुतरहस्तलिखितपुस्तकसमालोचनादस्य नाटकस्य पाठोद्धारं कृतवान् । कृते च पाठोद्धारे नास्ति कश्चिद्विपश्चितामिदानीं सन्देहलेशोऽपि ।

अत्र विलसनमहोदयैस्तु—

म्लेच्छैरुद्वेज्यमाना भुजयुगमधुना संश्रिता राजमूर्त्तेः ।

अत्र पद्ये म्लेच्छपददर्शनात् पाठानवंशीयम्लेच्छकर्तृकाक्रमणमित्यभिप्रेत्य एकादशे द्वादशे वा खृष्टाब्दे कविसमयो निर्णीतः ।

ब्रेश्लुनामनगरे मुद्रितस्य मुद्राराक्षसनाटकस्य भरतवाक्ये—

सश्रीमद्बन्धुभृत्यश्चिरमवतु महीं पार्थिवश्चन्द्रगुप्तः ।

इति पाठदर्शनात् श्रीकाशीप्रसादजयस्वालेन नाटकमिदं चन्द्रगुप्तराज्यकाले रचितमभिनीतञ्चासीदिति निर्णीतम् ।

चन्द्रगुप्तनामानो राजानश्च त्रय आसन् । अत्रैको मौर्यनामा अस्मात्समयात् द्वाविंशतिशतवर्षेभ्यः प्रागासीत । स चास्य नाटकस्य नायक इति नास्य सभाया-मेतन्नाटकाभिनयः सम्भाव्यते । नाटकेऽस्मिन् म्लेच्छानां नामोल्लेखान्नास्य नाटकस्य तादृशप्राचीनकालो रचनाकाल इति विदुषां विमर्शः ।

द्वितीयस्तु चन्द्रगुप्तो गुप्तवंशीयः ख्रृष्टजन्मनोऽधस्तात चतुर्थशतके पाटलिपुत्रे राज्यमकरोत् । तस्य नातिविस्तृतं राज्यमासीत् । नाप्येतत्सभायां विद्वत्समागम-वार्ताऽपि श्रूयते । तस्य च पौत्रः पञ्चमशतकीयचन्द्रगुप्तः आर्यावर्तव्यापिनो राज्यस्य शासक आसीदिति बहुतरशिलालेखेषु दृश्यते । स च विक्रमादित्येत्यपरनाम्ना प्रसिद्धः । तस्यैव सभायामिदं नाटकम् तस्यैव सभासत् विशाखदत्तो रचितवानभिनीत-वांश्च हूणादयो म्लेच्छास्तत्पूर्वमेव पञ्चनदप्रान्ते उत्पातमकार्षुरित्यपि इतिहासप्र-ख्यातम् । तेन च भरतवाक्ये—

"म्लेच्छैरुद्वोज्यमाना भुजयुगमधुना पीवरं राजमूर्त्तेः" इत्यपि सङ्गच्छते ।

केचित्तु—पण्डितवरकाशीनाथत्र्यम्बकतैलङ्गमहोदयस्तु खृष्टादष्टमशतकादूर्ध्वमस्य कवेः कालो न भवितुमर्हतीति बहुतरप्रमाणेन निर्णीतम् । क्वचित् भरतवाक्ये चन्द्र-गुप्तस्थाने अवन्तिवर्मेति पाठो दृश्यते । यश्च पश्चिममगधाधिपः कन्नौजाधिपहर्षवर्द्ध-नाबुत्तस्य ग्रहवर्मणः पिता आसीदिति एवं च विशाखदत्तोऽपि मगधदेशवास्तव्यश्चे-त्तदा तस्यैव स सभासद्भवितुमर्हतीति । तस्य च राज्ञो राज्यकालः खृष्टाब्दीयः पञ्चमशतकीयश्चेत्तदा कविरपि तत्कालीन एवेति सम्भाव्यते ।

## पुनरालोच्यते—

दुष्कालेऽपि कलावसज्जनरुचौ प्राणैः परं रक्षता
नीतं येन यशस्विनातिलघुतामौशीनरीयं यशः ।
बुद्धानामपि चेष्टितं सुचरितैः क्लिष्टं विशुद्धात्मना
पूजार्होऽपि स यत्कृते तव गतो वध्यत्वमेषोऽस्मि सः ॥ (७अं० ५श्लो०)

बुद्धदेवेन सह चन्दनदासस्य तुलनां तथा चतुर्थाङ्के बौद्धधर्मावलम्बिना क्षपण-

केन जीवसिद्धिना सह राक्षसचाणक्यादीनां ब्राह्मणानां सद्भावं नैर्घृण्यञ्चावलोकनेन बौद्धादिनास्तिकानां मतस्य लेशमात्रसत्ताकाल एवैतन्नाटकस्य रचनाकाल इति प्रतिभाति। ( ४९-२५४ पृष्ठे द्रष्टव्यम्) । बौद्धादिमतस्य ह्रासकालस्तु षट्शतकादूर्ध्वमेवेति सप्तमशतकादूर्ध्वमस्य नाटकस्य रचनाकाल इत्येव सङ्गतम्।

अन्यच्च, सरस्वतीकण्ठाभरणे अस्य नाटकस्य—

उवरि घणं घणरडिअं दूरे दइआ किमेददावडिअम्।
हिमवदि दिव्वोसहिओ सीस्से सप्पा समाविट्टो॥ ( अं०श्लो०२२)

तथा—

प्रत्यग्रोन्मेषजिह्मा क्षणमनभिमुखी रत्नदीपप्रभाणाम्
आत्मव्यापारगुर्वी जनितजललवा जृम्भितैः साङ्गभङ्गैः।
नागाङ्कं मोक्तुमिच्छोः शयनमुरुफणाचक्रवालोपधानं
निद्राच्छेदाभिताम्रा चिरमवतु हरेर्दृष्टिराकेकरा वः॥ (अं०३श्लो०२१)

श्लोकद्वयोदाहरणदानात्। दशरूपकेऽपि ( १ प्रकाशे६८कारिकान्ते, २प्रकाशे ५९कारिकान्ते ) मुद्राराक्षसनाटकस्य समुल्लेखाच्चोक्तग्रन्थद्वयरचनाकालतः पूर्वमेवास्य रचनाकालो निश्चीयते। दशरूपकस्य रचनाकालस्तु खृष्टाब्दाद्दशमे शतके इत्यनुमीयते। एवं सरस्वतीकण्ठाभरणस्यापि रचनाकालोऽनुमेयः। अतः खृष्टाब्दस्य सप्तमशतकादूर्ध्वं नवमात्पूर्वमस्य नाटकस्य रचनाकालो वक्तुं शक्यते।

## नाटकसम्बन्धे प्रकीर्णविषयपरामर्शः।

नाटकेषु मुद्राराक्षसोपमं नीतिपरिपूर्णं नान्यदस्ति किमपि नाटकम्। "अमरमङ्गल"नामैतिहासिकनाटकमेतत्सममपि तदाधुनिकमिति तदवलोनादेव बुध्यते। इदं च नाटकं न मालतीमाधववत् कपोलकल्पितकथामूलम् न वाऽभिज्ञानशाकुन्तलवत् पुराणकथामूलम् अपि तु इतिहासमूलम्। अस्य च नाटकस्य मूलभूता कापि कथा बृहत्कथानाम्नि ग्रन्थे समुपलभ्यते।

अस्मिन्नाटके शृङ्गारकरुणादयो रसा न सन्ति। किन्तु वीररसबाहुल्यमेव दृश्यते। अतो नात्र दुर्बलपात्राणि, नापि कानिचित्स्त्रीपात्राणि च सन्ति। किन्तु एका चन्दनदासपत्न्येव स्त्रीपात्रं दृश्यते। एषा च चन्दनदासपत्नी स्वार्थत्यागिनी कर्तव्यपालनोन्मुखी स्त्रीणामादर्शभूता। अत्र नाटके विदूषको नाम पात्रं नास्ति। अत्र च चन्द्रगुप्तनामा नृपतिर्नायकः। चाणक्यराक्षसौ प्रधानपात्रे।

अस्य च नाटकस्य विषयानुरूप एव लेखनक्रमः । न तु मालविकाग्निमित्रनाटकवद्दुर्बलो नाप्युत्तररामचरितनाटकवत्कारुण्यबहुलः । अत्र च प्राधान्येन गौडीरीतेरुपलम्भादेतन्नाटकप्रणेता कविर्गौडदेशीय इत्याहुः केचित् ।

अथात्र भूयः प्रधानपात्रालोचनम् ।

तत्र तावत् प्रथमश्चाणक्यो नाम प्रधानपात्रम् । एष च राजनीतिज्ञोऽतिचतुरो ब्राह्मणजातीयः अस्य चातुर्यन्तु सर्वकार्येषु प्रत्यक्षमेवेति तत्र तत्र तत्तन्नन्दवंशविध्वंसराक्षसादिसंग्रहप्रयत्नविधानादेवावगम्यते । एष चात्मनि ईदृशो विश्वस्तो यदेकेनात्मबलेनैवातिगुर्वीमात्मप्रतिज्ञां तीर्णवान् । उक्तञ्च तेनैव यथा—

ये याताः किमपि प्रधार्य हृदये पूर्वं गता एव ते
ये तिष्ठन्ति भवन्तु तेपि गमने कामं प्रकामोद्यमाः ।
एका केवलमर्थसाधनविधौ सेनाशतेभ्योऽधिका
नन्दोन्मूलनदृष्टवीर्यमहिमा बुद्धिस्तु मागान्मम ॥ इति ।

( १अं० २६श्लो० )

अस्य च कूटनीतिपाण्डित्ये समालोच्यमाने पदे पदे दृष्टिगोचरीभूतं भवति । अस्य गुप्तचराश्चातिशिक्षिता आसन् । तेषां च नियोगे तस्य परमसुविचार आसीत् । तेनाऽऽत्मनि विधीयमानः शत्रूद्योगो विनाशितः । अस्य नीतिनैपुण्यं सर्वथा सर्वदा प्रतिभाति । न कदापि तेन कर्मणो दैवाधीनत्वं मतमपि तु पौरुषाधीनमेव । उक्तञ्च तेन—

"दैवमविद्वांसः प्रमाणयन्ति" इति

स च चाणक्यः स्वोद्योगैर्निखिलनन्दकुलं विनाश्य राजसिंहासने चन्द्रगुप्तमुपवेश्य स्वयं पुष्करपलाशवन्निर्लेपः पुरुष इव तस्थौ न चायमुत्कृष्टकार्यसाधनतो गौरवमाश्रितः । न च जहौ शुद्धाचारवेषौ । न चात्मपर्णकुटीं विहाय प्रचुरविविधामोदप्रदं प्रासादं प्राविशत् । उक्तञ्चैतत्कुटीवर्णनं कविना यथा—

उपलशकलमेतेद्भेदकं गोमयानां
वटुभिरुपहृतानां वर्हिषां स्तोम एषः ।
शरणमपि समिद्भिः शुष्यमाणाभिराभि-
र्विनमितपटलान्तं दृश्यते जीर्णकुड्यम् ॥ ( ३अं० १५श्लो० )

चाणक्येन न सर्वदा धर्ममार्ग एवानुसृतः । अपि तु कार्यसाधनाय विविधक-

पटव्यवहारोऽप्यनुसृतः। नोक्तव्यवहारानुसरणलक्षणं दूषणं वाच्यम्। कार्यसाधने राज्ञां सचिवादीनां च कदाचिद्धर्मविरुद्धकार्यविधानस्यापि स्वभावसिद्धत्वात एतद्-तिरिक्तश्च तस्मिन् गुण एवासीत्। उक्तं च राक्षसेन यथा—

आकरः सर्वशास्त्राणां रत्नानामिव सागरः।
गुणै र्न परितुष्यामो यस्य मत्सरिणो वयम्॥ ( अं० ७ श्लो० ७ )

## द्वितीयश्च प्रधानपात्रं राक्षसो नाम—

स च ब्राह्मणजातीयो नन्दानां मुख्यतमोऽमात्यः तादृशः स्वामिभक्तिपरायणो नान्यः कोऽपि सेवकः श्रूयते। विनष्टेषु नन्दकुलेषु स्वामिविरहमसहमानोऽतिखिन्नः कुसुमपुरं जहौ, परं न जहौ नन्दकुलसमृद्धये राज्यविजयाकांक्षाम् कथं पुनर्नन्दवंशसमुन्नतिर्भविष्यतीत्येवाहर्निशं तस्य चिन्तनकार्यमासीत। एवं चिन्तयता तेन कदापि स्वेच्छया विविधभूषणादिभिर्निजशरीरं नालङ्कृतम्। उक्तञ्च चाणक्येन यथा—

ऐश्वर्यादनपेतमीश्वरमयं लोकोऽर्थतः सेवते
ते गच्छन्त्यनु ये विपत्तिषु पुनस्ते तत्प्रतिष्ठाशयाः।
भर्त्तुर्ये प्रलयेऽपि पूर्वसुकृतासङ्गेन निःसङ्गया
भक्त्या कार्यधुरां वहन्ति कृतिनस्ते दुर्लभास्त्वादृशाः॥ इति।

( १अं० १४श्लो० )

"अहो राक्षसस्य नन्दवंशे निरतिशयो भक्तिगुणः"। (पृ० ३२) "कञ्चुकी—अमात्यं विज्ञापयति चिरात्प्रभृति आर्यः परित्यक्तोचितशरीरसंस्कारः" (पृ० १०४)

अक्षीणभक्तिः क्षीणेऽस्मिन् नन्दे स्वाम्यर्थमुद्वहन्।
पृथिव्यां स्वामिभक्तानां प्रमाणे परमे स्थितः। ( २ अं० २२श्लो० )

इत्यादिभिः राक्षसस्य स्वामिभक्तिपराकाष्ठां सूचयति कविः।

स च राक्षसो ब्राह्मणजातीयोऽपि शस्त्रविद्यायां परमनैपुण्यमुपागतः। उक्तञ्च शस्त्रमाकर्षता तेनैव यथा—

प्राकारान् परितः शरासनधरैः क्षिप्रं परिक्षिप्यतां
द्वारेषु द्विरदैः परद्विपघटाभेदक्षमैः स्थीयताम्।
मुक्त्वा मृत्युभयं प्रहर्तुमनसः शत्रोर्बले दुर्बले
ते निर्यान्तु मया सहैकमनसो येषामभीष्टं यशः॥ ( अं २ श्लो०१३ )

यत्रैषा मेघनीला चलति गजघटा राक्षसस्तत्र यायात्
एतत्पारिप्लवाम्भःप्लुतितुरगबलं वार्यतां राक्षसेन ।
पत्तीनां राक्षसोऽन्तं नयतु बलमिति प्रेषयन्मह्यमाज्ञाम्
अज्ञासीः स्नेहयोगात् स्थितमिह नगरे राक्षसानां सहस्रम् ॥
( २ अं० १४ श्लो० )

इत्यादिराक्षसोक्त्या स्वस्मिन्नुत्कृष्टवीरत्वसूचनं भवति ।

तस्य चेदृशो बुद्धिविभवो येन नीतिनैपुण्यवन्तमपि चाणक्यमनेकधा स्थगितं चकार । यथाह चाणक्यः—

गुरुभिः कल्पनाक्लेशैर्दीर्घजागरहेतुभिः ।
चिरमायासिता सेना वृषलस्य मतिश्च मे ॥ ( ७ अं० ८ श्लो० )

अस्तु नाम चाणक्यो नीतिविशारदः येन नीत्यैव चन्द्रगुप्तराज्यं निष्कण्टकीकृतम् । तथापि अमात्यराक्षसानलंकृतमन्त्रिपदं न कोऽपि सुदृढं मन्यते ।

ईदृशोऽपि राक्षसः कूटनीत्याचरणशीलेन चाणक्येन तथा वशीकृतो यथा स्वयमेव वृषलमन्त्रिपदमलंचकार । चाणक्यस्य कूटनीत्याचरणमपि राक्षसायत्तीकरणायैवेति । यथाह चाणक्यः—

भृत्या भद्रभटादयः स च तथा लेखः स सिद्धार्थकः
तच्चालङ्करणत्रयं स च ततो मित्रं भदन्तः किल ।
जीर्णोद्यानगतः स चार्तपुरुषः क्लेशः स च श्रेष्ठिनः
सर्वं मे वृषलस्य वीर भवता संयोगमिच्छोर्नयः ॥ ( ७ अं० ९ श्लो० )

सर्वगुणसम्पन्नस्य स्वामिभक्तिपरायणस्यापि राक्षसस्य नन्दकुलशत्रोश्चन्द्रगुप्तस्य सेवास्वीकारो मित्रस्नेहपालनार्थमेव । तथाह-राक्षसः—

नन्दस्नेहकणाः स्पृशन्ति हृदयं भृत्योऽस्मि तद्विद्विषाम्
ये सिक्ताः स्वयमेव पाणिपयसा छेद्यास्त एव द्रुमाः ।
शस्त्रं मित्रशरीररक्षणकृते व्यापारणीयं मया
कार्याणां गतयो विधेरपि न यान्त्यालोचनागोचरम् ॥(७अं० ६श्लो०)

चन्दनदासश्च—

कुसुमपुरस्य श्रेष्ठिविशेषो वैश्यजातीयः तेन सह राक्षसस्य स्निग्धमैत्री आसीत् । नन्दकुलविनाशानन्तरं चन्दनदासस्यैव गृहे स्वकुटुम्बं संस्थाप्य स्वयं कुसुमपुरा-

न्निर्गतः । चाणक्येन मुहुर्मुहुः प्रेर्यमाणोऽपि स राक्षसकुटम्बं न समानयं । चाणक्येन तीक्ष्णदण्डप्रदानाङ्गीकारेऽपि तदग्रे तस्येत्थमेवोक्तिः—

( बाहू प्रसार्य )"सज्जो ह्मि अणुचिट्ठदु अज्जो अत्तणो अधिआरस्स अणुरुअं" ( ८० पृ० ) पुनः प्राणदण्डार्थमाहूतस्य तस्य पुनरियमुक्तिः—

"अज्ज अअ माअच्छामि ( स्वगतम् ) दिट्टिआ मित्तकज्जेण मे विणासो जणिदो ण उण पुरिषदोषेण" ( ८१ पृ० )

इत्थं दृढप्रतिज्ञं तमवलोक्य चाणक्येन स शिविना तुलितः । तथाहि—

सुलभेष्वर्थलाभेषु परसंवेदने जपः ।
क इदं दुष्करं कुर्यादिदानीं शिविना विना ॥ ( १ अं० २४ श्लो० )

स्वपुत्रकलत्रादीनुदिश्य—"आर्ये कुटुम्बिनि ! निवर्तस्व त्वं सपुत्रा । मित्रकार्येण े विनाशो न पुनः पुरुषदोषेण तत्किं हर्षस्थानेऽपि रोदिषीति" ( ३४२ पृ० ) ृताद्दशोक्तिश्चन्दनदासातिरिक्तस्य कस्यापि न सम्भवति । ये च पूजार्हास्ते सर्वे॰ ्यनेनातिक्रान्ता एवेति । ( राक्षसोक्तिरियम् )

येन स्वामिकुलं रिपोरिव कुलं दृष्टं विनश्यत् पुरा,
मित्राणां व्यसने महोत्सव इव स्वस्थेन येन स्थितम् ।
आत्मा यस्य वधाय वः परिभवक्षेत्रीकृतोऽपि प्रियः,
तस्येयं मम मृत्युलोकपदवी वध्यस्रगाबध्यताम् ॥
दुष्कालेऽपि कलावसज्जनरुचौ प्राणैः परं रक्षता,
नीतं येन यशस्विमातिलघुतामौशीनरीयं यशः ।
बुद्धानामपि चेष्टितं सुचरितैः क्लिष्टं विशुद्धात्मना,
पूजार्होऽपि स यत्कृते तव गतो वध्यत्वमेषोऽस्मि सः ॥

( अं० ७ श्लो० ४-६ )

## शकटदासः—

स च कायस्थजातीयोऽमात्यराक्षसस्य मित्रमासीत् । अस्य चामात्यराक्षसे ःमसौहार्दमासीत् । अस्य राक्षसे तादृशी प्रीतिरासीत् यत्प्रीत्यनुरोधेनैवात्मवि- ःशमुपागतः ।

इति मुद्राराक्षससमालोचना समाप्ता ।



※ श्रीगणेशाय नमः ※

# मुद्राराक्षसनाटकस्योपोद्‌घातः ।

अस्ति मगधजनपदेषु कुसुमपुरनामधेयं नगरम् । तत्र निखिलगुणगणालंकृतो रक्षिताशेषबान्धवो वशीकृतात्मरिपुसमूहो विवृद्धविपुलविभवो राजन्यमुकुटनिघृष्टचरणयुगलो महान्नतप्रभावो नन्दो नाम नृपतिर्बभूव । तस्य सौन्दर्याभिभूतकुसुमशराङ्गनाऽङ्गनाजनादर्शभूता रत्नावलीव रत्नावली नाम रमणी बभूव । तस्य राज्ञस्तस्यां नव सूनवोऽभूवन् ।

कदाचिन्नन्दविभवाकांक्षिणो राज्ञो मन्त्रिणस्तान् व्यजिज्ञपन्—राजानः ! विपुलविभवो विचक्षणामात्यो नन्दोऽमात्यसम्मतिं विना पराजेतुं न शक्यः । अतोऽस्य मन्त्रिबलविचारमन्तरा कदाचिदपि नैतत्कार्यमारम्भणीयमिति । इति मन्त्रिवचनमाकर्ण्य ते नृपतयो मन्त्रिणोऽब्रुवन् । प्रशस्तमतिशालिभिर्भवद्भिरैकमत्येन परमसुभगमरत्निपरिमितं समं स्निग्धमेकं देवदारुखण्डमेकान्तेऽतिभास्वरकार्त्तस्वरपट्टिकातले निधाय मुद्राऽङ्कितं च विधाय 'किमस्य मूलं का वाऽस्य शिखे'ति सम्यगालोच्य भवद्भिरस्माकं लेखनीयमिति लेख्यमनेकमणिमुक्तातुरगवसनोपेतं महाराजाय नन्दाय प्रेषणीयमिति । ते च मन्त्रिणो नृपतिवचनमाकर्ण्य तथैव व्यधुः ।

एकदा प्रहृष्टमना महाराजो नन्दः चामरग्राहिण्या सुमङ्गलाख्यया कयाचित्किङ्कर्या सह विविधकुसुमसुरभीकृतान्तरालभागम् उत्कृष्टकुसुमसौरभाहूतषट्पदपुञ्जगुञ्जितं सौरभसम्भारमन्दशिशिरमरुदान्दोलिततरुगणम् विविधविहारैकनिकेतनं प्रमदवनमिव प्रमदवनं प्राविशत् । तत्र प्रविश्य क्वचिदश्वत्थतरोरधस्तले समुपाविशत् । तत्र च मुखेनाऽश्वत्थबीजकणिकामादाय द्रुतं गच्छन्तीं पिपीलिकापङ्क्तिमालोक्य सविस्मयः स्मितं व्यधात् । स्मयमानं महाराजं वीक्ष्य सुमङ्गलापि स्मयमाना बभूव । ततो महाराजः स्मयमानां सुमङ्गलामालोक्य त्वं कथं स्मयमाना जातेति तामपृच्छत् । एवमभिहिता सा महाराजस्य भवतः स्मितदर्शनान्ममाऽप्यकारणं स्मितं जातम् । इतः परं नास्ति कारणं मम स्मितस्येति महाराजमवोचत् । ततश्च महाराजो नन्दः मम स्मितकारणज्ञानमन्तरा न तव स्मितमिति ज्ञायते तन्मम स्मितकारणमवश्यं वक्तव्यं नोचेद्वधिष्यामि त्वामित्यभ्यधात् ।

उक्तञ्च—वृथा स्मितं वृथालापं न कुर्यान्मतिमान्नरः ।
कुर्वन्वै लघुतामेति शक्रतुल्योऽपि भूतले ॥

इत्थमवनिपतिना तर्जिता कालपाशबद्धमिवात्मानं मन्यमाना गत्यन्तरमपश्यन्ती सा साक्षादीश्वरप्रहितमिवात्मरक्षिणं प्रतिभाशालिनं ब्राह्मणमेकमपश्यत् । परमया भक्त्या च तं प्राणमत् । स चाग्रजन्मा तामतिभयाकुलां मृतामिवोपलक्ष्यमाणामालोक्य दशाविपर्ययहेतुमपृच्छत् । दयावशम्वदात्मनाऽग्रजन्मना तेन पृष्टा सा सर्वं महाराजोदीरितं वचनं न्यवेदयत् । स चाग्रजन्मा नृपदण्डभयाकुलमानसामश्रुपूर्णनयनयुगलामतिदीनवदनां तां समाश्वास्य सर्वमेतदुत्तरमभिधास्ये मा भैषीरित्यभाषत । वत्से तत्र किं किमभूदिति सर्वं तत्रत्योदन्तमभिधेहि । ब्राह्मणोदीरितं सुधोपमं वचो निशम्य प्रत्यागतजीवनेव सा समवोचत् । ब्रह्मन्, अश्वत्थतरोरधस्तलेऽश्वत्थबीजमाददती पिपीलिकापङ्क्तिरासीत् । तदवलोकनाविर्भूतकौतूहलः क्षपितकियत्कालो महाराजस्तत्र स्थित आसीदित्येतावन्मात्रमेव वृत्तमिति ।

ततस्तदुक्तिमाकर्ण्य विदितनृपस्मितहेतुरग्रजन्मा तामब्रवीत—वत्से ! शृणु, अल्पाः पिपीलिका अत्यल्पमश्वत्थबीजमपहरन्ति, परमेतदेवाश्वत्थबीजं कालान्तरे महत्तरुरूपेण परिणतं सद् गजादिभिरप्यनपहरणीयं भविष्यति, अहो विधातुः सृष्टिवैचित्र्यमिति स्मितो महाराजः । अग्रजन्मना तेनैवमभिहिता सा नृपान्तिकं समेत्य बद्धाञ्जलिरवोचत । महाराज, मुखेनाश्वत्थबीजमादायागच्छन्तीं पिपीलिकापङ्क्तिमालोक्य कदाचिदेतदेवाश्वत्थबीजं महत्तरुरूपं भविष्यति, विचित्रा सृष्टिरिति स्मितो महाराजः । ततः सुमङ्गलाभिहितं समुचितमुत्तरं निशम्यातिप्रीतो महाराजो महार्हरत्नहारमेकं तस्यै ददौ ।

अथैकदा समधिगतचातुर्यधीरधिषणाऽवधीरितसुराचार्यैरमात्यवर्यैः समन्ताद्वेष्टितं विविधरत्नखचितसिंहासनमलङ्कुर्वाणं महाराजमुपेत्य प्रणम्य च वेत्रपाणिर्दौवारिको बद्धाञ्जलिरभाषत । महाराज, निखिलनृपकमत्या गृहीतसुवर्णपेटिकोऽनेकतुरगवसनसमुपेतो दूतः समागतः, तत्प्रत्यक्षीकरोतु महाराज इति । इत्याकर्ण्य महाराजोऽब्रवीत्—ततः पेटिकामानीय दर्शयेति । इत्याज्ञप्तो दौवारिकः, तुरङ्गवसनोपेतां सुवर्णपेटिकामानीय प्रदर्श्य च पुनराप्ततदनुशासनः स पेटिकां समुद्घाट्य सन्निहितदारुखण्डं लिखितं च सर्वमभिधाय परावृत्तः । ततो महाराजेन वक्रनासादिभिर्मन्त्रिभिः सह किमस्य मूलं का वास्य शिखेति विचारयताऽपि नावधारि ।

ततश्च तदज्ञानजनितोत्कण्ठो महाराजो धृततद्दारुखण्ड एवान्तःपुरं प्राविशत्। तत्र च प्रविश्य सुमङ्गलैवास्य तत्त्वमवधारयितुं शक्नोतीति निश्चित्य ताम्प्रत्यब्रवीत्-सुमङ्गले! ब्रूहि तावत् किमस्य दारुखण्डस्य मूलं का वाऽस्य शिखेति। सा तु महाराजवचो निशम्य तं शिरसा प्रणम्य बद्धाञ्जलिरुवाच, प्रमदानामीदृशं मतिवैशद्यं कुतः सम्भवति? यन्मया प्रागुक्तं स्मितकारणं तन्न स्वबुद्धिप्रभावेण किन्तु मां मरणोद्यतां वीक्ष्य सञ्जातकरुणः कश्चिन्महात्मा समभ्यधात्, मया च महाराजाय निवेदितमिति।

अथ तस्मिन्नेव क्षणे विचक्षणामात्योऽपि तदर्थचिन्तनाकुलमानसो महाराजः तं सुमङ्गलोदीरितमनिर्दिष्टनामानं महात्मानमन्विष्य मन्त्रागारे समानीय यथोचितं समभ्यर्च्य समवोचत्—ब्रह्मन्, किमभिधानं भवतः कश्च देशो वास्तव्य इति। ब्राह्मणोऽब्रवीत्—महाराज, भवन्नगरवास्तव्यस्य मणिकारश्रेष्ठिनश्चन्दनदासस्यान्तिकेऽस्ति साम्प्रतिको वासः,। अभिधानं च मम सुबुद्धिशर्मेति। इत्याकर्ण्य महाराजोऽब्रवीत्—एतस्य दारुखण्डस्य कियान् भागो मूलं कियान् भागः शिखेति सम्यगालोच्य कथ्यताम्। ब्राह्मणः प्रोवाच-महाराज! नात्र किञ्चिदपि विचारणीयम्। श्रृणु, जले प्रक्षिप्तेऽस्मिन्दारुखण्डे यावानंशोऽस्य जले निमग्नः तावानेवांशोऽस्य मूलं यतो दारुणो मूल एव गुरुत्वप्रसिद्धिः, गुरुत्वं च निमज्जने हेतुः। इत्याकर्ण्य तस्य महात्मनोऽग्रजन्मनो बुद्धिवैशद्यं विज्ञाय परमप्रीतो महाराजः तस्मै प्रधानाऽमात्यपदं वितीर्य तत्कार्ये नियोजितवान्। अथ कदाचिदसौ सुबुद्धिशर्मा प्रधानामात्यो रणे निर्भीकः सन् युद्धं कृतवान्, तेन राक्षस इत्यपरसंज्ञां लेभे।

अनन्तरं कश्चित् पर्वतेश्वरसैन्याधिपतिः, शकटारो नाम सुबुद्धिशर्मणः प्रधानामात्यपदमसहमानः पर्वतेश्वरसैन्याधिपत्यं परित्यज्य महाराजं नन्दं छायेवाश्रितुमुपक्रान्तः। अथ कियति कालेऽतीते त्यक्तसकलबान्धवस्नेहः, विरहितवसुन्धरः, सम्पादितनिजाङ्गनावैधव्यः, हृतसिंहासनाखिलशोभो महाराजो नन्दो दैवात् पुरन्दरपुराङ्गणातिथिर्बभूव। तस्मिन्नेव काले विन्ध्याटवीप्रान्तवास्तव्यः कश्चित्सुविद्यो नाम जटिलो नेपालदेशे नीलकण्ठोपाध्यायादधिगतान्यकायात्मप्रवेशविद्यः सतीर्थाभ्यां सुशील-बहुश्रुताभ्यां सह कल्पितलक्षसुवर्णमितगुरुदक्षिणार्थं महाराजपदभूषितस्य नन्दस्यैव तद्दानसामर्थ्यमवेत्य कुसुमपुरमुपागमत्। आगत्य सुरसरित्कूले

कृतासनपरिग्रह एवासौ महाराजस्य प्राणवियोगोदन्तमश्रौषीत्। अनन्तरमसौ व्यचिन्तयत्—अहो ! महत्कष्टमुपस्थितम् । महाराजो मृतः, गुरुदक्षिणायाश्च बाहुल्यम् कुतस्तां सम्पादयिष्यामि । अनेकनृपान्तिके याचनमयुक्तम् याचितेष्वपि तेषु कदाचिदिष्टसिद्धिः स्यान्न वा, याचनं तु जीवन्मरणमेव, उक्तं च—

धनाढ्यसविधे दीनं देहि देहीति यो वदेत् ।
क्षपयन्नात्मनः कालं जीवन्नेव न जीवति ॥
वरं वृक्षत्वग्भिर्वसनरचनं शैलशयनं
वरं जीर्णारण्ये गलितफलमूलाशनरुचिः ।
वरं मृत्युर्लो न तु धनमदान्धस्य सविधे
स्खलद्वर्णं लज्जानतमिह मुखं याचनविधौ ॥

अतो याचनं सर्वथाऽयुक्तं प्रतिभाति । तत् साम्प्रतमात्मविद्यामाहात्म्येन नृपकायं प्रविश्य सुशीलनामानं सतीर्थं याचकं विधाय तद्द्वारा निजकार्यं साधयिष्यामीति । इत्यमवधार्य सुविद्यो निजसतीर्थौ प्रत्यब्रवीत् । मित्र सुशील ! अद्य सायंकाले राजकायमनुप्रविष्टे मयि त्वया मदन्तिकं समेत्य लक्षसुवर्णात्मिका गुरुदक्षिणा याचितव्या । मित्र बहुश्रुत ! त्वयाऽस्मच्छरीरं यत्नतो रक्षणीयमिति । अथातिदुर्लभविद्यामहिम्ना प्राणान् समाकृष्य राजशरीरं प्राविशत् । महाराजश्च सद्यः सुप्तोत्थित इव व्यबुध्यत ।

ततश्च प्रधानामात्यपदमलंकुर्वाणो राक्षसो निखिलपुरजनानाहूय महाराजस्य पुनर्जीवनप्रयुक्तमहोत्सवाय विविधमणिखचितचतुःस्तम्भशालिनः सिंहासनस्योपरि महाराजं समुपवेश्य विविधमङ्गलं व्यधात् । तस्मिन् क्षणे कृतसंकेतं सुशीलनामानं निजसतीर्थमागतं वीक्ष्य तं समाहूय तेन गुरुदक्षिणार्थमभ्यर्थितो महाराजस्तस्मै लक्षसुवर्णानि व्यतरत् । इत्यालोच्य मन्त्रिराक्षसो व्यचिन्तयत् । गतजीवितस्य महाराजस्य पुनर्जीवनं जीवितमात्रेण बहुसुवर्णदानं किमप्यद्भुतमिव प्रतिभाति । सम्भावयामि खलु, कश्चिदन्यकायानुवेशविद्याविचक्षणो महात्मा निजमीहितसाधनार्थमिदमन्वतिष्ठत् । अनेन पुनरात्मकाये गृहीते नृपविहीना वयं भविष्यामः, अतोऽस्य कुत्रापि स्थितमेतद्विग्रहं विनाशनीयम् यथा नायं पुनरात्मविग्रहं प्रतिपद्येत । इति विचिन्त्य शीघ्रगामिनं तुरङ्गमारुह्य समन्तान्मृगयितुं सुरसरित्कूलेन गच्छन् कदा महात्मा सुविद्यो निजशरीरमाविशेदिति चिन्तासमाकुलमानसं

सुशीलमपश्यत् । दृष्ट्वा च तं स एवायं जनो यो महाराजतो लक्षसुवर्णानि गृहीतवानित्यवधारितवान् । लक्षमितद्रव्यप्राप्तावप्याकुल इवायं दृश्यते । अतोऽत्रैव किमप्यालोकनीयमित्यालोच्य तुरङ्गादवातरत् । अवतीर्य च तत्रैकजटिलशरीरमपश्यत् । ततश्च कस्येदं शरीरमिति तच्छरीररक्षकं पुरुषद्वयमपृच्छत् । एवं पृच्छ्यमानाभ्यां ताभ्यां यदा न सम्यगुत्तरितं तदैतच्छरीराधिष्ठात्रैव महाराजशरीरमनुविष्टमित्यवधार्य बहुभिः काष्ठैस्तच्छरीरं ददाह । कुटिलाशयाविमौ कदाचित्कोऽप्युपायं विधास्यत इत्यवगत्य च शिलानिबद्धौ तौ जले निचिक्षेप ।

अथ महाराजशरीरमनुविष्टः सुविद्यो नाम जटिलो निजसिद्धविद्यामहिम्ना मच्छरीरं राक्षसेन दग्धमित्यवगत्य शरीरवात्सल्येन मनसि नितरां चुक्षोभ । ततश्च कियत्कालानन्तरं मन्त्रिराक्षसो व्यचिन्तयत् ।

मयि प्रवृत्ते किमपि प्रवक्तुं चित्तं समासज्जति कौतुकेषु ।
मयि स्थिते संसदि वक्रनासं सम्बोध्य सम्भाषणमातनोति ॥

इति विरक्तो महाराजो निजशरीरविनाशाविर्भूतविपुलरोष इव प्रतिभाति । अतो नात्रावस्थानं युक्तम् । यतः—

अन्तकः कुपितो यस्मिन् तदन्तं कुरुते हि सः ।
राजा तु कुपितः सर्वकुलस्यान्तं करोत्यलम् ॥

इत्यालोच्य सायं पुरोपान्तस्थितसुरसदनमहोत्सवावलोकनव्याजेन सपरिवारो राक्षसः कुसुमपुरं जहौ । ततश्च पर्वतेश्वर एव साम्प्रतं गुणज्ञः श्रूयते स एवाश्रयितव्य इति निश्चित्य तमुपाससाद ।

अथ नीतिविचक्षणधुरीणः शकटार एव प्रधानाऽमात्यपदमलञ्चकार । कदाचित् महाराजस्य मृगयाभिलाषामालोक्य प्रधानामात्यः शटकारोऽपि महाराजमनुगच्छन् विविधपशुमृगयाविहारेणातिशयं प्रसादयामास । मृगानुसरणेनातिनिविडविपिनमध्यमाविष्टं तुरङ्गमारूढं महाराजमेकः शकटार एव तुरङ्गमारूढोऽनुवव्राज, नान्येऽनुयायिनस्तमनुसर्तुमशक्नुवन् । ततश्च प्रधानामात्यः शकटारो महाराजं श्रान्तं क्षुत्पिपासाकुलञ्च वीक्ष्य तुरङ्गादवतीर्य विपिनकदेशे निजोत्तरीयवसनास्तरणे समुपवेश्य जलमाहर्तुं जगाम । इतस्ततो भ्रमन्नसौ शकटारो विविधजलकुसुमशोभिनं प्रशस्तजलं जलाशयमेकं प्राप । ततस्तस्मिन् जलाशये सम्यगवगाह्य कमलदलविनिर्मितपुटेन जलं पिबन् यावत्समन्ताद्वीक्षतेस्म, तावदेकां लिखितवर्णां कामपि

शिलां जलेऽवलोकयत्। इदमेव तत्र लिखितमासीत्—

अत्युच्छ्रिते मन्त्रिणि पार्थिवे च विष्टभ्य पादावुपतिष्ठते श्रीः।
सा स्त्रीस्वभावादसहा भरस्य तयोर्द्वयोरेकतरं जहाति॥

तुल्यार्थं तुल्यसामर्थ्यं मर्मज्ञं व्यवसायिनम्।
अर्द्धराज्यहरं भृत्यं यो न हन्यात् स हन्यते॥

ततश्च तां शिलामवलोकमानोऽसौ शकटारो मनसि व्यचिन्तयत्, शिलायामेतस्यां किमर्थमिदं केन लिखितमिति, अथवैतादृशोऽहमेवास्मीत्यतो मदर्थमेव ब्रह्मणा लिखितमिति। अभाग्यवशान्महाराजदृष्टिगोचरीभूतैषा शिला नूनमस्मत्प्राणहारिणी भविष्यतीति निश्चित्य तां शिलामन्यथा विधाय तत्रैव संस्थाप्य कमलदलपुटेन जलमादाय महाराजमुपाजगाम। महाराजस्तु शकटारानीतजलं पीत्वाऽपि तृप्तिमलभमानः तदैव जलाशयमागत्य तस्य च शिशिरसोपानप्रान्तलग्नशिलातले पादौ निधाय समन्तादतिनिर्मलजलं पश्यन् एकत्र कलुषितं जलं वीक्ष्य कथमत्र कलुषितं जलमिति विचारयन् तदन्तर्जले करं प्रसार्य सकर्दमां शिलामेकामस्पृशत् तां शिलामुत्थाप्य जलेन प्रक्षाल्य तत्र लिखितं तदेव पद्यद्वयं पपाठ।

अनन्तरं शकटारो जलं पातुं गतस्य महाराजस्यातिकालविलम्बमवगत्य शिलाधिगमं सम्भाव्य तदन्वेषणव्याजेन तत्रागत्य शिलालिखितपद्यदत्तदृष्टिं महाराजं वीक्ष्य ममैवायमनर्थ आपतित इति व्यचिन्तयत्।

स्वयं गते जगज्जालं गतमेव न संशयः।
स्वयं जीवति तत्सर्वं जीवतीत्येव निश्चयः॥
धर्मार्थकाममोक्षाणां कारणं स्वस्य जीवनम्।
तस्य सत्त्वे त्वधर्मोऽपि परिहर्त्तुं लघुर्भवेत्॥
अश्वमेधसहस्राणि वाजपेयशतानि च।
आत्मप्राणतुलां यान्ति नैव विज्ञानकोटयः॥

इत्थमालोच्य तामेव लिखितवर्णां महाशिलामवनपतिशिरसि प्रहृत्य तं गतजीवनं विधाय तस्य तुरङ्गं क्वचिन्निबिडकानने विहाय ततोऽतिदूरमागत्य नृपान्वेषणमिव कुर्वन् बभ्राम। ततश्च विविधास्त्रशस्त्रविद्याविचक्षणेषु महाराजमनुगतेषु सैन्येषु सम्प्राप्तेषु महाराजोदन्तं तानपृच्छत्। एवं पृच्छ्यमानास्ते समब्रुवन्—अमात्यशकटार! परमकारुणिको दानदयादाक्षिण्यादिगुणगौरवग्रस्तो महाराजो न दृष्ट इति

तैरेवमुक्तोऽसौ शकटारः तैरेव सह समन्तादरण्यानि विचरन् दुःखसंविग्न इव पुरमाजगाम ।

अथ पुरमागतोऽमात्यशकटारः तत्र महाराजमपश्यन् तदन्वेषणार्थमनुचरान् दिक्षु प्रस्थाप्य स्वयमप्यनेकसैन्यसमेतो महाराजमन्वेष्टुमितस्ततो वनानि परिभ्रमन् तमेवाश्वं प्राप, न तु महाराजम् । ततः सर्वे समेत्य चिन्ताकुलितमानसाः पुरमेव शोकाकुलं व्यधुः। अमात्यशकटारस्तु-हा क्षितिपते ! कास्मान् परित्यज्य गतोऽसि, उत्तरं देहि, इति चिन्ताग्रस्त इवोच्चैश्चक्रन्द । सर्वैरनुयायिभिः प्रतिबोधितोऽपि स प्राणं त्यक्तुं प्रतिजज्ञे ।

अथ शोकाकुले सावरोधे कुसुमपुरजने वक्रनासप्रभृतिमन्त्रिणो मिलित्वा तं प्रधानामात्यं शकटारं संप्रबोध्य नव नन्दसुतान् सान्त्वयित्वा महाराजस्यौर्ध्वदैहिककृत्यमपूरयन् । ततश्च कल्याणवासरे प्राप्ते महाराजस्य ज्येष्ठसुतं सिंहासने समुपवेश्य समभिषिषेच । अन्ये च ते नृपतिपुत्रा अग्रजं सिंहासनारूढं समीक्ष्य पितरमिव समुपतस्थुः । कदाचिदसौ भूपतिः समवयस्कैरनेकैः सुहृद्भिः सह विहरन् उद्याने क्वचित्तरुतले समुपविष्टः पितृमरणशोकातुरः शकटारेऽसन्निहिते वक्रनासादीनपृच्छत्—मन्त्रिणः ! मम पितुर्यथावद्वृत्तमभिधत्त यूयमिति ।

इति नृपतिवचनमाकर्ण्य वक्रनासादयो मन्त्रिणस्तमब्रुवन्-महीजाने, कदाचिद्देवस्य पिता महाराजो नन्दो मृगयार्थं प्रधानामात्येन शकटारेण सह वनं जगाम । तत्र तौ समन्तान्मृगयार्थं भ्रमन्तौ त्यक्तसकलानुयायिनावतिदूरदेशवर्त्तिनौ बभूवतुः । ततः कियत्कालानन्तरं मन्त्रिणा शकटारेण नगरं समेत्य तत्र महाराजस्याप्राप्तिवार्त्तामुद्घोष्य पुनस्तमन्वेष्टुं वनंगतेन तुरङ्ग एवानीतो न तु महाराज इत्येतावन्मात्रवृत्तान्तवेदिनो वयमिति ।

श्रुतामात्यवचनो नृपतिः विविधविचाराकुलमानसः क्षणं तूर्ष्णीभूय विश्वस्तान् बुद्धिशालिनो दूतानाहूय भवन्तो यथावत्पितृकालमवृत्तान्तमन्विष्यन्तु कृतकार्येभ्यो भवद्भयो विपुलधनं प्रदास्यामीत्यादिश्य स्वयमन्तःपुरं प्राविशत् । इत्थमवनिपतिसमुदीरितं वचो निशम्य तेऽब्रुवन्—राजन् ! नास्माकं किञ्चिदपि तद्वृत्तमवगतमस्ति । ततश्च क्रुद्धो नृपस्तान्प्रत्यब्रवीत्-येन केनाप्युपायेन युष्माभिर्वृत्तमानेयं नो चेत्प्राणदण्डेन योजिता भविष्यथेति ।

अनन्तरं भयाकुलमानसास्ते सर्वत्रानेकोपायेन महाराजवृत्तान्वेषणं कुर्वन्तोऽपि

दैववशादलब्धमहाराजवृत्ता अभवन् । ततश्च तेषु कश्चिद्वृद्धवयस्कः कदाचिन्नगरोपान्तवर्त्तिनस्सरसस्तीरे समुपविष्टं तापसवेशधारिणं कमपि पुरुषमपश्यत् । स च तापसः भयाकुलमानसं तं वीक्ष्य सकलवृत्तमपृच्छत् । तापसवचनमाकर्ण्य वृद्धोऽब्रवीत्—भगवन् ! कदाचित् प्रधानामात्येन शकटारेण सह मृगयार्थं वनं गतस्य महाराजस्य तदाप्रभृत्यदर्शनादतिचिन्तितो नृपस्तद्वृत्तान्तोपलब्धयेऽस्मान् समादिशत् । कृतकार्या वयं समागताश्चेत्पारितोषिकेनाऽकृतकार्याश्चेत्प्राणदण्डेन योजिता भविष्याम इति ।

तदुक्तिमाकर्ण्य स तापसोऽतिभयाकुलं तं वृद्धमब्रवीत-तात ! चिन्तां जहीहि, अहमेव तव कार्यसाधकोऽस्मि, द्रुतं राजसन्निधिं समेत्य निवेदय, नगरोपान्तवर्त्तिसरस्तीरवास्तव्यः कश्चित्तापसो महाराजगूढवृत्ताभिज्ञोऽस्तीति । इति तापसोक्तिमाकर्ण्य प्रसन्नहृदयोऽसौ स्थविरो द्रुतं राजानमब्रवीत्—राजन् ! महाराजनिगूढवृत्तान्वेषणं कुर्वता मयाऽद्य सायं कश्चित्तापसो दृष्टः स तु मामप्राप्तमहाराजोदन्तं कलुषितमानसं वीक्ष्य कृपया मामाहूय मदुदीरितमखिलवृत्तमाकर्ण्य राजान्तिकं गतेन मया सर्वं निगूढवृत्तमभिधातुं शक्यते इति समभ्यधात् । तदाकर्ण्य सत्वरं देवपादमूले निवेदितुमागतोऽस्मि, अतः परं देवः प्रमाणमिति । ततश्च राज्ञा समादिष्टोऽसौ शीघ्रमेव तं तापसं राजान्तिकमानीतवान् । राजा समागतं तापसं प्रणम्य प्रशस्तासने समुपवेश्य प्रत्यब्रवीत्-भगवन् ! यथावत् तातवृत्तमभिधेहि इति । नृपतिवचो निशम्य-सिद्धमेव निजकार्यं जानीहि, परदिने निखिलवृत्तमभिधास्यामीति तापसोऽभिधाय निजाश्रमं गतो नृपतिश्चान्तःपुरम् ।

अनन्तरं शीघ्रमेवायमर्थो निश्चेतव्य इति चिन्तयन्नसौ तापसो वीरसाधनमचिन्तयत् । प्रातरुत्थाय निगूढवृत्तज्ञानोपयोगिद्रव्यसम्पादने तं वृद्धं नियोज्य श्मशाने शूलारोपितं पुरुषमेकमादाय सायं गङ्गोदकेन संस्नाप्य चितामेकामासिच्य तत्र कृतपूजनं कृतसिन्दूरतिलकं कृतरक्तचन्दनं रक्तकरवीरदामनिबद्धसर्वाङ्गं सताम्बूलमुखमुत्थाने निधाय चरणकरशिखासु तत्तन्मन्त्रैः पञ्चभिः कीलकैः कीलयित्वा मत्स्यमांसादिविविध बलिपूजासाधनानि सम्पाद्य विस्रंसितचिकुरभारो वामकरकलितनरकपालमालः कृतसिन्दूरतिलकः कृतरक्तचन्दनानुलेपनो रक्तकुसुमस्रग्भूषितकण्ठः करधृतासिः सताम्बूलमुखः कृतनयनाञ्जनः त्यक्तपरिधानवस्त्रः तच्छवहृदयबद्धवीरासनो दिग्बन्धात्मरक्षादिकं विधाय त्यक्तभयः दिक्षु विदिक्षु च विकीर्णक्षेत्रपालादिबलिः तिरस्करिणी-

न्प्रणम्य महाकालीं ध्यात्वा रात्रौ मन्त्रजपमकरोत् । ततश्च नानासिद्धिविनाशिघो-रानेकरूपभूतप्रेतपिशाचादीन् तत्तद्बलिभिस्तत्तद्विद्याप्रभावैश्च निराकुर्वन् मन्त्राक्षराणि पठन् सहसा निशीथान्तिमयामे प्रदीप्ततेजोराशिं ददर्श । ततश्च देवीचरणकमलं ध्यायन् प्रशस्तधीर्देवीं भद्रकालीमपश्यत् । तां वीक्ष्य दण्डवत्प्रणम्य तेन स्तुता सा वत्स! प्रसन्नाऽस्मि वरं वृणीष्वेति तमब्रवीत् । मातः! महाराजस्य वृत्तं ब्रूहीति तापसेनाभिहिता सा तद्वृत्तमभिधातुमारेभे । भद्र! नगरनिकटवर्तिनः पातालकन्दरनामपर्वतस्य कन्दरातटे स्थितस्य वटवृक्षस्यान्तिके वापीजले निहितशिलालिखितश्लोकद्वयतात्पर्यदत्तमानसं नृपं मन्त्री शकटारो महाशिलां प्रहृत्य पुरन्दरपुराङ्गणातिथिं व्यधात । सम्प्रत्यपि तत्रैव तस्यास्थीनि सर्वाण्यलङ्करणानि च सन्तीति प्रतिपाद्य साक्षादन्तर्दधे ।

अनन्तरमसौ तापसः स्थविरेण तेन सह नृपान्तिकं समेत्य जगाद—राजन्! देव्यनुकम्पया निखिलवृत्तमवगतं मया परं न शक्यतेऽभिधातुम्, यतः स्वायत्तसिद्ध्यन्यायत्तसिद्ध्युभयायत्तसिद्धीनां राज्ञां मध्ये भवानन्यायत्तसिद्धिरेवास्ति । इदं च वृत्तमन्यमेवानुसरतीति । ततश्च—महात्मन्! स्वाधीनसिद्धिमेव मामवेहीति नृपतिवचनमाकर्ण्य सर्वं देव्युदीरितं तापसोऽभ्यधात् । तापसोक्तिमाकर्ण्य प्रसन्नहृदयो नृपतिस्तस्मै तपस्विने बहून्यलङ्करणानि रत्नानि च समर्प्य शिलालङ्करणादिकमानेतुं तेन स्थविरेण सह तं प्राहिणोत् । स च तापसः परदिने स्थविरेण सह देव्युक्तमार्गेण तत्र गत्वा शिलालंकरणादिकमानीय नृपान्तिके निधाय निजाश्रमस्थो बभूव । ततश्च नृपतिः तान्येव सर्वाणि महाराजशरीरालंकरणानीति कञ्चुकिवचो निशम्य शिलालिखितश्लोकाभिप्रायं विचिन्त्य पितरञ्चोभयायत्तसिद्धिमवेत्य शकटारेणैव दुःस्वभावेन सर्वमिदमनुष्ठितमिति निश्चित्य वस्त्रेण शिलामावृत्य वक्रनासादिमन्त्रिणः समाहूय सर्वमुदन्तमभिधाय शकटारमाहन्तुमादिदेश । तदनन्तरमसौ नृपः शकटारमाहूय तस्मै तद्वृत्तमभिधाय कालकायाख्यमनुचरमाहूय प्रत्यब्रवीत्—कालकाय! परमनिविडमेकं भूगृहं निर्माय तत्र सपरिवारं दुर्मानसमेनं संस्थाप्य स्वल्पेन तद्द्वारेण पञ्चपलमितं पुराणचणकान्नं तन्मितं जलं च तस्मै प्रतिदिनं देयम्। कस्यापि तत्र गमनं यथा न भवेत्तथा विधेयञ्चेति । कालकायश्च नृपतिवचनमाकर्ण्य तथैव सर्वकार्यं व्यधात् ।

अथ वक्रनासप्रभृतिमन्त्रिण एव नृपतेः राज्यकार्याणि कुर्वन्तिस्म । शकटारश्च बन्धनागारनिक्षिप्ताऽतिशयितखेदमापन्नः सङ्कटवर्म-विकटवर्म-सुमति-मित्रगुप्त-प्रक-

—विकटारनामधेयान् षट् पुत्रान्प्रत्यब्रवीत्—पुत्राः! महत्कष्टमुपस्थितं कश्चिदुपायो चिन्त्यतां येनास्य प्रतिविधानं स्यादिति । ततस्ते विकटारवर्जमब्रुवन्-तात ! स्माकं कोऽप्युपायलेशः स्फुरति, अथ च प्रतिविधानचिन्तनमप्यनुचितम् । मरणनृपवधपातकस्येदृशकष्टप्राप्तिरुचितैवेति । इत्याकर्ण्य सक्रोधो विकटारोऽ-वोचत्, भ्रातरः ! आत्मरक्षार्थमकार्यमपि कृतं चेन्न दोषावहं भवति । किञ्च पितुरपरा-धे निरागसामप्यस्माकमेतादृशदुःखभोगः केवलं राज्ञः कृतघ्नत्वं सूचयति । तु प्रतिविधानमत्र चिन्तनीयम् । ततः शकटारः विकटारमेव प्रतिविधानक्ष-मवगत्य चणकान्नजलादिकं तदर्थमेव प्रकल्प्य स्वयं सपरिवारः सक्रमेण परलो-कवासी बभूव । विकटारस्तु नृपाहितेच्छुर्विशोकः कथञ्चित्कालं व्यतीयाय । कदाचिन्नृपः कालकायननामानं भृत्यमाहूय शकटारस्य साम्प्रतिकां स्थितिमपृच्छत् । च नृपं प्रणम्य प्रत्यब्रवीत्-राजन् ! शिरसा भवदादेशमादाय तावन्मात्रचणकान्न-प्रदानकार्यमात्रं करोमि । नातः परं किमपि वेद्मि इति । ततो नृपतिसमादिष्टो यो ऽत्रनिभवनद्वारमुद्घाट्यास्थिचर्मावशेषं विकटारं मृतकास्थीनि च विलोक्य नृपा-न्तिकं समेत्य व्यजिज्ञपत्-राजन् ! सर्व एव गतप्राणाः परमेको वाऽस्ति चर्मावशेषो श्वासोपलब्धप्राणो जीवतीति । तदाकर्ण्य सञ्जातानुकम्पो नृपः तं बालकं बन्ध-नागारादानाय्य जीवनमात्रमन्नं तदर्थमाज्ञापयत् । स च बालः तेनैवान्नेन स्वगृहे यतः कालमत्यवाहयत् । अत्रान्तरे मन्त्रिराक्षसो व्यचिन्तयत्—

किं देशान्तरलब्धवैभवचयैः सर्वाधिकैः सर्वदा,
यत्रात्यन्तिकबाल्यमित्रसुहृदां दृष्टि र्न सञ्जायते ।
किम्वाऽनेन महत्तरेण महसा तत्राधिकारेण वा,
यत्र द्वेषिजनस्य कापि निकृतिः कर्तुं न वा शक्यते ॥

निजशरीरदाहजनितवैरो नृपभोग्यसम्पदर्जनात्मकोपकारानभिज्ञो नृपस्तदनुयायी शकटारश्चोभौ पञ्चत्वमुपागतौ । तदात्मजश्चोदग्रधन्वा नन्दो निखिलमहीमात्मसा-त्कर्तुमीहमानः सकलकार्यदक्षममात्यं मृगयते । अत इतो निःसृत्य सुहृद्वरचन्दनदास-प्रमुखदासाद्यधिष्ठितं कुसुमपुरमेवाश्रयणीयमित्यालोच्य पर्वतेश्वरं विहाय कुसुमपुरमु-पागमत् । ततश्चोदग्रधन्वना नन्देन राक्षसमागतमवगत्य पैतृकोऽयममात्य इति प्रधा-नामात्यपदं तस्मै प्रादायि । स चामात्यराक्षसो यथोचितं राजकार्यं सम्पादयामास । शकटारात्मजो विकटारस्तु अमात्यराक्षसस्यैवाशयोपचारासक्तो बभूव । तदुपचा-

रप्रीतोऽमात्यराक्षसः तस्मै किञ्चित्पारितोषिकं दातुमियेष । ततो विकटारो नाहं पारितोषिकमिच्छामि, किन्त्वेकमधिकारमिच्छामीति न्यवेदयत् । अमात्यराक्षसश्च तन्निवेदनं निशम्यैकमधिकारं तस्मै दातुं प्रतिजज्ञे ।

कदाचिदमात्यराक्षसो नृपपितुः श्राद्धदिने समुपस्थिते श्राद्धभोजिब्राह्मणं निमन्त्रयितुं विकटारं नियोजितवान् । स च विकटारः तथेति मन्त्रिणो राक्षसस्यादेशमुत्तमाङ्गेनादाय समयोऽस्मत्प्रतिहिंसाया इत्यवगत्य तुरङ्गमधिरुह्य सर्वतस्तथाविधं ब्राह्मणं मृगयन् प्रान्तरदेशे दद्रुविहतकान्तिमतिवृद्धवयस्कं भीषणकुटिलविरलदशनं भ्रूकेशावृतपिङ्गलाक्षियुगलं विवृद्धश्मश्रुभीषणास्यं पिङ्गलोर्ध्वशिरोरुहं निन्दितवेषरूपं दर्भोत्पाटनाय तन्मूलभागेषु माक्षिकप्रक्षेपाकुलहस्तं कमपि तापसमपश्यत् । तमवलोक्य एष ब्राह्मणोऽतिशयोद्योगीव लक्ष्यते इत्यवगत्य तुरङ्गादवरुह्य तमभिवन्द्य बद्धाञ्जलिरब्रवीत् । श्रीमन् !। को भवान्, जन्मना कञ्च देशमलञ्चकार । किञ्च नामधेयं भवतः, कथञ्चास्मिन्निर्जनप्रदेशे प्रचण्डमार्तण्डातिसन्तापवति मध्याह्नकाले किमिदं विधीयते । गोप्यं नोचेत्तर्हि श्रोतुमिच्छामि, इत्याकर्ण्य स तापसः अलमनेन कार्यविघ्नभूतेन सम्भाषणेन इत्यभिदधानोऽपि भूयो भूयस्तेनाऽभ्यर्थ्यमानः दर्भोत्पाटनं विदधदेवाब्रवीत्—अहं ब्राह्मणजातीयः, विष्णुगुप्तो नाम, शिवगुप्ततनयोऽस्मि, कदाचित् स्नातुं जाह्नवीतीरं गच्छन् मे पिता दर्भाङ्कुरविद्धपादस्तदुत्पन्नव्यथयैव परलोकाऽतिथिरभूत् । अत एते दर्भा मम शत्रव एवेति दर्भानेतानुत्पाटयितुं तन्मूलेषु माक्षिकं प्रक्षिपामि, येन तदाकृष्टपिपीलिका दर्भमूलान्तविनाशङ्करिष्यन्ति । एवं क्रमेण सकलमहीतलं निर्दर्भं विधास्यामीति दृढप्रतिज्ञया कार्यमेतद्विधीयते इति । विकटारो ब्राह्मणोक्तिं निशम्य नृपस्यैतेन सह कदाचिद्यदि विरोधो जायते तदा नृपस्य समूलमुन्मूलनं स्यादेव ईदृशं च विरूपं ब्राह्मणं विलोक्य नृपः क्रुद्धो भविष्यत्येव नात्र संदेहः। क्रुद्धेन भूपतिनाऽस्यापमाने कृते ममेप्सितं सिद्धमेव,इति निश्चित्य तमब्रवीत्। अग्रजन्मन् ! कुसुमपुराधिराजस्य परदिने पैतृकं कृत्यं भावि तद्भवन्तं तत्र भोक्तुं निमन्त्रयामीति। अनन्तरमसौ महात्मा नृपनिमन्त्रणनिराकरणमयुक्तमवगत्य, किमिदमस्मत्कार्यविघ्नमुत्पादयसीति विरक्त इव-अस्तु श्राद्धवेलायामेव तत्र गमिष्यामि, न ततः प्राक् न वा गमनोत्तरं क्षणमपि विलम्बं सहिष्ये इत्यभिधाय व्यरमत् । विकटारस्तु तथेति सम्भाष्य तञ्च तापसमभिवन्द्य तुरंगमारुह्य कुसुमपुरमगात् । अमात्यराक्षसाग्रे ब्राह्मणनिमन्त्रणवार्त्तां न्यवेदयत् ।

अथ निश्चितदिने मध्याह्नकाले श्राद्धवेलायामागतं विष्णुगुप्तनामानं ब्राह्मणं योग्यासने समुपवेश्य विकटारोऽन्यत्र गतः। नृपस्तु कृतनित्यक्रियोऽन्तःपुरादागत्य श्राद्धमण्डपे तादृशं विरूपं ब्राह्मणं श्राद्धभोक्तुरासने समुपविष्टमालोक्य क्रुद्धः सन्नब्रवीत्–किं भूतले कश्चिद्ब्राह्मणो नास्ति येन विरूपमीदृशं ब्राह्मणमानीतवान्, विरूपमेतमपसारय, नाहमेनं श्राद्धभोक्तारं कर्तुमिच्छामि, इत्युच्चैरब्रवीत्। नृपवचनं निशम्य विष्णुगुप्तनामा ब्राह्मणः प्रलयकाल इव कोपोद्दीपितः सहसाऽऽसनादुत्थाय भूमौ पादमाहत्य–धिङ्मूर्ख! नृपाधम! मां नावगच्छसि, साम्प्रतमनुभूयतां दुर्विनयस्य फलम्, सर्वैरत्रत्यैर्निशम्यताम्—

मध्येऽस्मिन् निलये हि सर्वविदुषां मूर्द्धाभिषिक्तस्य मे,
यत्रासीदवमानना तदधुना स्तोमं कुशानामिव।
यावन्नन्दकुलं कलङ्कमलिनं नोन्मूलये मूलतः,
तावच्छ्रीशिवगुप्तलालिततनुर्बध्नामि नाहं शिखाम्।

इत्युक्त्वा यः कश्चिदेतद्राज्याभिलाषी स मया सह समभ्येतु इत्यभिदधानो नृपालयादगात्। तस्मिंश्चकाले अस्य नृपस्य पितुर्दासीपुत्रश्चन्द्रगुप्तो नाम मनसि व्यचिन्तयत्–नन्दान्वये कस्मिंश्चिदपि जीवति न कदाचिदपि राज्यलाभो भवितुमर्हति। यदि दैवादतितेजस्विनो ब्राह्मणस्य प्रभावेण मम राज्यलाभः स्यात्तदा सर्वं प्रयोजनं सिद्धम्, राज्यलाभो नोचेत्तर्हि स्थानान्तरेऽपि कालं यापयिष्यामीति तपस्विना सह गमनमेवोचितमिति सम्यगालोच्य तं तपस्विनं ब्राह्मणमनुजगाम। भद्रभट-पुरुषदत्त-हिङ्गुरात-बलगुप्त-राजसेन-भागुरायण-रोहिताक्ष-विजयवर्माणश्च तदनुयायिनस्तमनुजग्मुः। विष्णुगुप्तस्तैरनुगम्यमानो जाह्नवीमुत्तीर्य समचिन्तयत्—

उचितमनुचितं वा कुर्वता कार्यजातं
परिणतिरवधार्या यत्नतः पण्डितेन।
अतिरभसकृतानां कर्मणामाससमाप्तेः,
भवति हृदयदाही शल्यतुल्यो विपाकः।

इतिश्रुतमिदं कार्य कथं सिद्धं भविष्यति, अथवाऽलमेतेन चिन्तनेन। यतः–

हस्ती स्थूलतरः स चाङ्कुशवशः किं हस्तितुल्योऽङ्कुशः,
दीपे प्रज्वलिते विनश्यति तमः किं दीपमात्रं तमः।

वज्रेणाभिहताः पतन्ति गिरयः किं वज्रतुल्यो गिरिः,
बुद्धिर्यस्य गरीयसी स बलवान् स्थूलेषु कः प्रत्ययः ॥
कोऽहं कौ देशकालौ समविषमगुणाः केऽरयः के स्वपक्षाः,
कुत्रेमे कार्ययोगा रिपुसमसुहृदां कीदृशः शक्तिसारः ।
सम्पत्तौ कोऽथ बन्धुः प्रतिहतवचनस्योत्तरं किन्नु मे स्यात्
इत्येवं कार्यसिद्धावव‌हितमनसो नावहास्या भवन्ति ॥

किञ्च सहायबलेनैव सुबुद्धिरपि दाशरथिर्दशाननं विजित्य तदनुजयाय विभीषणायातिप्रीतो लङ्काराज्यमदात् । अतः प्रागेव सहायसम्पादनं विधेयम् । तत्साम्प्रतम् अमात्यराक्षसविहीनं पर्वतेश्वरमेव निजनिर्मितनीतिशास्त्रप्रदर्शनेन स्वाधीनं करोमि, स च पर्वतेश्वरोऽर्द्धराज्यलाभेच्छयाऽवश्यमेव साहाय्यं विधास्यतीति सम्यगवधार्य पर्वतेश्वरान्तिकमुपागमत् ।

अस्मिन्नेव काले विष्णुशर्मा निजसुहृदं जीवसिद्धिनामानं क्षपणकवेशधारिणं विधाय ज्योतिर्विद्याबलेन मन्त्रिराक्षसेन सह कृतसौहार्दं निजकार्यसाधनाय कुसुमपुरमेव प्राहिणोत । सिद्धार्थकनामानं पुरुषं च शकटदासेन सह कृतकृत्रिमसौहार्दं तत्सन्निधावेव स्थातुं नियोजितवान् । स्वयं च राज्यार्द्धप्रदानप्रतिश्रुत्या पर्वतेश्वरं वशीकृत्य तदीयसैन्यसमुदायेन सह कुसुमपुरमुपरोद्धुमुदचलत् । तस्मिंश्च काले भागुरायणो विष्णुगुप्तेन मन्त्रितः पर्वतेश्वरात्मजेन मलयकेतुना सह सौहार्दं व्यधात् । भद्रभटप्रभृतयस्तु मलयकेतोः कुमारसेवकेन शिखरसेनेन सह कृतमैत्रीका आसन् ।

ततश्च चन्द्रगुप्तमतिपरिगृहीत-शक-यवन-किरात-काम्बोजपारसीकप्रभृतिप्रबलतरसैन्यसमन्वित-पर्वतेश्वरसैन्यपरिवृतः—चन्द्रगुप्तेन सहसोपरुद्धं कुसुमपुरं समीक्ष्य नृपः सम्प्राप्तोऽयं समयो निजपौरुषप्रदर्शनस्येति विचिन्त्य सर्वार्थसिद्धिनामानं पितृव्यात्मजं राक्षसनामानममात्यञ्च दुर्गसंरक्षणार्थं नियुज्य भ्रातृगणैः सैन्यैश्च परिवृतो रिपुसैन्यमाविवेश । प्रवर्तमाने संग्रामे साऽनुजो नृपः क्रमेण क्षितितलशायी बभूव । चन्द्रगुप्तस्तु जयध्वनिं निशम्य प्रसन्नमनाः कुसुमपुरं नितरां रुरोध । ततश्च सर्वार्थसिद्धिः तथाविधोपरोधात्परिजनक्लेशमसहिष्णुर्निजान्वयविनाशञ्चेक्षमाणो नितरां खिन्नहृदयः केनापि पथा तपोवनं जगाम । अमात्यराक्षसश्च, चन्द्रगुप्तविद्वेषात्स्वामिकुलविनाशाच्च प्रचुरखेदमापन्नो निजसुहृदि चन्दनदासे पुत्रक-

लग्नादिकं न्यासीकृत्य गुप्तमार्गेण ( सुरङ्गया ) कथञ्चित्पुरान्निर्गत्य सकलराज्यप्रदानप्रतिश्रुत्या पर्वतेश्वरमायत्तं कृत्वा चन्द्रगुप्तमाहन्तुं विषकन्यकां निर्माय जीवसिद्धिक्षपणकद्वारा चन्द्रगुप्तान्तिके प्रेषयामास । ततश्चाणक्यः जीवसिद्धिनाम्नः क्षपणकात्तां विषकन्यकां गृहीत्वा विलासी पर्वतेश्वर एवानया विषकन्यया प्रथमं तोषणीय इति चन्द्रगुप्तमाभाष्य तस्मै तामदात । तत्सम्भोगेन पर्वतेश्वरं गतजीवनं विलोक्य प्रतिज्ञातार्द्धराज्यप्रदानभयात् चाणक्यो घातितवान् ते पितरम् कदाचित्त्वामपि किं करिष्यति को जानातीति रहसि भाययित्वा भागुरायणः पर्वतेश्वरात्मजं मलयकेतुमपवाहितवान् ततश्च विविधोपायैश्चन्द्रगुप्ताय राज्यं दत्वा तद्राज्यस्थिरीकरणार्थममात्यराक्षसमुपसंग्रहीतुं तथा घटनां व्यधाच्चाणक्य इति ।

## अन्यविधा चाख्यायिका ।

केचिन्नन्दा नाम भूपतयो बभूवुः । तेषु ज्येष्ठ उग्रधन्वा नन्दो महीं शशास । तस्य वक्रनासादयो मन्त्रिणश्चासन् । तेषु मन्त्रिषु दण्डनीतिज्ञो राक्षसो नाम राज्यकार्यं करोतिस्म । अस्य भूपतेर्ज्येष्ठमहिषी सुनन्दा नाम बभूव । मुरानाम्नी वृषली तु सौन्दर्यादिगुणैः प्रियाऽभवत् । कदाचिन्नृपो गृहमागतमेकं तपस्विनं भक्त्या सभार्यो भृशमुपचचार । नृपः पूजितस्य तपस्विनश्चरणोदकैः पत्न्यौ सिषेच । ज्येष्ठमहिषीशिरसि नव चरणोदकविन्दवः पतिताः, मुराशिरसि त्वेक एव विन्दुरपतत् । सा च मुरा भक्त्या तं चरणोदकविन्दुमग्रहीत । मुराया भक्तिमालोक्य तापसो नितरां प्रसन्नो बभूव । तापसानुकम्पया मुराया गुणसम्पन्नः पुत्रो जातः । सुनन्दायास्तु बहुगर्भयुक्ता मांसपेशी जाता । अस्याञ्च स्थितान् नवसंख्यकान् गर्भान् तैलद्रोणिषु विनिक्षिप्य राक्षसो यत्नेन पुपोष । ततस्ते क्रमेण परिवर्द्धमाना नव वीरा बभूवुः । पिता तेषां नन्द इत्येव संज्ञां कृतवान् । स्थविरो नृपस्तेषु नवसु राज्यं न्यासीकृत्य मौर्यञ्च सैन्याधिपत्यं विधाय कार्यं जहौ । मौर्यस्य तु चन्द्रगुप्तमुख्याः शतं पुत्रा आसन् । ते च नन्दा दुरात्मानस्तं सपुत्रमन्तर्भूमिगृहमवासयन् ।

कदाचित् सिंहलदेशाधिपतिः मधुच्छिष्टनिर्मितं पञ्जरबद्धं सिंहमेकं जीवन्तमिव विधाय अस्ति कोऽपि युष्माकमेतादृशो बुद्धिमान् यो दुष्टजीवमिमं पञ्जरस्थमेव द्रावयेदिति सन्दिश्य नन्देभ्यः प्रेषयामास । तेषु तूष्णीम्भूतेषु स्थितेषु बुद्धिमान् चन्द्रगुप्त एवातितप्तलोहशूलेन तं सिंहं पञ्जरस्थमेव व्यलापयत् । तदनन्तरं सर्वे नन्दाश्चन्द्रगुप्तस्य मतिवैशद्यमालोक्य विस्मयमापन्नाः वध्यमपि तमन्तर्भूगृहाद्बहिर्निः-

सारयामासुः । तथाविधं तं नासहन्त । दैवपैतृके कर्मणि च न्ययोजयन्त । स च चन्द्रगुप्तः केनापि प्रकारेण समयं प्रतीक्षमाणः तेषामपकाराय कमपि क्रोधिनं विष्णुगुप्तनामानं नीतिज्ञं ब्राह्मणमुपागमत् । तस्यासावतिप्रियो जातः । स च ब्राह्मणः नन्दानां पितुः श्राद्धकृत्ये निमन्त्रितो विरूपत्वात्तैरवमानितोऽग्रासनाच्च्यावितश्च कोपात्करेण शिखामुन्मुच्य नन्दान्मूलनाकांक्षया नन्दवंशविनाशमन्तरा न मम शिखाबन्धनं भविष्यतीति दुस्तरप्रतिश्रुतिमारुह्य शरणागतं चन्द्रगुप्तं राज्यप्रदानोक्त्या समाश्वास्य पुरान्निर्गतः चन्द्रगुप्तश्च निजदण्डभीत्या तत्क्षणमेव पुरान्निर्गत्य कौटिल्य-( चाणक्य )मुपागमत् । स च चाणक्यश्चन्द्रगुप्तमादाय निजसुहृदं विष्णुशर्माणं क्षपणकवेशं विधाय तेनैवोपायेन राक्षसादिमन्त्रिणो वञ्चयन् नन्दराज्यार्द्धपणेन बलवन्तं म्लेच्छराजपरिवृतं पर्वतेश्वरं विनाश्य कुसुमपुरमुपरुरोध । राक्षसमतिपरिगृहीताः सर्वे नन्दाः संग्रामायैव सुसज्जिताः क्रमेण संग्रामे विनाशिताः । राक्षसस्तु स्वामिविनाशात्क्रुद्धः कपटेन चन्द्रगुप्तमाहन्तुमनेकोपायान् व्यधात् । सर्वार्थसिद्धिर्नाम नन्दानां पितृव्यपुत्रः पौरजनातिदुःखमसहिष्णुः रात्रौ सुरङ्गया वनमगात् ।

अथामात्यराक्षसो निजपुत्रादिकं सुहृदि चन्दनदासे संस्थाप्य सुरङ्गया निर्गत्य चन्द्रगुप्तमाहन्तुं क्षपणकद्वारेण विषकन्यां प्रेषयामास । चाणक्यस्तयैव विषकन्यया पर्वतेश्वरं विनाश्य तत्पुत्रं मलयकेतुं स्वानुचरं ( भागुरायणादि ) द्वारा भाययित्वा पुरान्निःसारयामास । राक्षसस्तु पुनश्चन्द्रगुप्तमाहन्तुं कूटयन्त्रादियोजनार्थमेकान्ते दारुवर्मादिसुहृदो नियोजितवान् । चन्द्रगुप्तस्तु सर्वमपि रहस्यमवधार्य तैरपिर्स्वोपायानेव पर्वतेश्वरवधोत्पन्नमयशः क्षालयितुं पर्वतेश्वरभ्रातरं वैरोचकं च व्यनाशयत । चारद्वारा तपोवनस्थं सर्वार्थसिद्धिं च विनाश्य चन्द्रगुप्तमस्वपेचयत् । ततो राक्षसो मलयकेतुं प्रोत्साहयन्नब्रवीत्-राजपुत्र ! सकौटिल्यं चन्द्रगुप्तं निहत्य सर्वं राज्यं तुभ्यं दास्याम्येव । चाणक्यस्तव पितरं मौर्यराज्यार्द्धहर्तारं विषकन्यया घातितवान् । तस्मान्नृशंस एष हन्तव्य एव । त्वयि सर्वं राज्यं समासज्यानृणो भविष्यामि । इत्थं मलयकेतुं प्रोत्साह्य मन्त्रिराक्षसो रिपुविनाशार्थमनेकोपायानकरोत्, परं दैवप्रातिकूल्येन निखिलप्रयासो वैफल्यमुपागतः । अन्ततः स्वयमेव रिपुवशवर्ती बभूव ।

इति मुद्राराक्षसनाटकस्योपोद्घातः समाप्तः ।

# उपोद्घातः ।



आर्यावर्त्तेषु नगरं मगधाऽभिधम् ।
आसीत्तत्र महाराजो जरासन्धो महाबली ॥ १ ॥
ततःप्रभृति भूपालास्सर्वेऽत्रिंशत्समात्पुरा ।
नन्दो बभूव भूपालो नवकोटिशतेश्वरः ॥ २ ॥
आसीद्रत्नावली नाम महिषी तस्य सद्गुणा ।
विख्यातपौरुषा वीरास्तस्यामष्टौ सूनवः ॥ ३ ॥
तस्याद्यश्चन्द्रगुप्ताख्यो मुरादास्यामजायत ।
दासीगर्भोद्भवात्तेनास्त्यक्तो ज्येष्ठोऽपि सोदरैः ॥ ४ ॥
विद्वेषभाजनश्चासौ नितरां खेदसंयुतः ।
कालं क्षपयतिस्मैवं दैवदोषं विचिन्तयन् ॥ ५ ॥
अस्य नन्दस्य भूपस्य कुलामात्या द्विजातयः ।
अभूवन् गुणसम्पन्ना वक्रनासादयस्त्रयः ॥ ६ ॥
तेषु मन्त्रिषु विख्यातो दण्डनीतिविचक्षणः ।
षाड्गुण्यप्रविभागज्ञः शूरो नन्दप्रियो बली ॥ ७ ॥
राक्षसो नाम सद्बुद्धिर्भूसुरः साहसी रणे ।
राज्यकार्यकरो राज्ञः स्नेहपात्रमतीव सः ॥ ८ ॥
अथैकदामहाराजो नन्दस्तीव्रस्वभावकः ।
शाकटारं द्विषन्नेनं पुत्रस्त्रीसहितं क्रुधा ॥ ९ ॥
कारागृहे विनिक्षिप्य पलप्रमितान् सदा ।
चणकान् तन्मितं चाम्बु दातव्यं प्रत्यहं त्वया ॥ १० ॥
यथा न केऽपि गच्छेयुस्तथा तत्र विधीयताम् ।
इति भृत्यं समाहूय कञ्चिदाज्ञापयन्मुदा ॥ ११ ॥
अथ पुत्रान् समाहूय शाकटारस्त्वभाषत ।
पुत्रा दुःखे समुत्पन्ने चेदुपायो विधीयताम् ॥ १२ ॥

परिजनेषु च तेष्वेकः कश्चिदेवमभाषत ।
पितोऽस्त्वेष प्रतीकारस्त्वत्प्राणपरिरक्षणम् ॥ १३ ॥
राजदत्तं जलं चान्नं त्वज्जीवनविधायकम् ।
भवतु प्रीतिकल्याणभाजनं कार्यसाधनम् ॥ १४ ॥
इत्थं निशम्य तद्वाक्यमब्रुवन् बाढमित्यथ ।
प्राणानेवं कृते सर्वं शकटारं विना जहुः ॥ १५ ॥
शकटारस्त्वपकृतौ राज्ञः कृतमतिः सदा ।
प्राणं धारयतिस्मासौ कथञ्चिद्गतविस्मयः ॥ १६ ॥
अपृच्छदेकदा राजा मन्दो भृत्यं नियोजितम् ।
इदानीमस्ति भो भृत्य शकटारस्य का गतिः ॥ १७ ॥
प्रणम्य शिरसा भृत्यो राजानं प्रत्यभाषत ।
अतिरिक्तं जलान्नाभ्यामन्यत्किञ्चिन्न बुध्यते ॥ १८ ॥
निशम्य भृत्यवचनः क्षितीशः कारागृहद्वारकपाटयुग्मम् ।
उद्घाट्य संपश्यतु तेषु भृत्यं समादिशज्जीवति वा न काऽपि ॥ १९ ॥
भृत्यो राज्ञा समादिष्टो मृतकास्थीनि सर्वतः ।
अस्थिचर्मावशेषं तं शकटारञ्च वीक्ष्य सः ॥ २० ॥
सर्व एव मृता राजन्नेकः शकटारनामकः ।
निःश्वासाऽनुमितप्राणो जीवतीति न्यवेदयत् ॥ २१ ॥
भृत्यवाक्यं निशम्यैवं सञ्जातकरुणो नृपः ।
कारागृहाद्बन्धुहीनं शकटारममोचयत् ॥ २२ ॥
शकटारोऽवेक्षमाणः प्रतिहिंसाक्षणं सदा ।
व्यचिन्तयदुपायान् स दुःखसंक्लिष्टमानसः ॥ २३ ॥
अथैकदा नृपद्वेषी शकटारो बहिर्गतः ।
देशभ्रमणकामस्तु चिन्तायमितमानसः ॥ २४ ॥
कान्तारे निविडे दृष्टः शकटारेण कुत्रचित् ।
प्रवृद्धश्मश्रुदुर्वक्त्रो दग्धश्यामकलेवरः ॥ २५ ॥
पिशङ्गमूर्द्धजः कृष्णो निष्पंशो बृहत्तनुः ।
एकैकशः कुशान् सर्वानुन्मूलयितुमानसः ॥ २६ ॥

तक्रं विनिक्षिपन् तेषां कुशानां मूलभागतः ।
विष्णुगुप्ताऽभिधः क्रोधी तेजस्वी मितवाक् द्विजः ॥ २७ ॥
दृष्ट्वा च तं प्रणम्याथ कृताञ्जलिरभाषत ।
के यूयं भगवन् तात नामधेयं किमस्ति ते ॥ २८ ॥
एतस्मिन् तीक्ष्णसन्तापे कान्तारे मध्यवासरे ।
किमिदं क्रियते गोप्यं नोचेत् संश्रोतुमुत्सुकः ॥ २९ ॥
इत्याकर्ण्य वचस्तस्य भूसुरः सोऽब्रवीत् क्रुधा ।
आलापेन किमेतेन कार्यस्य प्रतिबन्धिना ॥ ३० ॥
मुहुरभ्यर्थ्यमानोऽपि कुशानुत्पाटयन् द्विजः ।
अब्रवीच्छकटारं तं रोषसंक्षुब्धमानसः ॥ ३१ ॥
चाणक्यशर्मनामाऽहं ब्राह्मणः साङ्गवेदवित् ।
अधीत्य चतुरो वेदान् ब्रह्मचर्यं समापितम् ॥ ३२ ॥
दिवसाः कतिपयेऽतीताः पाणिग्रहणार्थमेकदा ।
एतेनैव पथा गच्छन्नहं विद्धः कुशाङ्कुरैः ॥ ३३ ॥
तज्जनितक्षताऽशौचादवरुद्धः करग्रहः ।
अतो मे शत्रवो जाताः कुशाः सर्वे महीतले ॥ ३४ ॥
इत्यालोच्य कुशान् सर्वानुन्मूलयितुमानसः ।
तेषां मूलेष्वहं तक्रं प्रक्षिपामि प्रतिक्षणम् ॥ ३५ ॥
सर्वाः पिपीलिका नूनं तक्राकर्षणलोलुपाः ।
तेषामुन्मूलनं शीघ्रं करिष्यन्ति न संशयः ॥ ३६ ॥
कुशानामङ्कुरः सर्वस्तक्रस्पर्शेन नश्यति ।
नाऽङ्कुरो जायते तत्र भूयः शास्त्रस्य सम्मतिः ॥ ३७ ॥
करिष्यामि महीं सर्वां निष्कुशां क्रमशो द्रुतम् ।
इत्थमालोच्य सङ्कल्प्य कार्यमेतद्विधीयते ॥ ३८ ॥
ऋणपावकशत्रूणां क्षुद्राणामपि सर्वथा ।
समूलं ध्वंसनं कार्यमेषां शेषो न भद्रकृत् ॥ ३९ ॥
तथा च—ऋणशेषोऽग्निशेषश्च व्याधिशेषस्तथैव च ।
पुनश्च वर्द्धते यस्मात्तस्माच्छेषं न कारयेत् ॥ ४० ॥

यद्येतस्य तु नन्देन सह जायेत शत्रुता ।
वासना सफला तर्हि वैरनिर्यातनस्य मे ॥ ४१ ॥
इत्थं विनयभक्तिभ्यामालोक्य हृदये मुदा ।
अब्रवीच्छकटारस्तु चाणक्यं परितोषयन् ॥ ४२ ॥
कृपया नगरीमेत्य पाठशालां करोतु ते ।
छायेव पार्श्ववर्ती सन्नुपकरिष्यामि सर्वदा ॥ ४३ ॥
अधुनैवानेकलोकान् सन्नियुज्यैव कर्मणि ।
निष्कुशं भूतलं सर्वं करिष्यामि न संशयः ॥ ४४ ॥
शकटारोक्तमाकर्ण्य चाणक्यस्त्वेवमब्रवीत् ।
अवसन्नगरीमध्येऽनन्तरं ब्रह्मकर्मकृत ॥ ४५ ॥
अथ नन्दस्य विद्वेषी शकटारो मुहुर्मुहुः ।
विचारयति विप्रेण सह भूपस्य शत्रुताम् ॥ ४६ ॥
उपतस्थे पितुः श्राद्धं भूपतेरेकदा तदा ।
नियोजितो राक्षसस्तु मन्त्री विप्रनिमन्त्रणे ॥ ४७ ॥
प्रतिहिंसाक्षणं प्राप्य शकटारो विचारयन् ।
चाणक्यमुपसङ्गम्य विनैवादेशमब्रवीत ॥ ४८ ॥
श्वो भविष्यति भो विप्र नन्दभूपस्य पैतृकम् ।
कृत्यमस्मात्तत्र भोक्तुं भवतोऽस्मि निमन्त्रणम् ॥ ४९ ॥
निशम्याथ वचस्तस्य बाढमित्यब्रवीन्मुदा ।
चाणक्यश्चिन्तयन् काममन्यक्तव्यं निमन्त्रणम् ॥ ५० ॥
परेद्युः श्राद्धवेलायां चाणक्यं समुपस्थितम् ।
श्राद्धायाऽग्र्यासने विप्रं समुपावेश्य सत्कृतम् ॥ ५१ ॥
न साम्प्रतं साम्प्रतं मेऽवस्थानं विस्मयन्निह ।
शकटारो गतोऽन्यत्र कार्यव्याजेन कुत्रचित् ॥ ५२ ॥
कियत्कालान्तरं मन्त्री राक्षसो विदुषा सह ।
श्राद्धमण्डपमागत्य ब्राह्मणेन च दृष्टवान् ॥ ५३ ॥
शकटारसमानीतं शास्त्रनिन्द्यं महासुरम् ।
परिचयेन च विज्ञाय राजानं स न्यवेदयत् ॥ ५४ ॥

आज्ञया भवतो देव सर्वलक्षणलक्षितः ।
ब्राह्मणोऽयं समानीतो मया सद्धर्मतत्परः ॥ ५५ ॥
एतस्मिन् समये देव शकटारस्तु वञ्चकः ।
कृष्णकार्यं शावदन्तं रक्तनेत्रं कुलक्षणम् ॥ ५६ ॥
उपनिमन्त्र्य द्विजं कञ्चिदासने सर्वथोत्तमे ।
निर्ययौ समुपावेश्य स्वनिग्रहभयाकुलः ॥ ५७ ॥
कृतनित्यक्रियो राजा श्राद्धमण्डपमागतः ।
तादृशाचरणं श्रुत्वा शकटारस्य रोषवान् ॥ ५८ ॥
आगत्य च विरूपं तं समुपाविष्टमासने ।
दृष्ट्वा शिखां समाकृष्य क्रुद्धो भूमावपातयत् ॥ ५९ ॥
पादाघातेन सदसि कृष्णसर्प इव द्विजः ।
तादृशेनापमानेन चाणक्यस्त्ववमानितः ॥ ६० ॥
तेजस्वी गर्जनं कुर्वन् कम्पान्वितकलेवरः ।
सहसोत्थाय वादेन भूमिमाहत्य पाणिना ॥ ६१ ॥
शिखामुन्मुच्य रोषेण नन्दवंशादिधक्षया ।
उच्चैरभाषत क्रुद्धः समुज्ज्वलितवह्निवत् ॥ ६२ ॥
राजन्ननुभवेद्दानीमविनीतैः फलं बहु ।
सभ्याः शृण्वन्तु मद्वाक्यं नन्दवंशान् सुगर्वितान् ॥ ६३ ॥
नाहमेताननुन्मूल्य शिखां बध्नामि कर्हिचित् ।
कृत्वा प्रतिश्रुतिं तामामिति चाणक्यभूसुरः ॥ ६४ ॥
कालोरगीमिवात्मीयां कृष्णवर्णां शिखां क्रुधा ।
कम्पयन् क्रोधसंवेगान्निर्ययौ नृपतेः पुरात् ॥ ६५ ॥
नन्दराज्याभिलाषं यो मया सार्धं समेतु सः ।
सभामन्तुल्लवर्ती सन् तावस्वरमभाषत ॥ ६६ ॥
तस्मिन् क्षणे चन्द्रगुप्तो मनसीत्थं व्यचिन्तयत् ।
सति नन्दान्वये नैव कदाचिद्राज्यसम्भवः ॥ ६७ ॥
भाग्यादेतत्प्रसादेन राज्यमासाद्यते यदि ।
महत्प्रयोजनं सिद्धं भविष्यति न संशयः ॥ ६८ ॥

यद्यभाग्यवशाद्राज्यं लब्धं न स्यादहं तदा ।
आत्मानं पालयिष्यामि गत्वा देशान्तरं सदा ॥ ६९ ॥
तदनेन सहैवाद्य गमनं युक्तमस्ति मे ।
इति निश्चित्य हृदये चन्द्रश्चाणक्यमन्वगात् ॥ ७० ॥
चन्द्रगुप्तस्य ये भृत्या नाम्ना भद्रभटादयः ।
स्वामिनं गतमालोक्य तेऽपि चाणक्यमन्वगुः ॥ ७१ ॥
विप्रश्चाणक्यनामासावुपायैर्बहुभिस्ततः ।
राज्यलक्ष्मीं मुरापुत्रे विन्यस्य सफलक्रियः ॥ ७२ ॥
तत्स्थिरीकरणायासौ मन्त्रिणं राक्षसाऽभिधम् ।
संग्रहीतुं तथा युक्तिं कर्तुमारब्धवान् द्विजः ॥ ७३ ॥

इति मैथिलवंशोद्भवठक्कुरोपनामक श्रीकनकलालशर्म्मणा विरचितो
मुद्राराक्षसस्योपोद्घातः समाप्तः ।



# मुद्राराक्षसस्य संक्षिप्तेतिवृत्तम् ।

प्रथमे नीतिविदुषश्चाणक्यस्य द्विजन्मनः ।
नीतिचर्चा, चरद्वारा श्रवणञ्चारिकर्मणाम् ॥ १ ॥
द्वितीये वर्णितो नूनं चर-राक्षसयोर्द्वयोः ।
संवादो निजयत्नस्य नैष्फल्याकर्णनं ततः ॥ २ ॥
तृतीये विष्णुगुप्तस्य कौमुद्याख्योत्सवस्य च ।
प्रतिषेधच्छलेनैव कलहो वृषलेन तु ॥ ३ ॥
चतुर्थे तु चरद्वारा विषादो राक्षसस्य च ।
वृत्तान्तश्रवणाज्जातः कुसुमाख्यपुरस्य तु ॥ ४ ॥
प्रयोगकरणस्यापि विचारो वर्णितः खलु ।
पर्वतेश्वरपुत्रेण सार्कं मलयकेतुना ॥ ५ ॥
पञ्चमे राक्षसे जाता मलयकेतोश्च शत्रुता ।
निष्कासनं राक्षसस्य वर्णितं कविना सुधा ॥ ६ ॥
षष्ठे चन्दनदासस्य शूलारोपणसंश्रुतेः ।
राक्षसस्य विषादश्च वर्णितो बहुशः किल ॥ ७ ॥
तस्य पुष्पपुरे रम्ये प्रवेशो दीनचेतसः ।
निर्देशश्चात्मनिर्देशो मित्रत्राणाय तस्य तु ॥ ८ ॥
सप्तमे प्राणदानं तु चन्दनदासविमोचनम् ।
मौर्यमन्त्रिपदारोहो राक्षसस्य च वर्णितः ॥ ९ ॥



काशीस्थ गवर्नमेंट संस्कृत कालेज—

साहित्यमध्यमतृतीयखण्डोपयोगि—

पीयूषवर्षश्रीजयदेवकविप्रणीतः

# चन्द्रालोकः ।

( सोदाहरण-व्याख्यासहितः )

**पौर्णमासी—कथाभट्टीयाभ्यां संस्कृत-हिन्दीटीकाभ्यां संवलितः ।**

( प्रश्नपत्रसहितः )

पृष्ठ संख्या ३८० —— मूल्य [illegible]

प्राप्तिस्थानम्—

श्रीहरिकृष्णनिबन्धभवनम्—

बनारस सिटी ।

# नाटकेऽस्मिन् क्रमप्रविष्टानि पात्राणि ।

## पुरुषाः ।

### प्रथमाऽङ्के ।

सूत्रधारः—तदाख्यः प्रधाननटः ।

चाणक्यः—राजनीतिविद् ब्राह्मणः ।

शार्ङ्गरवः—चाणक्यस्यान्तेवासी ।

चरः—यमपटधारि चाणक्यदूतः ।

सिद्धार्थकः—चाणक्यदूतः ।

चन्दनदासः—राक्षसमुहृत् ( श्रेष्ठिविशेषः ) वैश्यजातीयः ।

### द्वितीयाऽङ्के ।

विराधगुप्तः—आहितुण्डिकवेशो राक्षसप्रणिधिः ।

राक्षसः—नन्दराजप्रधानाऽमात्यः ।

जाजलिः—मलयकेतोः कञ्चुकी ।

प्रियंवदकः—राक्षसाऽनुचरः ।

शकटदासः—राक्षसस्य मित्रम् ।

### तृतीयाऽङ्के ।

वैहीनरिः—चन्द्रगुप्तस्य कञ्चुकी ।

चन्द्रगुप्तः—कुसुमपुरस्याऽधिपतिः । ( नायकः )

### चतुर्थाऽङ्के ।

करभकः—पथिकवेषधारी राक्षसस्य गुप्तचरः ।

दौवारिकः—द्वारपालकः ।

वज्रहस्तपुरुषः—नृपागमनसूचकपुरुषविशेषः ।

मलयकेतुः—पार्वतीयराजा । ( प्रतिनायकः )

भागुरायणः—मलयकेतुमित्रवेषधारी चाणक्यदूतः ।

जीवसिद्धिः—क्षपणकवेषधारि ज्योतिर्वित् चाणक्यप्रतिनिधिः ।

पञ्चमाऽङ्के ।

भासुरकः—पर्वतपुत्रस्य मलयकेतोरनुचरः ।

षष्ठाऽङ्के ।

सुसिद्धार्थः—सिद्धार्थकसुहृत ।

पुरुषः—छद्मवेशी चाणक्यचरः ।

सप्तमाङ्के ।

वज्रलोमकः—प्रथमचाण्डालवेशी सिद्धार्थकः ।

वेणुवेत्रकः—द्वितीयचाण्डालवेशी सुसिद्धार्थकः ।

चन्दनदासात्मजः ।

मौर्यस्यरक्षकाः ।

पुरुषः—वार्तावहः ।

स्त्रियः ।

प्रथमाऽङ्के

नटी—सूत्रधारस्य स्त्री ।

शोणोत्तरा—मौर्यस्य प्रतीहारी ।

पञ्चमाङ्के ।

विजया—मलयकेतु प्रतिहारी ।

सप्तमाङ्के ।

कुटुम्बिनी—चन्दनदासस्य स्त्री ।

अस्मिन्नाटके चन्द्रगुप्तो नायकः । चाणक्य उपनायकः । वीरा रसः ।

---

प्राप्तिस्थानम्—

श्रीहरिकृष्णनिबन्धभवनम्,

बनारस सिटी ।

# मुद्राराक्षसम्

## प्रथमोऽङ्कः ।

(१) धन्या केयं स्थिता ते शिरसि ? शशिकला, किन्नु नामैतदस्या ?
नामैवास्यास्तदेतत् परिचितमपि ते विस्मृतं कस्य हेतोः ? ।
नारीं पृच्छामि नेन्दुं, कथयतु विजया न प्रमाणं यदीन्दु-
र्देव्या निन्होतुमिच्छोरिति सुरसरितं शाठ्यमव्याद्विभोर्वः ॥ १ ॥

---

श्रीगणेशाय नमः

ध्यात्वाऽम्बिकापदद्वन्द्वं मुद्राराक्षसनाटकम् ।
करोमि भावबोधिन्या व्याख्यया समलङ्कृतम् ॥

अथ

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ॥

इत्याद्यालङ्कारिकोक्तिप्रामाण्यादतिशयितकल्याणसाधकं काव्यमित्यवधार्य चिकीर्षितमुद्राराक्षसनाटकपूर्त्तिमीहमानः श्रीविशाखदत्तनामा महाकविः ।

आशी-र्नमस्क्रिया-वस्तुनिर्देशो वापि तन्मुखम् ।

इति शिष्टोक्त्या निजेष्टदेवगुणकथनपुरस्सरमाशीर्वचनरूपमङ्गलमन्तेवासिशिक्षार्थं नान्द्या रचयति—धन्येति । निजभर्तृशिरःस्थितां दिव्ययुवतिरूपां सुरसरितमीर्ष्यया

---

(१) नान्दीपद्यमिदं तावद्गौरी-शङ्करयोर्द्वयोः ।
विद्यते नाटकस्यादौ युक्तं प्रश्नोत्तरात्मकम् ॥

आशुबोधाय पुनरिदं पद्यं संक्षेपेण व्याख्यायते—

( हे शिव ! ) ते तव त्रैलोक्याऽधिपतेरपि, शिरसि मस्तके स्थिता विद्यमाना ( अत एव ) धन्या श्लाघ्या इयं साक्षाद्दृश्यमाना ( स्त्रीरूपा ) का किन्नामधेयेति गौरीप्रश्नः । शशिकला—मच्छिरसि स्थिता शशिनश्चन्द्रस्य कला षोडशो भागोऽस्तीति शिवस्योत्तरम् । अस्या भवच्छिरः

पश्यन्ती गौरी शंकरम्प्रति जिज्ञासते—( हेस्वामिन् ! ) ते तव कोऽवयवेऽस्या पीत्यर्थः । शिरसि उत्तमाङ्गे स्थिता विद्यमाना धन्या श्लाघ्या इयं साक्षाद्दृष्टिगोचरीभूता का किन्नामधेयेति । शिरःस्थितायाः सुरसरितो धन्यत्वोक्त्या तदपेक्षया स्वदौर्भाग्यं सूचितम् । किञ्च ( प्रलोभनशीलयोषितो धन्याशब्दाऽभिधेयत्वात्ताहशायाः कथं वशीभूत इत्युपालम्भस्यापि ध्वनिः ) । यद्वा—विपरीतलक्षणातो धन्याशब्दस्याऽऽधन्यार्थकत्वेन त्वदुत्तमाङ्गस्थितायामधन्यायामतिशयाऽनुरागस्तव मूढत्वसूचक इति भावो व्यङ्ग्यः । स्वोत्तमाङ्गस्थितां नारीं निह्नोतुकामो भगवान् हरो गौरीप्रश्नं स्त्रीविषयकमवधार्य शशिकलाया अपि स्त्रीत्वेन चातुर्यप्रकटनपूर्वकमुत्तरयति—शशिकलेति । इयं मच्छिरःस्थिता शशिनश्चन्द्रस्य कला भागविशेषः, अवयवभूतेति यावत् । अस्तीति शेषः । नहि मस्तकालङ्करणभूतेन्दुकलावलोकनाच्छोकविधानौचित्यमिति भावः । शशिकलेति तदभिधानमवगच्छन्ती गौरी पुनर्जिज्ञासते—किन्नु नामैतेति । नु भोः अस्याः स्त्रियः एतत् शशिकलेति नाम किम्, मत्प्रश्नविषयीभूतस्त्रियः किं शशिकलेति संज्ञेति तात्पर्यम् । (अत्र द्वयोः समानचातुर्यप्रकटनम्)। समस्यमानस्याप्युक्तशब्दस्य (समासे खलु भिन्नैव शक्तिरि)ति शब्दशास्त्रमतानुसारेण विशिष्टार्थप्रतिपादकत्वादस्त्येव तदभिधानत्वमित्युत्तरयति भवानीशः—नामैवेति । अस्या मन्मस्तकालङ्करणभूताया एतच्छशिकलेति नामैव संज्ञैवेत्यर्थः । एतत् ते तव अत्र ( शेषे षष्ठी ) परिचितमपि विदितमपि कस्य हेतोः केन हेतुनेत्यर्थः । अत्र ( 'षष्ठी हेतुप्रयोगे' इति षष्ठी ) विस्मृतमपरिचितमिव जातमित्यर्थः । नहि कारणमन्तरा विशेषतो विदितस्य विस्मृतिसम्भव इति न तवाशङ्कनं युक्तमिति भावः । अस्तु नाम शशिकलाशब्दः स्त्रीलिङ्गस्तथापि चन्द्रा-

---

स्थितायाः शशिकलायाः एतत् शशिकलेति नाम किन्नु किम् इति पुनर्गौरीप्रश्नः । अस्याः शशिकलाया एतत् शशिकलेति नाम एव, ते तव परिचितमपि ज्ञातमपि ( अस्ति )—कस्य हेतोः केन हेतुना विस्मृतम् अज्ञातमिव जातम् इत्युत्तरम् । नारीं भवन्मस्तकस्थितां स्त्रियम्।' ( उद्दिश्य ) पृच्छामि जिज्ञासे इति प्रश्नः । ( अथेदानीं ) यदि इन्दुः इन्दुघटितं वाक्यं मदुक्तम् न प्रमाणम् न प्रामाण्येनाऽभिमतम् ( तदा ) विजया उन्मादकरो मङ्गुः एव कथयतु मदुक्तवाक्य सत्यमसत्यं वेति विचारयतु ( त्वां बोधयतु ) इत्युत्तरम् । इत्येवं प्रकारेण सुरसरितम् गङ्गां देव्याः गौर्याः सकाशात् निह्नोतुं गोपायितुम् इच्छोरभिलाषतो विभोः शिवस्य शाठ्यं चातुर्यम् युष्मान् पायात् ॥ १ ॥

बचस्वरूपस्तदर्थश्चन्द्रपुंस्त्वेन पुल्लिङ्ग एवेति नासौ मत्प्रश्नविषय इत्यविदितपतिकै-तवायास्तस्याः पुनर्जिज्ञासा—नारीमिति । पृच्छेर्द्विकर्मकत्वादहं त्वामिन्दुं चन्द्रं न पृच्छामि ज्ञातुमिच्छामि किन्तु नारीं भवन्मस्तकभूषणरूपां स्त्रियं, नेन्दुविषयको मदीयः प्रश्नोऽपि तु नारीविषयक इति तात्पर्यम् । परमचतुरो हरः पुनरुत्तरयति—कथयत्विति । इन्दुशब्दस्येन्दुवाक्यपरत्वेन यदि नेन्दुवाक्यं मदुक्तं तव प्रमाणत्वेनाऽभिमतं, यद्वा नेन्दुविषयिणी त्वदीया जिज्ञासा तर्हि त्वत्सहचरी निकटवर्तिनी विजयैव कथयतु वदत्विति यावत् । नाऽस्मदुक्तं विश्वासजनकञ्चेद्विजयैवाऽभिदधातु तदिति तात्पर्यम् । इत्येवं पादत्रयोक्तरीत्या देव्याः पार्वत्याः सकाशात् सुरसरितं गङ्गां निह्नोतुं गोपायितुमिच्छोरभिलपतः, विभोर्व्यापकस्य शिवस्य शाठ्यं-चातुर्यं व्याजोक्तिरिति यावत्, वो युष्मानव्यात्पायादित्यभिधेयोऽर्थः । देव्या इत्यत्रापादानत्वविवक्षणात्पञ्चमी, वस्तुतस्तु तत्र चतुर्थ्येव युक्तेति बोध्यम् । शशिकलोक्तिव्याजेन शिरःस्थितसुरसरिद्रूपवस्तुगोपनात्पद्येऽस्मिन् व्याजोक्तिनामालङ्कारः । उक्तञ्च तल्लक्षणं काव्यप्रकाश–साहित्यदर्पण–कुवलयानन्देषु ।

> व्याजोक्तिश्छद्मनोद्भिन्नवस्तुरूपनिगूहनम् ।
> व्याजोक्तिर्गोपनं व्याजादुद्भिन्नस्याऽपि वस्तुनः ॥
> व्याजोक्तिरन्यहेतूक्त्या यदाकारस्य गोपनमिति ।

कपटेन स्फुटवस्तुस्वरूपगोपनं व्याजोक्तिरिति तदर्थः ।

> माधुर्यव्यञ्जकैर्वर्णै रचना ललितात्मिका ।
> अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरिष्यते ॥

इति दर्पणोक्तलक्षणादत्र वैदर्भी रीतिः ।

> चित्तं व्याप्नोति यः क्षिप्रं शुष्केन्धनमिवानलः ।
> सप्रसादः समस्तेषु रसेषु रचनासु चे-
> ति लक्षणात्प्रसादोऽत्र गुणः ।

> म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् ।

इति लक्षणात् स्रग्धरावृत्तम् । मङ्गलं कामयमानेन कविनैतत्पद्यस्य नान्दीत्वेन प्राग् मगणः सन्निवेशितः । धन्येतिधकारनकारेति वर्णद्वयेनारम्भः शुभसूचक इति ॥ १ ॥

अपि च—

(१) पादस्याविर्भवन्तीमवनतिमवने रक्षतः स्वैरपातैः
सङ्कोचेनैव दोष्णां मुहुरभिनयतः सर्वलोकातिगानाम् ।
दृष्टिं लक्ष्येषु नोग्रां ज्वलनकणमुचं बध्नतो दाहभीते-
रित्याधाराऽनुरोधात्त्रिपुरविजयिनः पातु वो दुःखनृत्यम् ॥ २ ॥

---

ननु चिकीर्षितनान्द्या असमाप्तिम्मन्यमानो 'महाकविर्द्वितीयपद्यमवतारयति—अपि चेति ।

पादस्येति । जात्या निर्देशेन पादस्येत्येकवचनं पादयोरिति तदर्थः । तथा च पादयोश्चरणयोः स्वैरपातैः स्वेच्छया विक्षेपैः सञ्चालनैरिति यावत् आविर्भवन्तीं प्रादुर्भविष्यन्तीं ( वर्तमानसामीप्ये वर्तमानवद्वे, त्यनुशासनादप्रथमासामानाऽधिकरण्याच्च भविष्यत्सामीप्ये वर्तमानप्रयोगस्य शतृप्रत्ययस्य चोपपत्तिः ) अवनेर्भूमेः अवनतिं रसातलनिवेशं रक्षतो निवारयतः, भूमे रसातलप्रवेशभीत्याऽनौद्धत्यपूर्वकं चरणद्वयस्फालनं कुर्वत इति तात्पर्यार्थः । सर्वलोकातिगानां सर्वान् लोकानतिक्रम्य गच्छन्ति ये ते तथोक्तास्तेषां तथोक्तानां ( गमेर्डप्रत्यये रूपम् ) अतिविस्तृताना-मित्यर्थः । दोष्णां बाहूनां ।

भुजबाहू प्रवेष्टो दोरित्यमरः ।

सङ्कोचेन दोर्वातजन्यलोकसंहरणभीत्या स्वच्छन्दाप्रसारणात्कुण्ठनेनैव मुहुः सकृत् अभिनयतः रसादिबोधनाय अङ्गविक्षेपं विदधतः ।

अङ्गहारोऽङ्गविक्षेपव्यञ्जकाऽभिनयौ समावित्यमरः ।

दाहभीतेः कक्ष्यदहनशङ्कातः लक्ष्येषु दृष्टिविषयीभूतवस्तुषु ज्वलनकणमुचं ज्वलनस्याग्नेः कणान् स्फुलिङ्गान् मुञ्चतीति विग्रहे क्विपि रूपम् अग्निस्फुलिङ्गवर्षणशी-

---

(१) नान्द्या एकेन पद्येन न पूर्तिरिति कारणात् ।
पद्यं द्वितीयमेतत्तु कविना परिकीर्तितम् ॥

पादस्य पादयोः स्वैरपातैः स्वच्छन्दसंचालनैः आविर्भवन्तीम् उपस्थयमानाम् अवनेः पृथिव्या अवनतिम् अधोगमनं रक्षतो निवारयतः । सर्वलोकातिगानाम् त्रैलोक्यव्यापिनां दोष्णां बाहूनां सङ्कोचेनैव अल्पप्रसारणेनैव मुहुः असकृत् अभिनयतः नृत्यतः । दाहभीतेः दहनशङ्कया लक्ष्येषु व गतस् ज्वलनकणमुचम् अग्निस्फुलिङ्गवर्षिणीम् ( अत एव ) उग्रां तीक्ष्णां दृष्टिं नेत्रम् न बध्नतो न कुर्वतः । इत्येवं रूपेण आधाराऽनुरोधात् नृत्यस्थानस्याल्पताऽवधानेन त्रिपुरविजयिनः शिवस्य दुःखनृत्यं कष्टेन नर्तनं वो युष्मान् पातु रक्षतु ॥ २ ॥

नान्द्यन्ते—

लामित्यर्थः । अत एव उमां तीवां दृष्टिं भालतलस्थिततृतीयलोचनं न बध्नतो न निक्षपतः इक्हेतोर्लक्ष्याण्यपश्यत इत्यर्थः । त्रिपुरविजयिनः शिवस्य इत्याधारानुरोधात् अङ्गविक्षेपणाधाश्रयीभूतभूतलादेरधः पतनाद्यभावतात्पर्यात् दुःखनृत्तं कष्टतोऽनुष्ठीयमाननर्तनम् वो युष्मान् सभ्यानित्यर्थः पातु अवतु । अत्र त्रिपुरविजयशीलेन शराऽग्निना यथा त्रिपुरं भस्मीकृतमेवं कोपानलेन नन्दान्वयवत् सराक्षस-मलयकेतुदाहनिपुणस्यापि चाणक्यस्य राक्षसग्रहणेच्छया क्रूरनीतिप्रयोगो ध्वन्यते त्रिपुरविजयीतिशब्देनेति बोध्यम् । अस्मिन्पद्येऽवन्यादेरवनत्यादिसम्बन्धाऽसद्भावेऽप्यवनतिसम्बन्धप्रतिपादनादसम्बन्धे सम्बन्धरूपातिशयोक्तिरलङ्कारः ।

भेदेऽप्यभेदः सम्बन्धेऽसम्बन्धस्तद्विपर्ययौ ।
पौर्वापर्यात्ययः कार्य-हेत्वोः सा पञ्चधा ततः ॥

इति साहित्यदर्पणोक्तलक्षणात् ।

आश्रयाश्रयिणोरेकस्याऽऽधिक्येऽधिकमुच्यते ।

इति लक्षणात् त्रिपुरविजयिहरचरणपतनस्यावनिरूपाश्रयेण शक्त्याधिक्याऽभिधानादत्राऽधिकालङ्कार इति केचित् ।

उक्तेर्विशेषणैः साभिप्रायैः परिकरो मतः ।

इति लक्षणात् त्रिपुरविजयीतिसाभिप्रायविशेषणोक्त्या परिकरालङ्कार इत्यन्ये ।

'वर्णैः शेषैः पुनर्द्वयोः ।
समस्तपञ्चपपदो बन्धः पाञ्चालिका मता ।

इति लक्षणादत्र पाञ्चाली रीतिः ।

चित्तं व्याप्नोति यः क्षिप्रम् ।

इत्याद्युक्तलक्षणात्प्रसादगुणः । स्रग्धरावृत्तम् । एतल्लक्षणस्य प्रागुक्तत्वान्नेहोक्तम् ॥ २ ॥

**नान्द्यन्ते सूत्रधार इति** । नन्दयति आनन्दयति लोकानिति नान्दीनाटकादौ प्राङ्मङ्गलार्थं विहितश्लोको नान्दीशब्देनाऽभिधीयते ।

उक्तञ्चापि साहित्यदर्पणे—

आशीर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रयुज्यते ।
देव-द्विज-नृपादीनां तस्मान्नान्दीति संज्ञिता ॥

सूत्रधारः—अलमतिप्रसङ्गेन । आज्ञापितोऽस्मि परिषदा, यथा—'अ-

---

इति केषाञ्चिन्मये पदनियमस्य मान्यामस्वीकारादिह तदस्वीकारः । अथवा पदशब्दस्य पादार्थकत्वादाशीर्वचनयुक्ततया हरस्तुतिरूपतया चाष्टपादतया चेयमष्टपदा नान्दीत्यवसेयम् । तस्या अन्तेऽवसाने समाप्ताविति यावत् सूत्रधारस्तन्नामकप्रधाननटः कथयतीति शेषः । उक्तञ्च दर्पणे—

नाट्योपकरणादीनि सूत्रमित्यभिधीयते ।

सूत्रं धारयतीत्यर्थे सूत्रधारो निगद्यते ॥ इति ।

नाटकीयकथावस्तु प्रथमं येन सूच्यते ।

रङ्गभूमिं समाक्रम्य सूत्रधारः स उच्यते ॥

इति च ।

रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचनैः ।

ऋतुं कञ्चित्समाश्रित्य भारतीं वृत्तिमाश्रयेत ।

इति दर्पणोक्तेः सूत्रधारः कोमलमधुरशब्दैः रङ्गप्रसादपूर्वकं भारतीवृत्त्याश्रयमात्काव्यार्थमभिसूचयतीति भावः ।

अलमिति । अतिप्रसङ्गेनाऽतिविस्तरेणाऽलं व्यर्थं सम्यानन्दजनकाभिनयस्य करिष्यमाणत्वाच्चिरप्रयोजनकालक्षेपणां वारणीय इत्यर्थः । अतिविस्तरेण मिथो वार्तालापेनोक्तकार्ये साध्यं नास्तीति यावत् । ( गम्यमानाऽपि क्रिया कारकविभक्तौ प्रयोजिके )ति वार्तिकेन गम्यमानसाधनक्रियाऽपेक्षया करणत्वादतिप्रसङ्गशब्दात्तृतीया । अलंशब्दोऽत्र वारणार्थकः । उक्तञ्चामरकोशे—

अलंभूषणपर्याप्तिशक्तिवारणवाचकम् ॥

इति ॥

रूपकस्य कवेराख्यां गोत्राद्यपि स कीर्तयेत् ।

इति साहित्यदर्पणोक्त्या नाटक-तत्प्रणेत्रादिनामकथनं सूत्रधारेण कर्तुमुचितमित्यभिप्रायेणोच्यते आज्ञापित इति । परिषच्छब्दस्य लक्षणया तद्वृत्तिसम्यजनबोधकत्वमन्यथाऽऽज्ञादातृत्वस्य चेतनवृत्तित्वेनोक्तशब्दस्य स्यामवाचित्वात्कर्तृत्वाज्ञाप्रदानासम्भवादनुपपन्नं स्यात् । तथा च परिषदा गोष्ठ्या तत्रस्थितजनेनेत्यर्थः । अस्मीतिक्रियायाः सत्वात् अहमितिकर्तृपदमध्याहार्यम् । अहमाज्ञापित आदिष्टोऽस्मि भवामि । समन्तात्रकः सामन्तचक्रवर्ती स चासौ

च सामन्तवटेश्वरदत्तपौत्रस्य महाराजपदभाक्पृथुसूनोः कवेर्विशाख-दत्तस्य कृतिः मुद्राराक्षसं नाम नाटकं नाटयितव्यम्' इति । यत् सत्यं काव्यविशेषवेदिन्यां परिषदि प्रयुञ्जानस्य ममापि चेतसि सुम-

---

वटेश्वरदत्त इति सामन्तवटेश्वरदत्तस्तस्य पौत्रस्तस्य, महाराजपदं महाराजेत्युपाधि भजते इति तथोक्तः ( भजेर्ण्वौ रूपम् ) । महाराजपदभाक् चाऽसौ पृथुस्तस्य सूनुः पुत्रस्तस्य चक्रवर्त्तिवटेश्वरदत्तात्मजमहाराजोपाधिकपृथुतनयस्येति समुदितार्थः । कवेर्नाटकप्रणेतुर्विशाखदत्तस्य कृतिः मुद्रयाऽङ्गुलिमुद्रया परिगृहीतो राक्षसो यत्रेति ( मध्यमपदलोपिबहुव्रीहिः ) तदधिकृत्य कृतो ग्रन्थो मुद्राराक्षसं 'तदधिकृत्य कृतो ग्रन्थ' इत्यणन्तत्वात्क्लीबत्वम्, नाम तत्संज्ञकं नाटकं नाटयितव्यमभिनेतव्यं दर्शयितव्यमिति यावत् । उक्तञ्च दर्पणे नाटकलक्षणम्—

नाटकं ख्यातवृत्तं स्यात्पञ्चसन्धिसमन्वितम् ।
प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान् ।
दिव्योऽथ दिव्यादिव्यो वा गुणवान् नायको मतः ।
एक एव भवेदङ्गी शृङ्गारो वीर एव वा ॥

इति । अस्मद्विरचिताऽभिनयस्य दर्शनात्परिषद्वर्तिजनानां सन्तोषोऽस्माकञ्चातिशयहर्षो भवतीति यत्तत्सत्यमेवेत्याह—यत्सत्यमिति । काव्यस्य दृश्य-श्रव्येत्युभयरूपस्य विशिष्यतेऽनेनेति विशेषो धर्म उत्कर्षाऽपकर्षसूचकगुणदोषरूपः, तद्वेदिन्यां तज्ज्ञानविख्यातायामित्यर्थः । एतेन काव्यप्रशंसापूर्वकं भारतीवृत्तेः प्ररोचना नामकमङ्गमभिदर्शितम्, ।

अङ्गाम्यस्योन्मुखीकारः प्रशंसातः प्ररोचना ।

इति दर्पणोक्तेः । परिषदि सभायां प्रयुञ्जानस्य नाट्येनाऽभिनयं कुर्वत इत्यर्थः। अस्मिन्नाटके—वीररसोऽङ्गी अतिगहनकौटिल्यनीतिरूपस्याऽद्भुतरसस्य प्राधानाऽङ्गत्वमन्ये च करुणादयोऽङ्गरसाः । चन्द्रगुप्तो धीरोदात्तनायकः मलयकेतुः प्रतिनायकः, एतौ नायक-प्रतिनायकावालम्बनविभावौ, परस्परोद्देशेन परस्परतश्चितादीनामुद्दीपनविभावत्वम्, प्रतीकारस्मरणादीनामनुभावत्वम्, उत्साहस्याऽत्र स्थायिभावत्वम्, नायक-प्रतिनायकभूतयोश्चन्द्रगुप्त-मलयकेत्वोश्चाणक्य-राक्षसावुपनायकसंज्ञकसहायभूतौ, चाणक्यकृतनन्दाम्वयोद्धार-चन्द्रगुप्ताऽभिषेकयोः

पुराणादौ प्रतिपादितत्वात् 'इतिहासनिबन्धनं प्रख्यातमित्युक्तलक्षणेन प्रख्यातमितिवृत्तमिहेत्यवगमेयम् ।

नव चैतान्नन्दान् कौटिल्यो ब्राह्मणः समुद्धरिष्यति ।।
कौटिल्य एव चन्द्रगुप्तमभिषेक्ष्यति ।
तेषामभावे मौर्व्याः पृथिवीं भोक्ष्यन्ति ।
कौटिल्य एव चन्द्रगुप्तमुत्पन्नं राज्येऽभिषेक्ष्यति ।
तस्यापि पुत्रो विन्दुसारो भविष्यतीत्यादि ॥ इति विष्णुपुराणे ।
तेन चाणक्यनाम्नाऽथ शकटारगृहे रहः ।
कृत्यां विधाय सप्ताहात्सपुत्रो निहतो नृपः ॥
शकटारः क्षपणकलिङ्गधारी मुनिश्चितः ।
चाणक्यस्य तु विप्रस्य शर्मान्तेन्दुर्महान् सुहृत् ॥
योगानन्दे यशःशेषे पूर्वनन्दसुतस्ततः ।
चन्द्रगुप्तः कृतो राज्ये चाणक्येन महौजसा ॥

इति बृहत्कथामञ्जर्याम्

वंशे विशालवंशानामृषीणामिव भूयसाम् ।
अप्रतिग्राहकाणां यो बभूव भुवि विश्रुतः ॥
जातवेदा इवार्चिष्मान् वेदान्वेदविदाम्बरः ।
योऽधीतवान् सुचतुरश्चतुरोऽप्येकवेदवित् ॥
यस्याऽभिचारवज्रेण वज्रज्वलनतेजसः ।
पपात मूलतः श्रीमान् सुपर्वा नन्दपर्वतः ॥
एकाकी मन्त्रशक्त्या यः शक्त्या शक्तिधरोपमः ।
आजहार नृचन्द्राय चन्द्रगुप्ताय मेदिनीम् ॥
नीतिशास्त्रामृतं धीमानर्थशास्त्रमहोदधेः ।
य उद्दध्रे नमस्तस्मै विष्णुगुप्ताय वेधसे ॥

इति कामन्दकीयनीतिसारे

मुखं प्रतिमुखं गर्भो विमर्श उपसंहृतिः ।

इत्युक्तेर्दृश्यकाव्ये नाटकादौ पञ्च सन्धयो भवन्ति । एकप्रयोजनान्वितकथावयवानामवान्तरैकप्रयोजनसम्बन्धस्यैव सन्धिनामव्यवहारः ।

बीजं बिन्दुः पताका च प्रकरी कार्यमेव च ।
अर्थप्रकृतयः पञ्च ज्ञात्वा योज्या यथाविधि ॥
आरम्भयत्नप्राप्त्याशा नियताप्तिफलागमाः ।
यथासंख्यमवस्थाभि राभिर्योगात्तु पञ्चभिः ॥
पञ्चधैवेतिवृत्तस्य भागाः स्युः पञ्च सन्धयः ॥

इति दर्पणोक्तलक्षणात् प्रयोजनोपपत्तिकारणभूतबीजादयः पञ्चाऽऽरम्भादिपञ्चाऽवस्थाभिर्युक्ता यथासंख्यं मुखादयः पञ्च सन्धयो भवन्तीत्यर्थकात् आरम्भयत्नयोः सम्बन्धो मुखसन्धिः, यत्न-बिन्द्वोः सम्बन्धः प्रतिमुखसन्धिः, प्राप्त्याशापताकयोः सम्बन्धो गर्भसन्धिः, नियताप्ति-प्रकर्योः सम्बन्धो विमर्शसन्धिः, फलागम-कार्ययोः सम्बन्ध उपसंहृतिसन्धिः ।

भवेदारम्भ औत्सुक्यं यन्मुख्यफलसिद्धये ।

इत्यारम्भलक्षणम् ।

प्रयत्नस्तु फलावाप्तौ व्यापारोऽतित्वरान्वितः ।

इति यत्नलक्षणम् ।

उपायापायशङ्काभ्यां प्राप्त्याशा प्राप्तिसम्भवः ।

इति प्राप्त्याशालक्षणम् ।

अपायाऽभावतः प्राप्ति र्नियताप्तिस्तु निश्चिता ।

इति नियताप्तिलक्षणम् ।

साऽवस्था फलयोगः स्याद्यः समग्रफलोदयः ।

इति फलागमलक्षणम् । एतत्सर्वं दर्पणस्थं बोध्यम् ।

अल्पमात्रं समुद्दिष्टं बहुधा यद्विसर्पति ।
फलस्य प्रथमोहेतु बीजं तदभिधीयते ॥

इति बीजलक्षणम् ।

अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम् ।

इति बिन्दुलक्षणम् ।

व्यापि प्रासङ्गिकं वृत्तं पताकेत्यभिधीयते ।

इति पताकालक्षणम् ।

प्रासङ्गिकं प्रदेशस्थं चरितं प्रकरी मता ।

हान् परितोषः प्रादुर्भवति । कुतः—

चीयते बालिशस्यापि सत्क्षेत्रपतिता कृषिः ।
न शालेः स्तम्बकरिता वप्तुर्गुणमपेक्षते ॥ ३ ॥

---

इति प्रकरीलक्षणम् ।

प्रकरीनायकस्य स्यान्न स्वकीयफलान्तरम् ।
अपेक्षितं तु यत्साध्यमारम्भो यन्निबन्धनः ।
समापनं तु यत्सिद्‌ध्यै तत्कार्यमिति सम्मतम् ।

इति कार्यलक्षणम् । एतदपि सर्वं लक्षणं दर्पणस्थमेवेति बोध्यम् ।

ननु सभासान्निध्ये कृताऽभिनयस्यैव तत्स्थजनानन्दसन्दोहजनकत्वस्य परिषदि प्रयुञ्जानस्येत्यनेनाभिहितत्वात्तत्र सभारूपपात्रस्यैव मुख्यत्वेनोत्कर्षजनकत्वमित्यत्र दृष्टान्तं दर्शयति-चीयत इति । बालिशस्यापि अज्ञातकृषीवलस्यापि अनवगत-कृषिकर्मणोऽपि शिशोरपीति यावत् कृषिस्तत्सम्बन्धिबीजमित्यर्थः । सत्क्षेत्रपतिता उत्कृष्टभूमौ प्रयुक्ता उप्तेति यावत् सती चीयते वर्द्धते अतिशयफलसम्पादिनी भव-तीत्यर्थः । शालेः धान्यस्य स्तम्बकरिता प्राचुर्यम् वप्तुर्बीजरोपकस्य गुणं चातुर्या-दिकम् नापेक्षते नेच्छतीत्यर्थः । चीयते इति चिनोतेः कर्मकर्तरि लटि रूपम् । वारि शेते इति विग्रहे डप्रत्यये ( तत्पुरुषे कृति बहुलमि)ति सप्तम्या अलुकि र-लयोरै-क्येन बालिशपदं सिद्धयति ।

बालिशश्च शिशौ मूर्खे इति मेदिनी ।

स्तम्बं करोतीति विग्रहे 'स्तम्बशकृतोरिन्' इतीनि स्तम्बकरिस्ततो भावे तलि रूपम् ।

सामान्यं वा विशेषेण विशेषस्तेन वा यदि ।
कार्यञ्च कारणेनेदं कार्येण च समर्थ्यते ॥
साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः ।

इति दर्पणोक्तलक्षणात् विशेषेण सामान्यसमर्थनरूपः पूर्वार्द्धस्य परार्द्धेन वैध-र्म्येण समर्थनरूपो वाऽर्थान्तरन्यासोऽलङ्कारः । स च

---

योऽपि कृषिकर्म बीजवपनादिकार्यं न जानाति तदुप्तमप्युत्तमक्षेत्रे बीजं भूमेरुत्कृष्टतया वर्द्धत एव न तत्र वप्तुर्बुद्धिमत्त्वादिगुणो हेतुः । एवमज्ञाऽस्मदादिकृताऽभिनयोऽपि विद्वत्सभ्यजनानामग्रे प्रशंसाई एव भविष्यति न तत्राऽभिनयनैपुण्यं हेतुरिति भावः ॥ ३ ॥

तद्यावद् इदानीं गृहं गत्वा गृहिणीमाहूय गृहजनेन सह सङ्गीतकमनुतिष्ठामि। ( परिक्रम्यावलोक्य च। ) इमे नो गृहाः, तद्यावत् प्रविशामि। ( नाट्येन प्रविश्यावलोक्य च ) अये, तत् किमिदमस्मद्गृहेषु महोत्सव इव दृश्यते। स्वस्वकर्मण्यधिकतरमभियुक्तः परिजनः।

---

क्वचिद्विशेषः सामान्यात्सामान्यं वा विशेषतः।
कार्यान्निमित्तात्कार्यं च हेतोरथ समात्समम्।
अप्रस्तुतात्प्रस्तुतं चेद्गम्यते पञ्चधा ततः।
अप्रस्तुतप्रशंसा स्यात्।

इत्युक्तलक्षणेन यथाऽऽकर्षकोत्कृष्टभूमिनिहितबीजं वर्द्धते इति सामान्येनाऽप्रस्तुतेन तथा विद्वत्सदसि मत्कृतोऽपि प्रयोगः साधीयान् भवतीति विशेषस्य प्रस्तुतस्य प्रतिपादनादप्रस्तुतप्रशंसामूलक इत्यवसेयम्। यथोर्वराभूमिप्रयुक्ता कृषिर्बालिशादिबीजरोपकगुणं विना फलातिशयोत्पादिनी भवति तथा विनापि नर्त्तकगुणं सदसि क्रियाऽऽधारपात्रगुणादभिनयनैपुण्यं भवतीति बिम्ब-प्रतिबिम्बस्य भानाद्वा दृष्टान्ताऽलङ्कार इति केचित्॥ उक्तञ्च तल्लक्षणं दर्पणे—

दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम्।

इति सदृशवस्तुनः साधर्म्य-वैधर्म्ययोः प्रणिधानगम्यसाम्यत्वे सति निर्दिष्टनामालङ्कार इति तदर्थः। कुवलयानन्दे च—

चेद्बिम्बप्रतिबिम्बत्वं दृष्टान्तस्तदलङ्कृतिः।

इति। यत्रोपमानोपमेयवाक्ययोर्भिन्नावेव धर्मौ बिम्ब-प्रतिबिम्बभावेन निर्दिष्टौ तत्र दृष्टान्त इत्यर्थः। अत्र वैदर्भी रीतिः। प्रसादगुणः। अनुष्टुब्वृत्तम्। केचित्तु जगणस्य द्वितीय-चतुर्थचरणस्थतुर्यवर्णतोऽग्रे सत्त्वात्पथ्यावक्त्रं वृत्तमित्याहुः।

युजोश्चतुर्थतो येन पथ्यावक्त्रं प्रकीर्त्तितम्।

इति तल्लक्षणम्॥ ३॥

तद्यावदिति। यावच्छब्दो वाक्यालङ्कारार्थकः, तत्तस्मात्कारणात् नटगुणव्यतिरेकेण प्रयोगसाधुत्वाद्धेतोरित्यर्थः। गृहिणीं स्त्रियम् प्राणप्रियामिति यावत्। आहूयाऽऽकार्य गृहजनेन गृहिण्या सहेत्यर्थः।

न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते।

तथाहि—

वहति जलमियं पिनष्टि गन्धानियमियमुद्ग्रथते स्रजो विचित्राः।
मुसलमिदमियञ्च पातकाले मुहुरनुयाति कलेन हुंकृतेन ॥ ४ ॥

भवतु कुटुम्बिनीमाहूय पृच्छामि। ( नेपथ्याभिमुखमवलोक्य )—

---

इति स्मृतेः।

सङ्गीतकं गानमनुतिष्ठामि अनुष्ठास्यामि करिष्यामीति तदर्थः ( भविष्यत्सामीप्ये लट् ) यद्वा संगीतकं यावदनुतिष्ठामीत्यन्वयेन यावच्छब्दयोगे 'यावत्पुरा निपातयोर्लट्'इति भविष्यति लट्। परिक्रम्य कियद्दूरं गत्वा। नोऽस्माकमिमे गृहाः सद्नानीत्यर्थः 'गृहाः पुंसि च भूम्न्येवे'ति कोषात्पुंस्त्वबहुवचने। नाट्येन नटोचितभङ्गीविशेषेण अभिनयेनेति तदर्थः। अये इत्याश्चर्यसूचकाव्ययपदम् अस्माकमालयेषु हर्षातिशय इवावलोक्यते, स्वस्वकर्मणि स्वंस्वं कर्मेति व्यतिहारे द्विर्भावः स्वकीय-स्वकीयकार्ये इत्यर्थः। अधिकतरम् अत्यर्थमभियुक्तो नियुक्तः परिजनोऽभिजन इति।

अभियोगं दर्शयति—वहतीति। इयं काचित्स्त्री जलं वहति आनयति, इयमपरा स्त्री गन्धान् गन्धद्रव्याणि पिनष्टि चूर्णयति, इयमन्या विचित्रा नानाविधाः स्रजः पुष्पमाला उद्ग्रथते ग्रथ्नाति इयमन्या इदं श्रूयमाणं मुसलं मुसलपातशब्दं पातकाले धान्याद्युपरि मुसलपातनक्षणे कलेन मधुरेण हुंकृतेन (हुमित्यव्ययपूर्वकात्कृधातोर्भावे क्ते रूपम्) हुमिति शब्दविशेषेणेत्यर्थः। मुहुरसकृदनुयाति अनुकरोति। अत्र।

स्वभावोक्तिर्दुरूहार्थस्वक्रियारूपवर्णनम्।

इति दर्पणोक्तलक्षणात् जलवहनादिस्वभाववर्णनेन स्वभावोक्तिनामालंकारः। अत्रापि वैदर्भी रीतिः। प्रसादश्च गुणः।

अयुजि नयुगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रा।

इति लक्षणात्पुष्पिताग्रावृत्तम् ॥ ४ ॥

भवत्विति। यदित्यध्याहारेण यद्भवत्वित्यर्थः। कुटुम्बिनीं ( भूमनिन्दाप्रशंसास्वित्युक्त्या प्राशस्त्यार्थे इनिः ) गृहिणीमाहूयाकार्यं पृच्छामि। नेपथ्यस्य वेषनिर्माणालयस्य अभिमुखं सम्मुखं दृष्ट्वेत्यर्थः।

---

सत्सु विविधोत्सवेषु विविधपाकादिसम्पादनाय स्त्रीणां कार्येषु शीघ्रता स्वाभाविकीति भावः। ४।

गुणवत्युपायनिलये ! स्थितिहेतो ! साधिके ! त्रिवर्गस्य ।
मद्रवननीतिविद्ये ! कार्य्यादार्य्ये ! द्रुतमुपैहि ॥ ५ ॥

गुणवतीति । गुणवति ! सत्प्रकृतित्व-गृहकार्यनैपुण्यादिगुणालंकृते । उपायनिलये ! संसारसाधनीभूतव्यापाराश्रयभूते । निलयशब्दस्याऽकारान्तत्वे तु तस्याऽप्रत्ययान्तत्वेन नियतलिङ्गत्वम्बोध्यम् । स्थितिहेतो ! लोकयात्रासम्पादिनि । त्रिवर्गस्य पुरुषार्थभूतधर्मार्थकामरूपस्य साधिके ! सम्पादनकर्त्रि । भार्यैव पुरुषाणां सकलपुरुषार्थान् सम्पादयतीति स्मृत्युक्तेः । मद्रवननीतिविद्ये ! अस्मद्गृहसम्बन्धिनीतिविद्यास्वरूपिणि । कार्याचार्ये ! इतिकर्तव्यार्थोपदेशकर्त्रि, आर्ये ! मान्ये, द्रुतं शीघ्रमुपैहि आगच्छ, मद्रवनस्य नीतिविद्येत्यर्थंकरणादुपमालङ्कारः । कार्यादार्ये इति पाठे फलमपीह हेतुरित्युक्तस्योद्देश्यरूपस्यापि फलस्य हेतुत्वाऽभ्युपगमाद्धेतुपञ्चम्यन्तं कार्य्यादितिपदम् । कार्यं विहायेत्यर्थाल्ल्यब्लोपपञ्चम्यन्तं तदिति । केचित् । द्रुतमित्युक्त्या कालक्षेपासहनकपौत्कण्ठ्यप्रतीतिः ॥

पक्षान्तरे—

ऋतुश्च कश्चित्प्रायेण भारतीं वृत्तिमाश्रितः ।

इतिदर्पणोक्तलक्षणात्कविना तृतीयाङ्कवर्णितस्य शरदृतोरुपादानमेतेन ध्वन्यते । तथाहि-गुणवति ! वर्षाऽपगमाज्जलस्वच्छतादिगुणविशिष्टे, समागते शरदृतौ जले मालिन्यापगमोऽतिप्रसिद्धः । उपायनिलये ! विजयाऽभिलाषिणां सामाद्युपायावस्थाने ।

अथ विजयदशम्यामाश्विने शुक्लपक्षे दशमुखनिधनाय प्रस्थितो रामचन्द्रः ।

इत्यादिप्रामाण्यात्स एव विजयावसरः प्रसिद्धः, स्थितिहेतो ! रक्षाकारणभूते, शरदागमे धान्याद्युपचयनिमित्तत्वात्प्रावृट्समयापगमावबोधकत्वाच्च तस्या रक्षाहेतुत्वम् , प्रावृषि प्रायशः प्राणिनां क्लेशबाहुल्यादिति भावः । त्रिवर्गस्य धर्मार्थकामरूपस्य साधिके ! सम्पादयित्रि, विजयकांक्षिणामवसरवितरणादर्थं साधयति धर्मकामेत्युभयस्य चार्थमूलकत्वात्तावपि सम्पादयतीत्यर्थः । मद्रवननीतिविद्ये ! समागतायां मयि विजयं समीहमाना राजानो विदधतां समरमित्युपदेशबोधनद्वारा सा नीतिविद्यास्वरूपिणी, आर्ये ! मान्ये, कार्यात् प्रयोजनवशात् द्रुतं शीघ्रमागच्छेत्यर्थः । इति नायककर्तृकशरदागमप्रार्थना ।

स्वकार्यसाधनाय स्त्रीणां प्रशंसापूर्वकमाह्वानं लोकप्रसिद्धमेवेति भावः ॥ ५ ॥

नटी—( प्रविश्य । ) अज्जउत्त ! इअह्मि, अण्णाणिओएण मं अणुगेह्णदु अज्जो(१) ।

---

( १ ) आर्यपुत्र, इयमस्मि, आज्ञानियोगेन मामनुगृह्णात्वार्यः ।

---

पुनः पक्षान्तरे—राक्षसग्रहणहेतुकचाणक्यकर्तृकनीतिविद्याकर्मकाऽभिमुखीकरणं ध्वन्यते । तथाहि—गुणवति ! सन्धि-विग्रह-याना-सन-द्वैधीभाव-समाश्रये-तिषड्गुणशालिनि, उपायनिलये ! नीतिशास्त्रोक्तसाम-दाम-भेद-दण्डरूपोपायाश्रयभूते, स्थितिहेतो ! राज्यपालनकर्त्रि त्रिवर्गस्य नीतिशास्त्रोक्तक्षय-स्थान-वृद्धिरूपस्य, सिद्धिविधायिनि, आर्ये ! मान्ये, हेमद्रवमनीतिविद्ये ! प्रयोजनवशादेहीत्यर्थः ॥

श्लेषः स वाक्य एकस्मिन् यत्रानेकार्थता भवेत् ।

श्लिष्टैः पदैरनेकार्थाऽभिधाने श्लेष इष्यते ॥

नानार्थसंश्रयः श्लेषो वर्ण्यावर्ण्योभयाश्रितः ।

इति प्रकाश-दर्पण-कुवलयानन्दोक्तलक्षणैः श्लिष्टपदसामर्थ्यादप्राकरणिकार्थप्रतीत्याऽर्थालङ्कारः । यत्तु—

क्वचिद्भेदाद्ग्रहीतॄणां विषयाणां तथा क्वचित् ।

एकस्यानेकधोल्लेखो यः स उल्लेख उच्यते ॥

इत्युक्तलक्षणादत्रोल्लेखालङ्कार इति तन्न, अर्थान्तरप्रतीतिसद्भावे श्लेषेण तद्बाधात् ! रीतिरत्र पाञ्चाली नाम--

वर्णैश्शेषैः पुनर्द्वयोः ।

समस्तपञ्चषपदो बन्धः पाञ्चालिका मता ॥

इतिदर्पणोक्तलक्षणात् । प्रसादोऽत्र गुणः । लक्षणञ्च प्रागुक्तम् ।

लक्ष्मैतत् सप्त गणा गोपेता भवति नेह विषमे जः ।

षष्ठोऽजश्च न लघु वा प्रथमार्द्धे नियतमार्यायाः ॥

षष्ठे द्वितीयलात् परके न्ले मुखलाच्च सयतिपदनियमः ।

चरमेऽर्द्धे पञ्चमके तस्मादिह भवति षष्ठो लः ॥

इति लक्षणादार्यावृत्तम् ॥ ६ ॥

प्रविश्येति । रङ्गस्थानमित्यस्य शेषो बोध्यः । अभ्यक्तेरर्दता सिद्धस्यार्थ-

सूत्रधारः—आर्य्ये ! तिष्ठतु तावदाज्ञानियोगः, कथय किमद्य भवत्या भगवतां ब्राह्मणानामुपनिमन्त्रणेनैतत् कुटुम्बकमनुगृहीतम्, अथवा अभिमता भवनमतिथयः प्राप्ताः, यत एष पाकविशेषारम्भः ?

नटी—अज्ज ! अज्ज आमन्दिदा मए भअवन्तो ब्बह्मणा। (१)

सूत्रधारः—कथय कस्मिन् निमित्ते।

नटी—उवरज्जदि किल भअवं चन्दोत्ति। (२)

---

(१) आर्य अद्यामन्त्रिता मया भगवन्तो ब्राह्मणाः।
(२) उपरज्यति किल भगवान् चन्द्र इति।

---

पदस्य स्थानात्स्थानान्तरगमनशीलेत्यर्थः। तत्कञ्च तल्लक्षणं साहित्यदर्पणे—

कर्त्तव्यमाचरन् काममकर्त्तव्यमनाचरन्।
तिष्ठति प्रकृताऽऽचारे स वै आर्य इति स्मृतः॥ इति।

आज्ञानियोगेन शासनप्रदानेन कचित्कार्ये प्रेषणरूपो नियोगशब्दार्थः। क्वचित्कार्ये प्रेषणेनेतियावत् अनुगृहात् अनुकम्पया कृतकृत्यां विधेहि।

आर्य इति। तावच्छब्दो वाक्यालङ्कारार्थकः। हेमान्ये ! प्राणप्रिये, आदेशप्रदानं तावदास्तां प्रागिदं कथय किमर्थमस्मिन्दिवसे त्वया पूज्यानां विप्राणां भोजनार्थं नियोगकरणेन पोष्यवर्गः कृतार्थीकृतः, अथवा अभिमता वाञ्छिता अतिथयोऽभ्यागता गृहं सम्प्राप्ताः यस्मात् साक्षाद्दृश्यमानः पाकविशेषोद्योगः।

१ आर्यति।

नाट्योक्तौ तु पुमानार्यः,
आर्ये तु मार्षमारिषावि,

तिप्रमाणद्वयेन सूत्रधारस्य मारिषेति नामान्तरम्। तथा च हे आर्य ! मारिष, मया पूजनीया विप्रा भोजनार्थं निमन्त्रिता इत्यर्थः।

कथयेति। (निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनमि) ति वार्तिकेन तृतीयार्थे सप्तमी। केन निमित्तेनेत्यर्थः।

२ उपरज्यतीति। भगवान् चन्द्रः शशी उपरज्यति राहुणा ग्रस्यते अतश्चन्द्रोपरागसमये ब्राह्मणभोजनादेर्लोकाचारसिद्धत्वात्तदर्थं पाकविशेषविधानमिति भावः

सूत्रधारः—क एवमाह ?

नटी—एवं क्खु णअरवासी जणो मन्तेदि। (१)

सूत्रधारः—आर्य्ये ! कृतश्रमोऽस्मि चतुःषष्ट्यङ्गे ज्योतिश्शास्त्रे, तत् प्रवर्त्यतां भगवन्तो ब्राह्मणानुद्दिश्य पाकः, चन्द्रोपरागं प्रति तु केनापि विप्रलब्धासि। पश्य,—

क्रूरग्रहः सकेतुश्चन्द्रमसम्पूर्णमण्डलमिदानीम्।
अभिभवितुमिच्छति बलात्————" ( इत्यर्द्धोक्ते )।

( नेपथ्ये। ) आः ! क एष मयि स्थिते चन्द्रमभिभवितुमिच्छति बलात् ?

सूत्रधारः—"————रक्षत्येनं तु बुधयोगः॥ ६॥

---

( १ ) एवं खलु नगरवासी जनो मन्त्रयति।

---

क एवमिति। आर्ये ! अद्य चन्द्रग्रहणमित्येवं वचः कः कथयतीत्यर्थः।

१ एवमिति। विविधैर्देवमन्दिरैर्विविधैः प्रासादापणवेश्मभिर्विविधैश्च राजमार्गैरुपशोभितं यन्नगरं तत्र वसनशीलो जन इत्थं कथयतीत्यर्थः।

आर्ये कृतश्रमोऽस्मीति। चतुरधिका षष्टिश्चतुःषष्टिः ( मध्यमपदलोपी समासः ) चतुः षष्टिरङ्गानि प्रतिपाद्यप्रकारा यस्मिंस्तच्चतुःषष्ट्यङ्गं तस्मिन् ज्योतिषां ग्रहनक्षत्रादीनां क्रमेण स्थित्यादिविषयकं शास्त्रं ज्योतिश्शास्त्रं तस्मिन् ( विषयसप्तम्यन्तमिदम् ) कृतश्रमोऽस्मि कृताऽभ्यासो भवामि ( अहमितिशेषो बोध्यः )। तत्तस्मात्कारणात् भगवतः श्रेष्ठान् ब्राह्मणान् उद्दिश्य पाकः प्रवर्त्यताम् पाकविशेषः क्रियताम् किन्तु चन्द्रोपरागं चन्द्रग्रहणं प्रति केनाऽपि मिथ्यावादिना पुरुषेण विप्रलब्धासि वञ्चितासि, न हि ब्राह्मणोद्देश्यकपाकविशेषारम्भोऽनभिमतः किन्त्वलीकभाषिभाषितेन्दूपरागोऽनभिमत इति भावः।

उपरागो ग्रहो राहुग्रस्ते त्विन्दौ च पूष्णि च।

इत्यमरः। विप्रलम्भो विसंवाद इति चामरः।

विसंवादमभिसूचयितुं साम्प्रतमिन्दूपरागासम्भवमभिदर्शयति—क्रूरग्रह

---

दर्शयिष्यमाणस्य कौटिल्यकृतनयस्य सूचनाय कृतोऽयमाक्षेपः सूत्रधारस्य परमचातुर्यं प्रकटयतीत्यवधेयम्॥ ६॥

इति । प्रसिद्धार्थद्योतकस्तच्छब्दो न यच्छब्दमपेक्षते इति स प्रसिद्धः केतुः राहुः एकदेहभागत्वेन तयोरभेदादिति तात्पर्यम् । यद्वा—केतुशब्दस्य पातशब्दपर्यायवाचकत्वात्तेन कान्तिवृत्तद्वययोगाऽभिधानात्सहशब्दस्थानिकादेशभूतसशब्दस्य सहशार्थबोधकत्वाच्च स केतुः चन्द्रसमानकान्तिवर्त्तिक्रूरग्रहः पृथ्वीच्छायात्मको राहुः, असम्पूर्णमण्डलमपरिपूर्णबिम्बं चन्द्रमसमिन्दुमिदानीं बलादभिभवितुमाक्रमितुमिच्छति वाञ्छति इति वाच्योऽर्थः ।

एतद्वाक्यतः श्लेषेण मलयकेतु–राक्षसकर्तृकचन्द्रगुप्ताभियोगसूचनेन श्लिष्टार्थावगमादेव चाणक्य ( कौटिल्य ) पात्रप्रवेशस्य वर्णनीयत्वेन श्लिष्टार्थं प्रतिपादयति–क्रूरग्रहः कूटव्यवहाराराक्षसः सकेतुर्मलयकेतुसहितः इदानीं साम्प्रतमसम्पूर्णमण्डलमवशम्वदप्रजासमुदायं राज्याभिषेकस्याल्पकालीनत्वाच्छासनप्रख्यापनाऽभावादिति भावः । चन्द्रं चन्द्रगुप्तं बलात् मित्रादिसैन्यमाश्रित्येत्यर्थः ( ल्यब्लोपे पञ्चमी ) । वा बलात्सामर्थ्यादभिभवितुं पराजेतुमिच्छति ।

सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैः ।

इति कुवलयानन्दोक्तलक्षणान्मुद्रानामकोऽत्रालङ्कारः । दर्पणोक्तलक्षणात् श्लेषः।

सूत्रधारस्य भिन्नाशयकवाक्यमाकर्ण्य तद्वाक्यापूर्त्तिन्व एव मलयकेतुराक्षसोभयकर्तृकचन्द्रगुप्ताभियोगासहनशीलचाणक्येन नेपथ्यान्तर्गतेनैवान्यार्थपरकतद्वाक्यमवगत्याभिधीयते–आः इति। मयि स्थिते विद्यमाने चन्द्रं चन्द्रगुप्तमभिभवितुं पराभवितुं योऽभिवाञ्छति स कः किंनामक इत्यर्थः । नाट्याङ्गमत्राधिबलनामकं बोध्यम् ।

नेपथ्यस्थितपात्रस्य वचनमनाकर्णयन् सूत्रधारः स्ववाक्यं पूरयति—रक्षत्येनं तु बुधयोग इति । बुधेन तन्नामकग्रहेण सह योगः सहावस्थानरूपः सम्बन्धः एनं चन्द्रं रक्षति राहुग्रहग्रसनाद्वारयति । पक्षान्तरे—बुधस्य नीतिज्ञकार्यकुशलचाणक्यस्य योगः कार्यनैपुण्यरूपोपायः एनं चन्द्रं चन्द्रगुप्तं रक्षति शत्रुपराभवात्त्रायत इत्यर्थः ।

श्लिष्टैः पदैरनेकार्थाऽभिधाने श्लेष इष्यते ।

इति दर्पणोक्तलक्षणात् क्रूरग्रह इत्यादावभङ्गत्वाच्चन्द्रमसमित्यादौ सभङ्गत्वात्सभङ्गाभङ्गलक्षणः श्लेषालङ्कारः ।

यथार्थत्वादथ वाक्यानां श्लेषेणार्थः प्रतीयते ।

शब्दभेद्याऽनुपात्तोऽपि श्लेषगण्डः स उच्यते ॥

इति भरतोक्तलक्षणादत्र श्लेषगण्डलक्षणो नाटकालंकार इति केचित् ।

नटी—अज्ज ! को उण एसो धरणिगोअरो भविअ चन्दं गहाभिजोआदो रक्खिदुं इच्छदि ? (१)

सूत्रधारः—आर्य्ये ! यत् सत्यं मयाऽपि न उपलक्षितो भवतु भूयोऽभियुक्तः स्वरव्यक्तिमुपलप्स्ये । ( क्रूरग्रह इत्यादि पुनः पठति )

( नेपथ्ये । ) आः क एष मयि स्थिते चन्द्रगुप्तमभिभवितुमिच्छति बलात् ?

सूत्रधारः—( आकर्ण्य । ) आं ज्ञातम !! कौटिल्यः—

---

( १ ) आर्य ! कः पुनरेष धरणिगोचरो भूत्वा चन्द्रं ग्रहाऽभियोगाद्रक्षितुमिच्छति ।

---

लाटी तु रीतिर्वैदर्भीपाञ्चाल्योरन्तरे स्थिता ।

इति दर्पणोक्तलक्षणाल्लाटी रीतिः ।

ओजश्चित्तस्य विस्ताररूपं दीप्तत्वमुच्यते ।

इति लक्षणादोजो गुणः । आर्यानाम छन्दः ॥ ६ ॥

सूत्रधारवाक्यावसाने रङ्गस्थाने भविष्यत्प्रवेशचाणक्यप्रवेशबोधनार्थं सूत्रधारप्राणप्रिया नटी तन्नाम पृच्छति—आर्येति । आर्य ! मान्य ! यो धरणिगोचरो भूत्वा भूमिस्थः सन् चन्द्रं ग्रहाभियोगाद्राहुग्रासाद्रक्षितुं त्रातुमिच्छति एष पुनः कः किनामक इत्यर्थः । न हि भूतलवर्त्तिजनकर्तृकमाकाशस्थेन्दुरक्षणं सम्भवतीति भावः ।

आर्ये यत्सत्यमिति । यदुक्तं त्वया भूमिस्थो जनश्चन्द्रं रक्षितुं न प्रभवति तत्सत्यमेवेत्यर्थः । किन्तु स्ववाक्यपूर्तौ साकांक्षेण मयाऽपि नोपलक्षितः कोऽसाविति न ज्ञातः । भवतु अस्तु भूयः पुनः अभियुक्तः सावधानः सन् स्वरव्यक्ति कण्ठरवेण व्यक्ति विशिष्टजनमुपलप्स्ये ज्ञास्यामीत्यर्थः ।

आ इति । क एष किनामकोऽसौ यो मयि चाणक्ये स्थिते विद्यमाने सति चन्द्रगुप्तं वृषलं बलात्प्रसभेन पराभवितुं वाञ्छति ।

आकर्ण्येति । श्रुत्वेत्यर्थः । आं ज्ञातम् ( आमिति स्मरणार्थकमव्ययम् ) स्वरयोगात् क एष मयीत्यादिवाक्यं प्रयुञ्जानश्चाणक्योऽपरनामा कौटिल्योऽसाविति ज्ञातमित्यर्थः ।

अन्तर्जवनिकासंस्थैः सूचनार्थस्य चूलिका ।

( इत्यर्द्धोक्ते नटी भयं नाटयति ) ।

सूत्रधारः—कौटिल्य कुटिलमतिः स एष येन
क्रोधाग्नौ प्रसभमदाहि नन्दवंशः ।
चन्द्रस्य ग्रहणमिति श्रुतेः सनाम्नो
मौर्य्येन्दोर्द्विषदभियोग इत्यवैति ॥ ७ ॥

---

अनिर्गता प्रविष्टैश्च नेपथ्यान्तर्गतैस्तथा ।
प्रयोजिता मध्यपात्रैः सूचिता चूलिका भवेत् ॥

इति दर्पण–काव्यप्रकाशलक्षणाभ्यां नेपथ्यस्थचाणक्यपात्रेण नाटकीयतात्पर्य-बोधनादामुखान्तरेऽप्यर्थोपक्षेपकश्चूलिकानामेति बोध्यम् ।

भयं नाटयतीति । हस्तपादादिव्यापारेण त्रासं व्यञ्जयतीत्यर्थः ।

कौटिल्य इति । येन कृतसत्यप्रतिज्ञेन ब्राह्मणेन क्रोधाग्नौ क्रोधोऽग्निरिवेति समासः, कोपानल इत्यर्थः । प्रसभं हठात् नन्दवंशः योगानन्दकुलं योगानन्दस्याष्टौ पुत्रा इत्यर्थः । अदाहि अग्निसात्कृतः ।

उक्तञ्चैतद्विष्णुपुराणेऽपि—

नव नन्दा भविष्यन्ति चाणक्यो यान् हनिष्यति ।

इत्यादि । स एव कुटिलमतिः क्रूरस्वभावः कौटिल्यश्चाणक्यः चन्द्रस्य ग्रह-णमिति श्रुतेराकर्णनात् सनाम्नस्तुल्याख्यस्य ( समानं नाम यस्येति बहुव्रीहौ 'ज्यो-तिर्जनपदे' ति सूत्रेण समानस्य सादेशाद्रूपम् ) । मौर्येन्दोः मुरानाम्न्याः कस्या-श्चिन्नन्दकिकर्या अपत्यं पुमान् मौर्यस्स इन्दुरिव तस्य तथोक्तस्य चन्द्रगुप्तस्येत्यर्थः । द्विषता शत्रुणा मलयकेतु–राक्षसोभयरूपेणाऽभियोग आक्रमणम् इत्यवैति ज्ञायते 'द्विषोऽमित्रे' इति द्विषेः शतरि रूपम् । उपैतीति पाठे रङ्गस्थानमागच्छतीत्यर्थः ।

रूपकं रूपितारोपाद्विषये निरपह्नवे ।
तत्परम्परितं साङ्गं निरङ्गमिति च त्रिधा ॥
यत्र कस्यचिदारोपः परारोपणकारणम् ।
तत्परम्परितं श्लिष्टाश्लिष्टशब्दनिबन्धनम् ॥

---

क्रूरग्रह इति पदेन गुप्तरूपेण प्रतिपादितश्चाणक्यपरिचयोऽमुना पदेन प्रसिद्धरूपेण सोऽ-भिधीयते ॥ ७ ॥

तदित आवां गच्छावः । ( निष्क्रान्तौ । )

इति प्रस्तावना ।

( ततः प्रविशति मुक्तां शिखां परामृशन् चाणक्यः ) ।

चाणक्यः—कथय क एष मयि स्थिते चन्द्रगुप्तमभिभवितुमिच्छति बलात्?—

---

इति दर्पणोक्तलक्षणद्वयेन क्रौर्यऽभित्वारोपस्य वंशे वेणुत्वारोपनिमित्तत्वाद्दंशाब्दश्लिष्टत्वाच्च मौर्य इन्दुरिवेत्युपमासंसृष्टश्लिष्टपरम्परितरूपकालंकारः । अत्र पाञ्चाली रीतिः । ओजोऽत्र गुणः । प्रहर्षिणीवृत्तम् । त्र्याशाभिर्मनजरगाः प्रहर्षिणीयमिति लक्षणात् ॥ ७ ॥

प्रस्तावनेति । प्रस्तूयते इतिवृत्तमुद्भाव्यते सूच्यते अनया सा प्रस्तावना । अत्र नटी-सूत्रधारयोरन्योन्यसंलापेन प्रस्ताव्यविषयोद्भावनादियं प्रस्तावना नाम । उक्तञ्च तल्लक्षणं साहित्यदर्पणे—

नटी विदूषको वापि पारिपार्श्वक एव वा ।

सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥

आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनाऽपि सा इति ॥

एषा च प्रस्तावना प्रदर्शितरात्रद्वयप्रयुक्तचन्द्रग्रहणरूपार्थकपदानामभिप्रेतार्थतात्पर्येणार्थान्तरे चन्द्रगुप्तादिरूपे संयोजनपूर्वकम्, आः क एष इत्याद्युक्त्या चाणक्यप्रवेशादुद्घात्यकसंज्ञका । उक्तं तल्लक्षणं दर्पणे—

पदानि त्वगतार्थानि तदर्थगतये नराः ।

योजयन्ति पदैरन्यैः स उद्घात्यक उच्यते ॥

इति ।

सूत्रधारस्य वाक्यं वा समादायार्थमस्य वा ।

भवेत्पात्रप्रवेशश्चेत्कथोद्घातः स उच्यते ॥

इति दर्पणोक्तलक्षणात् रक्षत्येनं तु बुधयोग इति सूत्रधारोक्तमभिश्रुत्यैवोक्तपात्रप्रवेशादेषा कथोद्घातरूपा प्रस्तावनेति केचित् ॥

ततः प्रविशतीति । मुरासूनुराज्यध्वंसैश्वर्यकारणीभूतराक्षसाऽऽयत्तीकरणात्मकप्रधानप्रयोजनार्थस्य चाणक्यवाक्यस्यानुकूलदैवकृतराक्षसमुद्राप्राप्तिलक्षणावान्तरप्रयोजनेन सम्बन्धसद्भावात् आरम्भबीज-सम्बन्धबीजसमुत्पत्त्योश्च सद्भावाच्च, अ-

आस्वादितद्विरदशोणितशोणशोभां
सन्ध्यारुणामिव कलां शशलाञ्छनस्य।
जृम्भाविदारितमुखस्य मुखात्स्फुरन्तीं
को हर्तुमिच्छति हरेः परिभूय दंष्ट्राम्॥ ८॥

---

स्मिन्नाटके ततः प्रविशतीत्यादिना मुखसन्धिमारभते। एतत्प्रपञ्चस्तु प्रागेव सलक्षणः प्रदर्शित इत्यनुसन्धेयम्। मुक्तामबद्धां शिखां चूडां परामृशन् चाणक्यः कौटिल्यः प्रविशति आगच्छति रङ्गस्थानमिति शेषः। मौर्यनिहितराज्यश्रियोऽधुनाप्यनिश्चलत्वान्नन्दान्वयनाशप्रतिज्ञाकाले बन्धनमुक्ता शिखा न बद्धेत्यभिप्रायः।

ननु सराक्षसमलयकेतुकर्तृकचन्द्रगुप्तातिक्रमणाऽसम्भवमभिदर्शयन्नाह–आस्वादितेति। को जनः द्वौ रदौ दन्तौ यस्य स द्विरदस्तस्य शोणितं रक्तं द्विरदशोणितं (षष्ठीतत्पुरुषसमासः) आस्वादितं पीतं च तत् द्विरदशोणितञ्चेत्यास्वादितद्विरदशोणितं (कर्मधारयसमासः) तेन शोणा रक्तवर्णा रक्तोत्पलाभेति यावत् (शोणः कोकनदच्छविरि)त्यमरकोशोक्तवचनाद्रक्तकमलकान्तेरेव शोणशब्दः पर्याय इति बोध्यम्। शोभा कान्तिर्यस्याः सा तथोक्ता तां तथोक्तां (अत्र व्यधिकरणपदो बहुव्रीहिः) सन्ध्यया सन्ध्यारागेण अरुणामीषद्रक्तवर्णां, शशो लाञ्छनं चिह्नं यस्य स शशलाञ्छनस्तस्य तथोक्तस्य चन्द्रस्येत्यर्थः। कलां षोडशांशमिव स्फुरन्तीं प्रकाशमानां जृम्भया शरीरालस्यपरिहारकाऽऽस्यव्यादानात्मकव्यापारविशेषेण विदारितं प्रसारितं मुखमास्यं येन स जृम्भाविदारितमुखस्तस्य तथोक्तस्य (अत्रापि व्यधिकरणपदबहुव्रीहिः) हरेः सिंहस्य दंष्ट्रां दंशनं (दाम्नीशसे)ति सूत्रेण दंशेः ष्ट्रनि रूपम्। परिभूय पराजित्य हरिमिति शेषः, हर्तुमुत्पाटयितुमिच्छति वाञ्छतीति पद्यस्य वाच्योऽर्थः। को जन इत्यनेन राक्षसस्यातिशयक्लिष्टकार्यसम्पादननैपुण्याऽधिकसामर्थ्यवत्त्वबोधनम्। आस्वादितेति विशेषणदानेन लघुसमयसम्पादितनन्दकुलक्षयकोपोपशमनसूचनम्। चन्द्रकलादृष्टान्तेन सकलजनानन्दसन्दोहोत्पत्तिहेतुभूतनूतनचन्द्रगुप्तराज्यश्रियो वर्द्धनशीलत्वमौर्यो नृत्यवस्थयोस्तत्र राज्यश्रियोऽधिकस्नेहवत्त्वस्य च ज्ञापनम्। सकलाङ्गसम्पन्ना मौर्यराज्यलक्ष्मीर्न शत्रुसाध्येति स्फुरन्तीमिति विशेषणं सूचयति। सन्ध्यारुणामित्यनेनानिद्रितस्यापि मम पराक्रमानादरपूर्वकमौर्यलक्ष्मीहरणोत्सुकोऽतिवीरो नीतिविद्राक्षसो वशम्वदयोरय इति सूच-

यति। पद्येऽस्मिन् अप्रस्तुतहरिदर्शनेन प्रस्तुतचाणक्यदर्शनात्—

अप्रस्तुतात्प्रस्तुतं चेद्गम्यते पञ्चधा ततः।

अप्रस्तुतप्रशंसा स्यात्॥

इति साहित्यदर्पणोक्तलक्षणादप्रस्तुतप्रशंसया संक्रान्ता सन्ध्यारुणामित्यनेनोपमानोपमेयगतारुणत्वरूपसाधारणधर्मस्य कलामिवेत्युभाभ्यामुपमानवाचकात्सौपम्यप्रतिपादकशब्दयोश्च दंष्ट्रामित्यनेनोपमेयप्रतिपादकशब्दस्य चाभिधानात्—

सा पूर्णा यदि सामान्यधर्म औपम्यवाचि च।

उपमेयं चोपमानं भवेद्वाच्यम्॥

इति दर्पणोक्तलक्षणात्पूर्णोपमालंकारः, तस्याश्च दंष्ट्रायाः शुक्लगुणत्यागाल्लोहितगुणादानात् तद्गुणालङ्कारेण योगः। उक्तञ्च तल्लक्षणं साहित्यदर्पणे—

तद्गुणः स्वगुणत्यागादत्युत्कृष्टगुणग्रहः॥ इति॥

सिंहपराजयाद्दन्तसंहरणेच्छेव मत्पराभवान्मौर्यलक्ष्मीहरणेच्छेति बिम्बप्रतिबिम्बभाव ( सादृश्य ) बोधनेन।

सम्भवन्वस्तुसम्बन्धोऽसम्भवन्वापि कुत्रचित्।

यत्र बिम्बानुबिम्बत्वं बोधयेत्सा निदर्शना॥

इति साहित्यदर्पणधृतलक्षणादत्र निदर्शनालङ्कार इति केचित्। मलयकेतुराक्षसेत्युभयकर्तृकचाणक्यपराभवपूर्वकमौर्यश्रीहरणरूपविषयस्य हरिपराभवपूर्वकदंष्ट्राकरणरूपविषयिणाऽध्यवसानात्—

रूपकातिशयोक्तिः स्यान्निगीर्याध्यवसानतः।

इति कुवलयानन्दोक्तलक्षणादत्र रूपकातिशयोक्त्यलङ्कार इत्यन्ये। अत्र गौडी रीतिस्तल्लक्षणं यथा—

ओजः प्रकाशकैर्वर्णैर्बन्ध आडम्बरः पुनः।

समासबहुला गौडीति॥

वस्तुतस्तु—समस्तपञ्चपद इति लक्षणसंघटमास्पाञ्चाली रीतिः। ओजोऽत्र गुणः। उक्तञ्च तल्लक्षणं दर्पणे—

ओजश्चित्तस्य विस्ताररूपं दीप्तत्वमुच्यते।

इति। वसन्ततिलकं वृत्तम्, तल्लक्षणं यथा छन्दोमञ्जर्याम्—

ज्ञेयं वसन्ततिलकं तभजा जगौ गः॥ ८॥

अपि च—

नन्दकुलकालभुजगीं कोपानलबहललोलधूमलताम् ।
अद्यापि बध्यमानां बध्यः को नेच्छति शिखां मे ? ॥ ९ ॥

---

ननु शिखामोक्षणापराधसमुद्भूतनन्दकुलक्षयात्मककार्यावसाने साम्प्रतं प्रतिश्रुतप्रयोजननिष्पत्त्या तद्बन्धनक्षणागतौ तदुद्योगकरणस्याऽऽवश्यकत्वेऽपि भूयोऽपि मौर्याऽभिभवाकर्णनान्मे कोपप्रशान्तिरित्यभिदर्शयन्नाह–नन्दकुलेति । वधमर्हतीति बध्यः 'अर्हे कृत्यतृचश्चे'ति सूत्रेण बधेर्यति वा हन्तुं योग्य इत्यर्थे (हनो वा यद्वधश्च वक्तव्यः) इति वार्तिकेन हन्तेर्यति वधादेशे च रूपम् । बध्योऽन्यः को जनः नन्दकुलस्य नन्दान्वयस्य कालभुजगीं कालसर्पिणीं तामिवेति वा, कोप एवानलो वह्निः कोपोऽनल इवेति वा तस्य बहुला अधिका लोला चञ्चला धूमलता तां तामिवेति वा मे मम शिखां चूडाम् अद्यापि नन्दान्वयक्षयेऽपि बध्यमानां (बध्नातेर्यगन्ताच्छानच्) मया संयन्तुमारभ्यमाणां नेच्छति नाऽभिलष्यतीत्यर्थः । न हि मलयकेतुनिग्रहमन्तरा शिखाबन्धनं मे भविष्यतीति पर्यवसितम् । अद्यापीत्यनेन साक्षान्नन्दकुलक्षयरूपशिखामोक्षणप्रयोजनदर्शनेऽपि राक्षसकर्तृकमदनभिलषितवस्तुसम्पादनोद्योगस्यायुक्तत्वं बोधयति । यो न नन्दकुलान्तकारिशिखाबन्धनाऽभिलाषी मन्ये सोऽवश्यमुक्तनृपतिकुलमिव फलभागीति भावः ।

शिखायां कालभुजगीत्व–धूमलतात्वयोरारोपात् कोपेऽनलत्वारोपस्य शिखायां धूमलतात्वारोपनिमित्तभूतत्वाच्च पद्येऽस्मिन् अश्लिष्टशब्दनिबन्धनमालारूपकालंकारः । उक्तञ्च तल्लक्षणं साहित्यदर्पणे—

रूपकं रूपितारोपाद्विषये निरपह्नवे ।
यत्र कस्यचिदारोपः परारोपणकारणम् ।
तत्परम्परितं श्लिष्टाश्लिष्टशब्दनिबन्धनम् ।
प्रत्येकं केवलं मालारूपं चेति चतुर्विधम् ॥

अत्रापि रीतिर्गौडी । लक्षणं प्रागुक्तम् । ओजश्च गुणः । आर्यानाम छन्दः ॥ ९ ॥

अपि च—

उल्लंघयन् मम समुज्ज्वलतः प्रतापं
कोपस्य नन्दकुलकाननधूमकेतोः ।
सद्यः परात्मपरिणामविवेकमूढः
कः शालभेन विधिना लभतां विनाशम् ? ॥ १० ॥

---

न तूक्तपद्यद्वयप्रदर्शितसंरम्भमेव वीररसेन पुनर्दर्शयति–उल्लंघयन्निति । नन्दस्य कुलं नन्दकुलं ( षष्ठीतत्पुरुषसमासः ) तदेव काननं वनं तस्य धूमकेतुर्वह्निः ( अत्राप्युक्तसमासः ) तस्य तथोक्तस्य समुज्ज्वलतो दीप्तस्य मम मामकीनस्य कोपस्याऽमर्षस्य प्रतापं तेजः शक्तिमिति यावत् । उल्लंघयन्नतिक्रामन् परस्य शत्रोः आत्मनः स्वस्य च यः परिणामः उभयोरन्यतररूपस्तारतम्यरूपो वा तस्य विवेको विशिष्टज्ञानम् तत्र मूढो ज्ञानशून्यः (परिमाणेति पाठेऽप्युक्त एवार्थः) को जनः शलभस्यायं शालभः ( इदमर्थेऽण् ) तेन तथोक्तेन विधिना वह्निप्रवेशात्मकपतङ्गसम्बन्धिव्यापारेणेत्यर्थः । विनाशं क्षयं लभतां प्राप्नोतु । यो मच्छासनावमानपूर्वकानभिप्रेतकार्यकारी स वह्निप्रविष्टः पतङ्ग इव कोपाग्नौ विनंक्ष्यतीति भावः । नन्दकुले काननत्वारोपहेतुभूतस्य कोपे वह्नित्वारोपस्य सत्त्वेन—

> यत्र कस्यचिदारोपः परारोपणकारणम् ।
> तत्परम्परितं श्लिष्टाश्लिष्टशब्दनिबन्धनम् ॥

इति दर्पणकृतवचनादश्लिष्टशब्दनिबन्धनपरम्परितरूपकालङ्कारः । स च वह्निप्रविष्टः शलभ इव कोपानलप्रविष्टः सन् विनंक्ष्यतीति बिम्बप्रतिबिम्बभाव ( सादृश्य ) बोधनात्सम्भवद्वस्तुसम्बन्धनिदर्शनया ( तन्नाम्यालङ्कारेण ) संसृष्टः एतल्लक्षणं यथा—

> सम्भवन्वस्तुसम्बन्धोऽसम्भवन्वापि कुत्रचित् ।
> यत्र बिम्बानुबिम्बत्वं बोधयेत्सा निदर्शना ॥ इति ।

अत्रालंकारद्वयस्य मिथस्तया संसृष्टिनामालंकारः । उक्तञ्च तल्लक्षणं काव्यप्रकाशे ।

> सेषा संसृष्टिरेतेषां भेदेन यदिह स्थितिरिति ।

ओजः प्रकाशकैर्वर्णैरित्युक्तलक्षणादत्र गौडी रीतिः । ओजो गुणः । वीरो रसः । वसन्ततिलकं वृत्तम् ॥ १० ॥

शार्ङ्गरव शार्ङ्गरव !

शिष्यः— (प्रविश्य) उपाध्याय ! आज्ञापयतु ।

चाणक्यः—वत्स ! उपवेष्टुमिच्छामि ।

शिष्यः—उपाध्याय ! ननु इयं सन्निहितवेत्रासनैव द्वारप्रकोष्ठशाला, तदस्यामुपवेष्टुमर्हत्युपाध्यायः ।

चाणक्यः—वत्स ! कार्य्याभियोग एवास्मानाकुलयति न पुनरुपा-

---

शार्ङ्गरवेति—कार्यवैयाकुल्येन ( व्याकुलत्वेन ) द्विरुक्तिः ।

प्रविश्येति । रङ्गस्थानमिति शेषः । उपेत्याऽधीयतेऽस्मादित्युपाध्यायः उपाङ्पूर्वकादिङः 'इङश्चे'ति घञि रूपम् । आज्ञापयतु मामिति शेषः, आज्ञाप्रदानेन मां कार्ये नियोजयत्वित्यर्थः । आङ्पूर्वकाज्ज्ञातेर्हेतुमण्णिचि रूपम् ।

वत्सेति—उपवेष्टुमिच्छामि आसने इत्यादिः । उपालम्भान्तर्गतं वचनमिदम् । निन्दायुक्तमुक्तं उपालम्भ इति परिभाषणम्भवति ।

यः सनिन्द उपालम्भस्तत्र स्यात्परिभाषणमि-

त्यमरोक्तेः । एतत्समयपर्यन्तमपि त्वयाऽऽसनं न सज्जीकृतमिति तदभिप्रायः ।

उपाध्यायेति । संनिहितं समीपस्थं वेत्रासनं वीरुदास्तरणं यस्यां सा तथाक्ता प्रकोष्ठशाला गृहैकावयवप्रदेश इत्यर्थः ।

वत्स, कार्याऽभियोग इति—कार्ये रिपूच्छेदनव्यापारात्मके कृत्येऽभिनियोगः आसक्तता अस्मान् आकुलयति व्याकुलं करोति कार्यान्तरं विदधतोऽपि तवाऽऽह्वाने मुखरयतीत्यर्थः । न पुनरुपाध्यायसहभूः सह भवति उत्पद्यत इति सहभूः स्वभावोद्भवा अध्यापकानां विदुषां गुरूणामित्यर्थः । सहभूः स्वाभाविकी शिष्यजने त्वादृशे सकलकृत्यसम्पादनशीले दुःशीलता कदाचारो न पुनराकुलं करोतीत्यर्थः । गुरुकर्तृकप्सितवस्तुजिज्ञासासद्भावे कुतश्चिदपि शिष्यस्तत्सम्पादयति शिष्यकर्तृकेप्सितजिज्ञासायां तु तत्स्थानमेव गुरुरुपदिशति न तु तत्सम्पादनं करोति, आस्तरणानयनमन्तरेव तत्स्थानोपदेशकरणेनोपाध्यायमपि त्वमिति शिष्यजने त्वयि दुःशीलत्वमपि कृत्यान्तरासक्तमनसं मां नाऽऽकुलयति । यद्वा—न्यूनेऽप्यागसि शिष्योपालम्भनमुपाध्यायसहभूतो दोषः सेवानिरतस्यापि तवोपालम्भनं तु कृत्यान्तरासक्तत्वात्कृतमिति भावः ।

ध्यायसहभूः शिष्यजने दुःशीलता! ( नाट्येनोपविश्यात्मगतम् )। कथं प्रकाशतां गतोऽयमर्थः पौरेषु, यथा किल नन्दकुलविनाशजनितरोषो राक्षसः पितृवधामर्षितेन सकलनन्दराज्यपरिपणनप्रोत्साहितेन पर्वतकपुत्रेण मलयकेतुना सह सन्धाय तदुपगृहीतेन च महता म्लेच्छराजेन परिवृतो वृषलमभियोक्तुमुद्यत इति। ( विचिन्त्य )। अथ वा येन मया सर्वलोकप्रकाशं नन्दवंशवधं प्रतिज्ञाय निस्तीर्णा दुस्तरा प्रतिज्ञासरित्, सोऽहमिदानीं प्रकाशीभवन्तमप्येनमर्थं न समर्थः किं प्रशमयितुम्? इति। कृत एतत्? यस्य मम—

---

उपक्षेपः परिकरः परिन्यासो विलोभनम्।
युक्तिः प्राप्तिः समाधानं विधानं परिभावना॥
उद्भेदः कारणं भेद एतान्यङ्गानि वै मुखे॥

इति दर्पणोक्तलक्षणान्मुखसन्धेर्बीजारम्भसमन्वयेन द्वादशाङ्गानि विधेयानीति बोध्यम्। नाट्येनेति। नटव्यापारेणेत्यर्थः। उपविश्येत्यस्यासने इत्यादिः। आत्मगतं स्वगतमित्यर्थः। सामाजिकमात्रश्राव्यं न तु सर्वैरिति यावत्।

यत्तु श्राव्यं न सर्वस्य स्वगतं तदिहोच्यते।

इति भरतोक्तवचनस्थसर्वपदस्य सामाजिकमात्रतात्पर्यकत्वान्नैतेनोक्तार्थस्य विरोधः।

कथं प्रकाशतामिति। अयमर्थः सम्वादः पौरेषु पुरवासिषु जनेषु कथं केन प्रकारेण प्रकाशतां स्याति गतः प्राप्तः।

अर्थमाह—यथा किलेति। नन्दानां कुलस्य विनाशेन क्षयेण जनितः समुत्पादितो रोषः क्रोधो यस्य स तथोक्तो राक्षसः सुबुद्धयपराख्यः प्रधानमन्त्री, पितुः पर्वतकस्य वधेन चाणक्यप्रेषितविषकन्याप्रयोगमूलकहननेन अमर्षितः क्रुद्धस्तथोक्तेन ( पूर्वं षष्ठीतत्पुरुषस्ततः कर्मकरणे कृतेति समासः ) सकलं च तन्नन्दराज्यमिति सकलनन्दराज्यं तदेव परिपणनं चन्द्रगुप्तविजयं उत्कटत्वेन दानस्वीकरणं तेन प्रोत्साहितः समुत्पादितोत्साहस्तेन तथोक्तेन ( पूर्वं सकलनन्दराज्यशब्दयोः कर्मधारयस्ततः समस्तेन परिपणनशब्देन सह पुनः कर्मधारयः ततः कर्मकरणे इति समासः ) पर्वतकपुत्रेण मलयकेतुना सह सन्धाय संमिलय तेन मलयकेतुना उपगृहीतं तदुपगृहीतं तेन तथोक्तेन ( अत्रापि कृता समासः ) महता अजय्येन म्लेच्छानां यवनानां

श्यामीकृत्याननेन्दून् रिपुयुवतिदिशां सन्ततैः शोकधूमैः
कामं मन्त्रिद्रुमेभ्यो नयपवनहृतं मोहभस्म प्रकीर्य ।
दग्ध्वा सम्भ्रान्तपौरद्विजगणरहितान् नन्दवंशप्ररोहान्
दाह्याभावान्न खेदात् ज्वलन इव वने शाम्यति क्रोधवह्निः ॥११॥

---

राजा स्वामी म्लेच्छराजः ( अत्र पूर्वं म्लेच्छराजशब्दयोः षष्ठीतत्पुरुषसमासे कृते 'राजाहः सखिभ्यष्टच्' इति टच् ) तेन तथोक्तेन म्लेच्छाधिपसैन्येन वा परिवृतः परिवेष्टितो युक्त इति यावत् । सन् वृषलः शूद्रः, ( शूद्रागर्भजातत्वाद्वृषलत्वमस्येति बोध्यम् । वृषं धर्मं लाति नाशयतीति विग्रहः ) अभियोक्तुमाक्रमितुमुद्यतः कृतोद्योगः अस्तीति शेषः । एतन्नगरस्य नन्दनृपबलाक्रान्तत्वात्प्रकृतीनाञ्च तत्प्रधानामात्यपदवीमधिरोहति राक्षसेऽनुरक्तत्वात्तदुद्योगश्रवणेन मदीयान्तःकरणस्याऽतिक्षुब्धत्वात्प्रचुरविपत्सम्प्राप्तेति चिन्ता । तत्परिहारप्रकारमाह—अथ वेति । येन मया चाणक्येन सर्वलोकप्रकाशं सकलजनविदितं सर्वेषां लोकानां प्रकाशं समक्षमिति वा नन्दवंशवधं नन्दकुलक्षयं प्रतिज्ञाय प्रतिश्रुत्य दुस्तरा दुःखेन तर्तुं शक्या प्रतिज्ञासरित् प्रतिज्ञा एव सरित् नदी ( अत्र रूपकम् ) प्रतिज्ञा सरिदिवेति वा ( अत्रोपमा ) निस्तीर्णा समुत्तीर्णा, पारंगता सोऽहं चाणक्यः इदानीं साम्प्रतं प्रकाशीभवन्तमपि न प्रकाशोऽप्रकाशः तं प्रकाशं सम्पद्यमानं प्रकाशीभवन्तं (।अभूततद्भावे च्विः ) एतमर्थं समलयकेतुराक्षसकर्तृकमौर्यातिक्रमणरूपमित्यर्थः । प्रशमयितुं शान्तयितुं किं समर्थो न क्षमोऽपि तु क्षम एव, सम्प्राप्तस्याऽप्येतस्य दण्डेन वारणं करिष्यामीति तदभिप्रायः ॥

ननु चाणक्यः पद्यद्वयेन निजपराक्रममेव प्रकटयति-श्यामीकृत्येति । पद्यद्वयादौ यस्य ममेति गद्यस्यपदद्वयस्य सम्बन्धः यस्य मम क्रोधवह्निः क्रोधः कोप एव वह्निरग्निरित्यर्थः कोपानल इति यावत् । सन्ततैरतिविस्तृतैः ( सम्पूर्वकात्तनोतेः क्ते रूपम् ) शोकाः स्वामिविरहोद्भवक्लेशा एव धूमास्तैस्तथोक्तैः (मालिन्योत्पादने शोकधूमयोस्समानसामर्थ्यवत्त्वाद्धूमत्वेन शोकव्यवहारः) रिपूणां शत्रूणां युवतयः स्त्रियो रिपुयुवतयस्ता एव दिशः ककुभस्तासामाननानि मुखानि एव इन्दवश्चन्द्रास्तान् श्यामीकृत्य ( अश्यामान् श्यामान् कृत्वेति विग्रहे अभूततद्भावे च्विः ) मलिनान् विधायेत्यर्थः । मन्त्रिणो मन्त्रामात्या एव द्रुमाः शाखिनस्तेभ्यस्तथोक्ते-

न्यः ( विक्षेपणक्रियाऽभिप्रेतमन्त्रिकुमशब्दानां 'कर्मणा यमभिप्रैतीति' सम्प्रदानत्वम् ) नयो नीतिरेव पवनो वायुस्तेन हतमानीतं मोहोऽविवेक एव भस्म तद् विप्रकीर्य विक्षिप्य ( वि-प्रपूर्वकात्किरतेर्ल्यपि रूपम् ) सम्भ्रान्ता उद्विग्ना ये पौराः पुरवासिनः द्विजानां ब्राह्मणानां च गणाः समूहाः ( वंशारण्यस्यानलमुखप्रविष्टत्वात्पक्षिणामुड्डीय पलायनेन पक्षिगणाश्चेत्यपि ध्वन्यते ) तै रहितान् शून्यान् ( एतेन पौरामात्यप्रभृतिपरित्यागपूर्वकप्रतिज्ञाविषयीभूतनन्दकुलविनाशकरणात्स्वदाक्ष्यख्यापनम् ) नन्दवंश एव वंशो वेणुस्तस्य प्ररोहानङ्कुरान् तद्वंश्यानित्यर्थः । दग्ध्वा भस्मसात्कृत्वा विनाश्येत्यर्थः दाह्यस्यान्यवस्तुनोऽभावादविद्यमानत्वात् न तु खेदात् परिश्रमात् ( खेदादित्यनेन दाहयोग्यापरवस्तुनोऽविद्यमानत्वेऽपि साम्प्रतं मलयकेतुरूपदाह्यवस्तुनः प्राप्तत्वात्तत्रापि मत्कोपानलो ज्वलिष्यतीति ध्वनितम् ) वने कानने ज्वलनो वह्निरिव क्रोधवह्निः कोपानलः शाम्यति विरमति निवर्त्तते इति यावत् । वंशसंघर्षतः समुत्पद्यमानो वनाग्निर्यथा दिगाननभूतमिन्दुं धूमैराच्छाद्य कुमोद्दूरस्थकपवनानीतभस्मप्रकीर्णानन्तरं वन्यान् वंशादिकान् भस्मीकृत्य दाह्यवस्त्वभावाद्विरमति तथैव नन्दकर्तृकमत्कर्मकावमानादुत्पद्यमानो मत्कोपानलः शोकरूपधूमद्वारा रिपुयुवतिमुखमालिन्यविधानानन्तरं नयेन मन्त्रिणं मोहयुतं विधाय नन्दान्वयक्षयं कृत्वा विरमतीति भावार्थः । क्रोधे वह्नित्वारोपः स्वाभाविकक्रोधवह्नेरसह्यत्वसूचनार्थः । अन्यथा ज्वलनस्य सदृशविधेयोक्त्यैवोपपत्तौ पुनस्तदारोपणमनर्थकं स्यात् । अत्र श्लोके क्रोधे वह्नित्वारोपणेन तत्कृतशोकमन्त्रिनयमोहनन्दान्वयेषु धूमत्वकुमत्वपवनत्वभस्मत्ववंशत्वारोपणादाननरिपुयुवत्योरिन्दुत्वदिक्त्वारोपणाच्च सकलारोप्यमाणानां शब्दप्रतिपाद्यत्वाच्च समस्तवस्तुविषयकसाङ्गरूपकालंकारः । उक्तञ्च तल्लक्षणं साहित्यदर्पणे—

> अङ्गिनो यदि साङ्गस्य रूपणं साङ्गमेव तत् ।
> समस्तवस्तुविषयमेकदेशविवर्ति च ॥
> आरोप्याणामशेषाणां शाब्दत्वे प्रथमं मतम् । इति ॥

सा च श्रौती यथेवसाः शब्दा इत्युक्तलक्षणात् । ज्वलन इवेतीवशब्दयोगेन श्रौत्युपमया प्रश्नादप्रश्नतो वापीत्यादिलक्षणाच्च खेदादिति परिसंख्यया च संकीर्णा । गौडी रीतिः । ओजो गुणः । स्रग्धरानामकं छन्दः ॥ ११ ॥

शोचन्तोऽवनतैर्नराधिपभयात् धिक्शब्दगर्भैर्मुखै-
र्मामग्रथासनतोऽवकृष्टमवशं ये दृष्टवन्तः पुरा ।
ते पश्यन्ति तथैव सम्प्रति जना नन्दं मया सान्वयं
सिंहेनेव गजेन्द्रमद्रिशिखरात् सिंहासनात् पातितम् ॥१२॥

सोऽहमिदानीमवसितप्रतिज्ञाभरोऽपि वृषलापेक्षया शस्त्रं धार-

---

शोचन्त इति । ये जना द्रष्टारः पुरा प्राक्काले नराणां मनुष्याणामधिपः स्वामी ( षष्ठीतत्पुरुषसमासः ) तस्माद्भयं त्रासः ( अत्र 'पञ्चमी भयेनेति' समासः ) तस्मात् अवनतैर्नम्रीकृतैर्निन्दितकार्यावलोकनतोऽपि दोष इति तात्पर्येणेति भावः । धिक् नृपतिमिति शब्दो गर्भेऽभ्यन्तरे येषां तैस्तथोक्तैर्मुखैरुपलक्षिताः ( 'इत्थम्भूतलक्षणे' इति तृतीया ) शोचन्तः निमन्त्रितक्षुधितब्राह्मणानादरकरणादन्तःशोकं कुर्वन्तः मां चाणक्यं अग्र्यासनतः अग्र्यं च तदासनमग्र्यासनं तस्मात् प्रशस्तश्राद्धीयब्राह्मणासनादित्यर्थः । अवकृष्टं च्यावितं दूरीकृतमिति यावत् अवशं तदानीं प्रतिकर्तुमशक्तं दृष्टवन्तोऽवलोकितवन्तः ते जनाः सम्प्रति इदानीं सिंहेन केशरिणा अद्रिशिखरात्पर्वतशृङ्गाद्गजेन्द्रं करिराजमिव मया चाणक्यनाम्ना ब्राह्मणेन सान्वयं पुत्रपौत्रादिसहितं नन्दं तदाख्यनृपं सिंहासनाद्राजासनात्पातितं भ्रंशितं तथैव अग्र्यासनादवकृष्टं मामिव पश्यन्ति समवलोकन्ते ( पश्यन्त्विति पाठे ) समवलोकन्तामित्यर्थः । नन्देन यथा ममापकृतं मयापि तथैव तदपकृतमिति सूचयति तथैवेति शब्दद्वयम् । नन्दकर्तृकमत्कर्मकानादरवन्मत्कर्तृकतत्कर्मकविनाशकरणेन मत्क्रोधस्य सर्वजनविदितत्वान्न मदग्रे केनापि विरुद्धाचारिणा वर्तितव्यमिति भावः । उपमानभूतसिंहस्योपमेयभूताऽस्मच्छब्दस्य पतनरूपसामान्यधर्मस्यौपम्यवाचकेवशब्दस्य च प्रतिपादनादत्र श्रौती पूर्णोपमालङ्कारः । उक्तं च लक्षणं दर्पणे—

सा पूर्णा यदि सामान्यधर्म औपम्यवाचि च ।
उपमेयं चोपमानं भवेद्वाच्यमियं पुनः ॥
श्रौती यथेववाशब्दा इवार्थो वा वतिर्यदि । इति ॥

अत्र वीरो रसः । गौडी रीतिः । ओजो गुणः । शार्दूलविक्रीडितं छन्दः । उक्तछन्दस्य लक्षणं छन्दोमञ्जर्याम्—

सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम् ॥ १२ ॥

( ६ ) सोऽहमिति—स पूर्वोक्तकार्यसम्पादकोऽहं चाणक्य इदानीं साम्प्रत

यामि येन मया—

समुत्खाता नन्दा नव हृदयरागा इव भुवः
कृता मौर्य्ये लक्ष्मीः सरसि नलिनीव स्थिरपदा ।
द्वयोः सारं तुल्यं द्वितयमभियुक्तेन मनसा
फलं कोपप्रीत्योर्द्विषति च विभक्तं सुहृदि च ॥ १३ ॥

---

प्रतिज्ञा प्रतिश्रुतिः भर इव क्लेशेन वहनयोग्यत्वाद्भार इव ( उपमितसमासः ) अवसितः समाप्तिं गतः प्रतिज्ञाभरो यस्य सोऽवसितप्रतिज्ञाभरः समुत्तीर्णप्रतिश्रुतिभारोऽपीत्यर्थः । ( अवपूर्वकषोधातोः कर्तरि क्तप्रत्यये रूपम् ) वृषलस्य चन्द्रगुप्तस्याऽपेक्षयाऽनुरोधेन हेतुना शस्त्रं नीतिरूपं शस्त्रमुद्योगं वा धारयामि करोमीत्यर्थः ।

एतेन—

काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृतः ।

इति दर्पणोक्तलक्षणादुपक्षेपनामकं मुखसन्धेरङ्गं दर्शितम् । राक्षसायत्तीकरणात्मककार्यवीजभूतस्योद्योगस्य वीजन्यासेनोपक्षेपात् ।

ननु शस्त्रधारणमावश्यकमित्याह—येन मयेति । येन मया चाणक्येन हृदयस्य चित्तस्य रागा विषयवासनारूपान्तःशत्रव इव भुवः पृथिव्याः ( पञ्चम्येकवचनान्तं ) सकाशात् नव नन्दाः महापद्मप्रपौत्राः समुत्खाताः समुन्मूलिताः ।

नव नन्दा भविष्यन्ति चाणक्यो यान् हनिष्यती—

ति विष्णुपुराणोक्तमनुसन्धेयम् । यद्वा भुवः हृदयरागाः, चित्तानुरञ्जका इव ( हृदयरोगा इवेति पाठे ) भुवः पृथिव्याः हृदयरोगाश्चित्तस्थितक्षयप्रभृतयो व्रणा इवेत्यर्थः । सरसि कासारे नलिनी कमलिनीव मौर्य्ये चन्द्रगुप्ते लक्ष्मीः राज्यश्रीः स्थिरपदा निश्चला चिरस्थायिनीति यावत् स्थिरं निश्चलं पदं स्थानं यस्या इति विग्रहः । कृता सम्पादिता । एतेन परिकरनामकं मुखसन्धेरङ्गं दर्शितम् । एवमभियुक्तेन निग्रहविषयकाग्रहवता मनसा हृदयेन द्वयोरुभयोः कोपप्रीत्योः ( कोपश्च प्रीतिश्चेति कर्मधारयः ) अमर्षस्नेहयोः तुल्यं सदृशं सारं स्थाय्यं द्वितयं द्विविधं निग्रहाऽनुग्रहरूपं फलं द्विषति शत्रौ ( द्विषेः शतरि सप्तम्येकवचने रूपम् ) सुहृदि मित्रे च विभक्तं विभज्य स्थापितम् सोऽहमिति पूर्वेणान्वयः । येन मया भूहृद्रोगमिव नन्दसमुदायं विनाश्य सरोवरे पद्मिनीमिव मौर्य्ये राज्यश्रियं स्थिरीकृत्य कोपस्य निग्रहरूपफलं शत्रौ स्नेहस्याऽनुग्रहरूपफलं मित्रे च स्थापितं सोऽहं चाण

क्यनामाऽस्मीति भावः । परिकराख्यमुखसन्ध्यङ्गलक्षणमुक्तं हि दर्पणे—

समुत्पन्नार्थबाहुल्यं क्षेपः परिकरो मतः ।

सारशब्दो न्यायादनपेतार्थकोऽपि क्लीबलिङ्गः कोशप्रामाण्यात् तथा हि—

सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु

इत्यमरः ।

विभक्तं विभज्य स्थापितमित्यनेन परिभावनानामकमुखसन्ध्यङ्गं प्रदर्शितमुक्तं च तल्लक्षणं यथा—

कुतूहलोत्तरा वाचः प्रोक्ता तु परिभावना । इति ॥

भवेत्सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना ।

वाच्या प्रतीयमाना सा प्रथमं द्विविधा मता ॥

वाच्येवादिप्रयोगे स्यादप्रयोगे परा पुनः ।

जातिर्गुणः क्रिया द्रव्यं यदुत्प्रेक्ष्यं द्वयोरपि ॥

इत्यादिदर्पणोक्तलक्षणात्प्रथमपादे हृदयरोगा इवेत्यत्रेवशब्दोपादानेन मन्दानां भूहृद्रोगत्वेन सम्भावनाद्वाच्या गुणोत्प्रेक्षालङ्कारः ।

सा पूर्णा यदि सामान्यधर्म औपम्यवाचि च ।

उपमेयं चोपमानं भवेद्वाच्यमियं पुनः ॥

श्रौती यथेववाशब्दाः,

इति दर्पणलक्षणाद्द्वितीयपादे उपमानभूतनलिनीशब्दस्योपमेयभूतमौर्यशब्दस्यौपम्यवाचकेवशब्दस्य स्थिरपदत्वरूपसामान्यधर्मस्य चाभिधानेन श्रौतीपूर्णोपमालङ्कारः ।

यथासंख्यमनुद्देश उद्दिष्टानां क्रमेण यत् ।

इति लक्षणात्तृतीय-चतुर्थपादयोः नन्दसमुन्मूलनेन तस्मिन् निग्रहात्मककोपफलस्य मौर्यश्रीस्थिरीकरणेन तस्मिन् अनुग्रहात्मकानुरागफलस्य च क्रमेण निर्देशात् यथासंख्यनामालङ्कारः । एषामेकत्र परस्परविमिश्रितत्वेनाऽवस्थानात्संसृष्टिनामालङ्कारः । उक्तञ्च तल्लक्षणं यथा—

यद्येत एवाऽलङ्काराः परस्परविमिश्रिताः ।

तदा पृथगलङ्कारौ संसृष्टिः सङ्करस्तथा ॥

इति । अत्र वैदर्भी रीतिः । ओजो गुणः । शिखरिणी छन्दः । तल्लक्षणं यथा छन्दोमञ्जर्याम्—

रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी । इति ॥ १३ ॥

अथवा, अगृहीते राक्षसे, किमुत्खातं नन्दवंशस्य, किं वा स्थैर्यमुत्पादितं चन्द्रगुप्तलक्ष्म्याः ? ( विचिन्त्य )। अहो ! राक्षसस्य नन्दवंशे निरतिशयो भक्तिगुणः स खलु, कस्मिंश्चिदपि जीवति नन्दान्वयावयवे, वृषलस्य साचिव्यं ग्राहयितुं न शक्यते। तदभियोगं प्रति नि

---

अथवेति। अथवा पक्षान्तरे अगृहीतेऽनायत्तीकृते मौर्यसाचिव्यमस्वीकारिते वा राक्षसे तदाख्यनन्दामात्ये, नन्दवंशस्य किं समुत्खातं समुन्मूलितं, वा अथवा चन्द्रगुप्तस्य मौर्यस्य लक्ष्मीः राज्यश्रीः तस्या मौर्यराज्यश्रियः किं स्थैर्यं नैश्चल्यमुत्पादितं सम्पादितम् न किमपीत्यर्थः। राक्षसबुद्धिमहिम्ना पुनरन्यनन्दवंश्यसमुत्थितौ मौर्यश्रीस्थैर्यासम्भवात्सकलानर्थनिदानभूतराक्षस एवायत्तीकर्तव्य इति भावः। ( विचिन्त्य ) विचारं कृत्वेत्यर्थः। अहो इति। ( इयं बीजविषये आश्चर्यविशः परिभावना नाम तृतीयमङ्गम् )। राक्षसस्य नन्दामात्यस्य नन्दवंशे नन्दान्वये नास्ति अतिशयोऽधिको यस्मात्स निरतिशयः अतिमहानित्यर्थः। यद्वा-अतिशयान्निष्क्रान्तो निरतिशयः ( निरादयः क्रान्ताद्यर्थे पञ्चम्येति समासः ) भक्तिगुणः भक्तिरेव गुणो भक्तिगुणः भक्तिश्च प्रीत्युत्पादकक्रियाविशेषः। अस्तीति शेषः। स राक्षसः कस्मिंश्चित्कस्मिंश्चिदपि नन्दान्वयावयवे नन्दकुलोत्पन्ने जीवति विद्यमाने सति वृषलस्य चन्द्रगुप्तस्य साचिव्यं मन्त्रित्वं ग्राहयितुं मन्त्रिपदे स्थापयितुमित्यर्थः, न शक्यते न प्रभूयते मयेति शेषः। तस्य नन्दान्वयावयवस्य अभियोगः प्रतिष्ठापनाभिमानस्तं प्रति निरुद्योगो व्यवसायहीनो राक्षसोऽवस्थापयितुं मौर्यमन्त्रिपद इति शेषः, अस्माभिः शक्यते। तदभियोगं प्रति निरुद्योगैरस्माभिरवस्थातुमयुक्तमिति पाठे तस्य राक्षसस्याऽभियोगो निग्रहस्तं प्रति निरुद्योगैर्व्यवसायशून्यैरस्माभिरवस्थातुं वर्तितुमयुक्तमसाम्प्रतमित्यर्थः।

बीजार्थस्य प्ररोहः स्यादुद्भेदः।
उद्भेदो गूढभेदनम्

इति दर्पण-दशरूपकोक्तलक्षणाभ्यां पूर्वमप्रकाशतया कृतस्य प्रकाशनादिदं मुखसन्ध्युद्भेदनामकमङ्गम् इति अनयैव बुद्ध्या कस्यापि नन्दवंश्यस्याऽसत्त्वेन तद्राज्यपुनःराक्षसोद्योगाऽभावादसौ संग्रहीतुमशक्यमित्यालोच्य, तपोवनगतोऽपि तपस्तप्तुं सेवितारण्योऽपि अवलम्बितवानप्रस्थधर्मोऽपीति यावत्, वैरसाधनानावश्यकत्वात्सर्वात्म-

रुद्योगोऽस्माभिरवस्थापयितुं शक्य इति अनयैव बुद्ध्या, तपोवनगतोऽपि घातितस्तपस्वी नन्दवंशीयः सर्वार्थसिद्धिः, यावदसौ मलयकेतुमङ्गीकृत्याऽस्मदुच्छेदाय विपुलतरं प्रयत्नमुपदर्शयत्येव । ( प्रत्यक्षवदाकाशे लक्ष्यं बद्ध्वा ) साधु अमात्य राक्षस ! मन्त्रिबृहस्पते ! साधु ।

---

वैराग्यत्वाच्चेति भावः । ( एतेन राज्येच्छाभावसूचनम् ) । तपस्वी तापसः, नन्दवंशीयो नन्दकुलोद्भवः सर्वार्थसिद्धिस्तदाख्यो घातितः मद्गुप्तचारपुरुषेण विनाशितः । ( णिजन्ताद्धन्तेः कर्मणि क्तप्रत्यये रूपम् ) तद्वधे दोषं प्रदर्शयति—यावदिति । असौ सर्वार्थसिद्धिः स्वयं त्यक्तराज्येच्छोऽप्योत्यादिः मलयकेतुं सुहृदात्मजमित्यर्थः । अङ्गीकृत्य स्वीकारार्थकादङ्गशब्दात् अनङ्गमङ्गं कृत्वेति विग्रहेऽभूततद्भावे च्वौ रूपम् । स्वराज्याधिपो भवतादिति स्वीकृत्येत्यर्थः । यावत् अस्माकमुच्छेदो विनाशस्तस्मै अस्मदुच्छेदाय अस्मानुच्छेत्तुमित्यर्थः ( 'तुमर्थाच्च भाववचनात्' इति चतुर्थी ) विपुलतरं महान्तं प्रयत्नं चेष्टां ( प्रपञ्चमिति पाठे युद्धोद्योगमित्यर्थः ) उपदर्शयत्येव करोत्येवेत्यर्थः । अथवा उपदर्शयिष्यत्येवेत्यर्थः । ( 'यावत्पुरानिपातयोर्लट्' इति सूत्रेण यावच्छब्दयोगे भविष्यत्यर्थे लट् ) प्रत्यक्षवत् प्रत्यक्षे इवेति विग्रहे ( 'तत्र तस्येव'ति सूत्रेण सप्तम्यान्ताद्वतिः ) साक्षाद्दृष्टिगोचरीभूते राक्षसे इवेति तदर्थः । यद्वा—

स्थितस्याभिमुखीभावमात्रं सम्बोधनं विदुः ।

इति भर्तृहरिप्रणीतकारिकया साक्षाद्विद्यमानस्यैव सम्बोधनत्वादविद्यमानस्य सद्भावेन दूरवर्तिनो राक्षसस्य सम्बोधनानौचित्यात्तदुपपत्तिं कविः समर्थयते—प्रत्यक्षवदिति । प्रत्यक्षेण तुल्यं प्रत्यक्षवत् आकाशे लक्ष्यशून्ये लक्ष्यं बद्ध्वा अप्रत्यक्षमपि राक्षसं बुद्धिस्थत्वादाकाशे स्थितमिति कृत्वेत्यर्थः । साधु ( अव्ययमिदमुत्कृष्टार्थे ) अमात्य राजसमीपवर्तिन् ( अमा समीपे वर्तते इति विग्रहे समीपार्थकादमाशब्दादव्ययात् 'अव्ययात्त्यप्' इति त्यपि सिद्धिः ) । राक्षस ! साधु समीचीनं, मन्त्रिबृहस्पते ! अमात्यसुरगुरो ! ( सूक्ष्मार्थदर्शनशीलत्वात् मन्त्री बृहस्पतिरिवेत्युपमितसमासः ) । यद्वा—सकलामरसचिवशिक्षाप्रदानशीलत्वात् मन्त्रिणां बृहस्पतिरिवेति बृहतां वाचां पतिः स्वामीति विग्रहे 'तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च' इति [illegible]

कुतः?—

ऐश्वर्य्यादनपेतमीश्वरमयं लोकोऽर्थतः सेवते
तं गच्छन्त्यनु ये विपत्तिषु पुनस्ते तत्प्रतिष्ठाऽऽशया।
भर्त्तुर्ये प्रलयेऽपि पूर्वसुकृतासङ्गेन निःसङ्गया
भक्त्या कार्य्यधुरां वहन्ति कृतिनस्ते दुर्लभास्त्वादृशाः॥ ११॥

---

पुनरेतेन तस्य साधुत्वमेव दर्शयति—ऐश्वर्यादिति। अयं साक्षाद्दृश्यमानो लोकः सांसारिकजन इत्यर्थः। ईश्वरस्य भाव ऐश्वर्यन्तस्मादैश्वर्यात्सम्पत्तेः प्रभुत्वाद्वा अनपेतं युक्तमित्यर्थः। ऐश्वर्यवन्तमिति यावत्, ईश्वरं प्रभुम् अर्थतोऽर्थलाभहेतोः (सार्वविभक्तिकस्तसिः) सेवते आश्रयति परिचरतीति यावत्। ये पुनः विपत्तिषु रिपुकृतव्यसनदुर्भिक्षादिसमयेषु सम्पद्राहित्येष्विति यावत्। तं प्रभुम् अनुगच्छन्ति परिचरन्ति तस्यापत्तौ विपदास्पदीभूतमिवात्मानं जानन्ति (यद्वा) तदापदमुद्धर्तुमतिशयोद्योगं कुर्वन्तीत्यर्थः। ते तस्य प्रभोः प्रतिष्ठा पुनरुत्थितिस्तत्र या आशा प्रभोरभ्युदये राज्यादिलाभोऽस्मदिष्टसिद्धिरित्येवंरूपा तया तत्प्रतिष्ठाशया (यद्वा) कीर्तिलाभेच्छया तमनुगच्छन्तीति शेषः। ये जनाः भर्त्तुः स्वामिनः प्रलयेऽपि विनाशेऽपि मरणेऽपीति यावत्। पूर्वं कृतस्य सुकृतस्याऽऽसङ्गः सम्पर्कः अविस्मरणमिति यावत् पूर्वसुकृतासङ्गस्तेन पुराकृतसंरक्षणाद्यविस्मरणेनेत्यर्थः। निःसङ्गया स्वार्थरहितया फलाशाशून्ययेति यावत्। भक्त्या सेवया कार्यस्य धूः भारः कार्यधुरा (ऋक्पूरब्धूःरि)ति समासान्ताऽप्रत्यये टापि प्रयोगः। तां कार्यधुरां कार्यभारं वहन्ति ते त्वादृशा भवद्विधाः कृतिनः कुशला धार्मिका वा दुर्लभा विरलाः प्रायः संसारे न दृष्टिगोचरा भवन्तीत्यर्थः। (गुणाख्यानं विलोभनमिति दर्पणोक्तलक्षणादिदं बीजगुणवर्णनं विलोभनं नाम मुखसन्ध्यङ्गम्)। धनशालिस्वामिसेवकोऽर्थलोभो, प्राप्तविपत्स्वामिसेवको विपन्नाशेऽर्थप्राप्तिसम्भावनया, स्वामिनि परलोकगामिनि सति पुराकृतोपकारस्मरणपुरस्सरं कार्यकारिणस्त्वादृशाः सेवकाः संसारे दुर्लभाः सन्तीति भावः। केषाञ्चित्स्वामिकार्यसम्पादकत्वमर्थप्राप्तिहेतुकं केषाञ्चित्तत्कार्यकारित्वं सम्भावितभाव्यर्थलाभहेतुकं तव स्वामिकार्यसम्पादनशीलत्वं तु पुराप्रभुकृतोपकृत्यविस्मरणेनेति त्वादृशा न केऽपि सन्तीति हेतुरूपाभिधानाद्उपमेयभूताऽमात्यापेक्षयोपमानभूतराक्षसस्य विशेषत्वप्रतिपादनाच्च व्यतिरेकोऽलङ्कारः। [illegible]

अत एवास्माकं त्वत्संग्रहे प्रयत्नः कथमसौ वृषलस्य साचिव्यग्रहणेन सानुग्रहः स्यादिति । कुतः ?—

अप्राज्ञेन च, कातरेण च, गुणः स्यात् सानुरागेण कः
प्रज्ञाविक्रमशालिनोऽपि हि भवेत्, किं भक्तहीनात् फलम् ?
प्रज्ञाविक्रमभक्तयः समुदिता येषां गुणा भूतये
ते भृत्या नृपतेः कलत्रमितरे, सम्पत्सु चापत्सु च ॥ १५ ॥

---

हित्यदर्पणे—

आधिक्यमुपमेयस्योपमानान्न्यूनताऽथवा ।
व्यतिरेक एक उक्त, ॥

इति । कुवलयानन्दकारमतेऽप्येषोऽलङ्कारः सङ्घटते, वक्ष्यमाणलक्षणात् तथा हि—

व्यतिरेके विशेषश्चेदुपमानोपमेययोः ।

इति । परं काव्यप्रकाशकारमते नाऽत्र निर्दिष्टनामालङ्कारस्तन्मते उपमानाऽपेक्षयोपमेयाधिक्यस्यैवैतदलङ्कारविषयत्वात्प्रदीपकारेणाऽप्येतस्यानुमोदितत्वादिह चोपमेयादुपमानस्याधिक्येनालङ्काराऽविषयत्वादुक्तं च तल्लक्षणं यथा—

उपमानाद्यदन्यस्य व्यतिरेकः स एव सः ।

इति । उपमानापेक्षयाऽन्यस्योपमेयस्य व्यतिरेक एवाऽऽधिक्यमेव व्यतिरेक इति तदर्थः । अत्र शान्तो रसः । वैदर्भी रीतिः । माधुर्यगुणः । शार्दूलविक्रीडितं छन्दः ॥ १४ ॥

अत एवेति । अलौकिकगुणवत्त्वादेव ( यद्वा ) राक्षसस्तदनुजीविनोऽसत्त्वादेवेत्यर्थः । एतेन प्रकृतार्थसमारम्भः करणमिति दर्पणोक्तलक्षणात्करणं नाम मुखसन्ध्यङ्गम्प्रदर्शितम् । त्वत्संग्रहे तव राक्षसस्यायत्तीकरणे यत्न उद्योगः असौ राक्षसः कथं केन प्रकारेण वृषलस्य चन्द्रगुप्तस्य साचिव्यग्रहणेन मन्त्रित्वाङ्गीकारेण सानुग्रहः अनुग्रहेण सह विद्यमानः सानुग्रहः कृतकृत्यः स्याद्भवेदित्यर्थः ॥

अप्राज्ञेनेति । प्रकृष्टं विशेषं जानातीति प्रज्ञः ( प्रपूर्वकाज्ज्ञाधातोः 'प्रे दाज्ञः' इति सूत्रेण कप्रत्यये रूपम् ) प्रज्ञ एव प्राज्ञः स्वार्थेऽण् न प्राज्ञोऽप्राज्ञस्तेनाऽप्राज्ञेन बुद्धिहीनेन कातरेण अपराक्रमिणा सामर्थ्यरहितेनेति यावत् । अनुरागेण स्नेहेन भक्त्येति यावत् । सहानुरागेण वर्तमानः सानुरागस्तेन साऽनुरागेण अनुरक्तेन [illegible]

तन्मयाऽप्यस्मिन् वस्तुनि न शयानेन स्थीयते, यथाशक्ति क्रियते तद्ग्रहणं प्रति यत्नः कथमिति ? अत्र तावद् वृषल-पर्वतकयोरन्यतरविनाशेनापि, चाणक्यस्यापकृतं भवतीति, विषकन्यया राक्षसेनास्मा-

---

को गुणः किं प्रयोजनं न कोऽपि गुण इत्यर्थः । प्रज्ञा बुद्धिः विक्रमः सामर्थ्यम् प्रज्ञा च विक्रमश्च प्रज्ञाविक्रमौ ताभ्यां शालन्ते शोभन्ते इति प्रज्ञाविक्रमशालिनस्तस्मात्प्रज्ञाविक्रमशालिनः ( सुप्यजातौ णिनि ) बुद्धिसामर्थ्ययुक्तादपि भक्तिहीनात् पूज्यविषयकाऽनुरागरहितात् भृत्यादित्यस्य शेषः । प्रभोः किंफलं किम्प्रयोजनम् । येषां भृत्यानां प्रज्ञा च विक्रमश्च भक्तिश्चेत्येतेषामितरेतरद्वन्द्वः प्रज्ञाविक्रमभक्तयः समुदिताः सकलाः गुणाः सन्ति ते भृत्याः नृपतेः राज्ञः सम्पत्सु ऐश्वर्यसमयेषु अभ्युदयेष्विति यावत् । आपत्सु विपत्तिकालेषु च विभूतये कल्याणाय भवन्तीति शेषः । इतरेऽन्ये उक्तलक्षणरहिता इत्यर्थः । भृत्याः कलत्रं कुटुम्बवत् केवलं पोष्याः (न वै पत्युः कामाय प्रिया भवति आत्मनस्तु कामाय) इति श्रुत्या स्त्रियाः स्वकामायैव पतिसेवनस्य प्रसिद्धत्वात् तस्मादृश्येन तेऽपि कलत्रं धनप्राप्तिकामनया वनिता न तु वस्तुतो भृत्याः न तैः स्वामिकार्यसिद्धिरिति भावः । ( भेदः संहतिभेदनमिति दर्पणस्थलक्षणाद् भेदो नाम मुखसन्धेरङ्गम् ) । उपमेयाऽनुरक्तबुद्धिहीनविक्रमशून्याऽपेक्षया तादृशभक्तिरहितबुद्धिपराक्रमवदपेक्षया चोपमानभूतोक्तसकलगुणवद्भृत्याधिक्यकथनादत्रापि व्यतिरेकालङ्कारः । लक्षणं प्रागुक्तमेव । अत्राऽपि वैदर्भी रीतिः । प्रसादगुणः । शार्दूलविक्रीडितं छन्दः ॥ १९ ॥

तन्मयाऽपीति । तत्तस्मात्कारणात् मयाऽपि अस्मिन्वस्तुनि राक्षसायत्तीकरणात्मके विषये शयानेन निर्व्यापारेण असावधानेनेति यावत् । न स्थीयते विद्यते । ( न शयानेनेति पाठे तु शेतेः शानचि निष्पन्नशयानशब्देन सह 'सुपसुपे' ति समासे सावधानेन स्थीयत इत्यर्थः ) । ( बीजस्य सम्यग्विधानादिदं बीजसंविधानं समाधानमङ्गम् ) यथाशक्ति शक्तिमनतिक्रम्य स्वसामर्थ्याऽनुसारेणेति यावत् । तस्य राक्षसस्य ग्रहणमायत्तीकरणं प्रति यत्न उद्योगः कथमिति केन प्रकारेणेत्यर्थः ( कथमिश्यति पाठे कथं क्रियतेत्यर्थः । वृषलश्चन्द्रगुप्तः पर्वतकः चाणक्यमित्रं ( पर्वतो नाम कश्चिद्राजा पर्वत एव पर्वतकः स्वार्थे कः ) वृषलश्च पर्वतकश्च वृषलपर्वतकौ तयोः वृषलपर्वतकयोर्मध्ये अन्यतरविनाशेनापि वृषलपर्वतकेति द्वयस्यापि चाणक्यमित्रत्वेन तयोरेकस्यापि यस्य कस्यचिद्धननेन चाणक्यस्यापकृतिर्भविष्यतीति चन्द्रगुप्तस्य

कमत्यन्तोपकारी मित्रं घातितः तपस्वी पर्वतेश्वर इति सञ्चारितो जगति जनापवादः । लोकप्रत्ययार्थमस्यैवार्थस्याभिव्यक्तये पिता ते चाणक्येन घातित इति रहसि त्रासयित्वा, भागुरायणेनापवाहितः पर्वतकपुत्रो मलयकेतुः । शक्यः खलु एष राक्षसमतिपरिगृहीतोऽपि व्युत्तिष्ठमानो बुद्ध्या निवारयितुम् । न पुनरस्य निग्रहात् पर्वतक-

सहायहीनत्वाद्विनाशसौकर्यमेवेत्यभिप्रायेण विषकन्यया सम्भोगकाल एव मृत्युदायिन्या विषनिर्मितकन्यया राक्षसेन नन्दामात्येन अस्माकं अत्यन्तोपकारि अतिशयकल्याणसम्पादकं मित्रं सुहृत् तपस्वी तपश्चरणतत्परः पर्वतकः घातितो विनाशित इति जनापवादो लोकप्रवादः किम्वदन्तीति यावत् । जगति संसारे सञ्चारितः प्रख्यापितः लोकानां प्रत्ययो लोकप्रत्ययः सोऽर्थः प्रयोजनमस्य तत् लोकप्रत्ययार्थं ( क्रियाविशेषणमेतत् ) सकलजनप्रतीत्यर्थमित्यर्थः । राक्षसेनैवासौ पर्वतको विनाशित इति लोकानां यथार्थज्ञानं यथा स्यान्नास्माकं च कृतघ्नत्वज्ञानं तेषां स्यादित्येतदर्थमिति भावः । अस्यैव पर्वतकवधात्मकस्यार्थस्य वस्तुनोऽभिव्यक्तये प्रख्यापनाय, चाणक्येन कौटिल्येन ते तव पिता पर्वतको घातितो लोकान्तरं प्रापितः इति रहसि एकान्ते विजने इति यावत् । त्रासयित्वा भयं समुत्पाद्य भागुरायणेन मलयकेतुमित्रवेशिचाणक्यप्रणिधिना पर्वतकपुत्रो मलयकेतुरपवाहितः कटकान्निःसारितः स्थानान्तरं प्रापित इति यावत् । राक्षसस्य मतिर्बुद्धिः परिगृहीता स्वीकृता येन स राक्षसमतिपरिगृहीतः ( व्यधिकरणपदबहुव्रीहिः, आहिताग्न्यादित्वान्निष्ठान्तस्य परनिपातः ) अथवा राक्षसस्य मतिः राक्षसमतिः तया परिगृहीतो राक्षसमतिपरिगृहीतोऽप्येष मलयकेतुः अर्द्धराज्यप्रदानादिहैव मलयकेतोः स्थापने राक्षसस्यौदासीन्येन क्वाप्यन्यत्र गमनं स्यात् । अथवा क्रोधादन्यप्रबलशत्रूत्थापनात्संग्रामार्थमुद्युक्तो नास्मद्वशवर्त्ती स्यात् । सति तु मलयकेतोरपसारणे प्राय एनमाश्रित्यैव राक्षसावस्थितौ जीवसिद्धिप्रत्यायितैतज्जनापवादेन राक्षस-मलयकेत्वोर्विरोधसम्पादनेन राक्षसो वशीकर्त्तुं शक्यः स्यादिति भावः । व्युत्तिष्ठमानः (व्युत्पूर्वकात्तिष्ठतेः 'उदोऽनूर्ध्वकर्मणि' इत्यात्मनेपदम् ) उद्यच्छन् युद्धार्थं तत्परः सन् मत्या बुद्ध्या निवारयितुं निग्रहीतुं शक्यः योग्यः स्यात् । पुनः किन्तु अस्य मलयकेतोर्निग्रहाद्बन्धनात् पर्वतकवधात्पर्वतकविनाशादुत्पन्नं प्रादुर्भूतमयशोऽकीर्त्तिं अप्रकाशं प्रकाशं सम्पद्यमानं प्रकाशीभवत् लोकैः सर्वत्र प्रख्यापितं सञ्चार्यमाणमिति यावत् । प्रमाद्

वधोत्पन्नमयशः प्रकाशीभवत् प्रमाष्टुमलमिति । अन्यच्च, नियुक्ताश्च मया स्वपक्ष-परपक्षयोः अनुरक्ता-परक्तजनजिज्ञासया बहुविधदेशभाषावेशाचारसञ्चारवेदिनो नानाव्यञ्जनाः प्रणिधयः । अन्विष्यन्ते च कुसुमपुरनिवासिनां नन्दामात्यसुहृदां निपुणतरं प्रचारगतयः । तत्त-

लालयितुं दूरीकर्तुमिति यावत् । नालं न समर्थः ।

अन्यच्च अपि च मया, स्वपक्ष-परपक्षयोः आत्मपक्ष-शत्रुपक्षयोः विषये स्वपक्ष-परपक्षविषयकानुरागिविरागिजनज्ञानेच्छयेत्यर्थः । बहवो विधाः प्रकारा येषां ते बहुविधाः, देशाश्च वेशाश्च भाषाश्चाचाराश्च सञ्चाराश्चेति देश-वेश-भाषा-चार-सञ्चाराः बहुविधाश्च ते चेति बहुविधदेश-वेश-भाषा-चार-सञ्चारास्तान्विदन्ति ये ते तथोक्ताः । नाना अनेकविधं व्यञ्जनं चिह्नं येषां ते नानाव्यञ्जनाः बहुविधवेशधारणशीलाः प्रणिधयो गूढपुरुषाः चरा इति यावत् । नियुक्ताः स्थापितास्तत्तत्कार्येष्विति शेषः । के राक्षसपरिगृहीतपक्षविषयकानुरागिणो विरागिणो वा, के च मौर्ये वा तादृश इति प्रवृत्तिमुपलब्धुं गुप्तचराः सर्वत्र प्रेषिता इति तदाशयः । कुसुमपुरनिवासिनां कुसुमपुरवास्तव्यानामित्यर्थः । नन्दस्य तदाख्यनृपस्यामात्या मन्त्रिणो भृत्या वा तेषां सुहृदो मित्राणि तेषां तथोक्तानां प्रचाराः कार्येषु प्रवृत्तयः गतयोऽवस्थाविशेषाः । प्रचाराश्च गतयश्चेति प्रचारगतयः । कार्यप्रवृत्तिदशाविशेषा इत्यर्थः । निपुणतरं सूक्ष्मानुसन्धानेनेत्यर्थः । अन्विष्यन्ते मृग्यन्ते मत्प्रहितगुप्तचरैरिति शेषः । चन्द्रगुप्तेन सहोत्तिष्ठन्ति तच्छीला इति चन्द्रगुप्तसहोत्थायिनः । शैशवात्प्रभृति स्वसमानत्वाद्दानमानादिभिर्वर्द्धिताः । चन्द्रगुप्ताभ्युदयेनाभ्युदयवन्त इति यावत् । भद्रभटप्रभृतयः भद्रभट-पुरुषदत्त-हिङ्गुरात-बलगुप्त-राजसेन-भागुरायण-रोहिताक्ष-विजयवर्माणः प्रधानपुरुषाः मुख्यकार्याधिकारिणः, तत्तत्कारणं भद्रभटादीनामसत्येन मलयकेतुप्रीतिजनककारणमित्यर्थः । उत्पाद्य योजयित्वा कृतं कृत्यं यैस्ते कृतकृत्यास्तेषां भावः कृतकृत्यता तां कृतकृत्यतां मनोरथसिद्धिमापादिता प्रापिताः । शत्रुभिः रिपुभिः प्रयुक्ता नियुक्ताः शत्रुप्रयुक्तास्तेषां तथोक्तानां तीक्ष्णरसं विषं दातुं शीलं येषां ते तीक्ष्णरसदायिनस्तेषां तथोक्तानां प्रतिविधानं प्रतीकारं निवारणमिति यावत्। प्रति अप्रमादिनः सावधानाः । परीक्षिताः प्रमाणीकृता भक्तिः पूज्यानुरागो येषां ते परीक्षितभक्तयः क्षितिपतिप्रत्यासन्ना नृपतिनिकटवर्तिनः आप्तपुरुषाः विश्वस्तजनाः तत्र कार्ये नियुक्ताः प्रयुक्ताः सन्तीति शेषः । ( इदानीं कार्यनिर्वहणप्रसङ्गा-

स्कारणमुत्पाद्य कृतकृत्यतामापादिताः चन्द्रगुप्तसहोत्थायिनो भद्रभट-प्रभृतयः प्रधानपुरुषाः । शत्रुप्रयुक्तानाञ्च तीक्ष्णरसदायिनां प्रतिविधानं प्रति अप्रमादिनः परीक्षितभक्तयः क्षितिपतिप्रत्यासन्नाः नियुक्तास्तत्राप्तपुरुषाः । अस्ति चास्माकं सहाध्यायि मित्रं विष्णुशर्मा नाम ब्राह्मणः । स चौशनस्यां दण्डनीत्यां, चतुःषष्ट्यङ्गे ज्योतिःशास्त्रे च परं प्रावीण्यमुपगतः । स च मया क्षपणक-लिङ्गधारी नन्दवधप्रतिज्ञानन्तरमेव कुसुमपुरमुपनीय, सर्वनन्दामात्यैः सह सख्यं ग्राहितः, विशेषतश्च तस्मिन् राक्षसः समुत्पन्नविश्रम्भः; तेनेदानीं महत् प्रयोजनमनुष्ठेयं भविष्यति । तदेवमस्मत्तो न किञ्चित् परिहास्यते वृषल एव केवलं

---

वसरः । यथाशक्ति क्रियत इत्यादि प्रयोजनमनुष्ठेयं भविष्यतीत्यन्तं बीजानुगुणप्रस्तुतकार्यारम्भः करणम् । अत्रैव करणे अत्र तावद् वृषल इत्यादिः प्रमार्ष्टुमिच्छामीत्यन्तः सन्दर्भः बीजानुकूलसंघटनप्रयोजनविचारो युक्तिः । शत्रुप्रयुक्तानामित्यादि तत्राप्तपुरुषा इत्यन्तं बीजस्य दुःखहेतोर्विचारस्य विधानात् ) । तीक्ष्णरसदायिनो दुःखहेतवः तत्प्रतिविधानम्प्रत्यप्रमादिनः सुखहेतवः । अस्माकं सहाधीते इति सहाध्यायी सतीर्थ्यः मित्रं सुहृत् विष्णुशर्मा नाम ब्राह्मणोऽस्ति स च विष्णुशर्मा उशनसा शुक्रेण कृता औशनसी तस्यामौशनस्यां, दण्डो नीयतेऽनयेति दण्डनीतिः, शासनशास्त्रं तस्यां दण्डनीत्यां, चतुरधिका षष्टिश्चतुःषष्टिश्चतुःषष्टिरङ्गानि यस्य तस्मिन् चतुःषष्ट्यङ्गे ज्योतिश्शास्त्रे परमधिकं विशेषत इति यावत् । प्रावीण्यं नैपुण्यमुपगतः प्राप्तः । स च विष्णुशर्मा क्षपणकलिङ्गधारी बौद्धसंन्यासिचिह्नयुक्तः, मया नन्दानां नन्दकुलसम्भूतानां वधो विनाशः नन्दवधस्तस्य प्रतिज्ञाऽङ्गीकारः नन्दवधप्रतिज्ञा तस्या अनन्तरमुत्तरमेव कुसुमपुरमेतदाख्यराजधानीं उपनीय समानीय सर्वनन्दामात्यैः सकलनन्दमन्त्रिभिः सह सख्यं मित्रत्वं बन्धुत्वमिति यावत् । ग्राहितः स्वीकारितः ( कर्मणि णिजन्ताद्ग्रहेः क्तः ) तस्मिन् विष्णुशर्मणि राक्षसस्तदाख्यो नन्दामात्यः विशेषतः विशेषरूपेण समुत्पन्नः सञ्जातो विश्रम्भो विश्वासो यस्य स समुत्पन्नविश्रम्भः सञ्जातविश्वास इत्यर्थः, तेन विष्णुशर्म्मणा इदानीं साम्प्रतं महत् विशेषं प्रयोजनं अनुष्ठेयं सम्पन्नं सिद्धमिति यावत् । भविष्यति । तत्तस्मादेवमुक्तप्रकारकोपाये कृते सतीत्यर्थः । अस्मत्तः तृतीयायास्तसिः मयेत्यर्थः, न किञ्चित्परिहास्यते न किमपि न्यूनं भविष्यति ( परिपूर्वकहाधातोः कर्मकर्त्तरि लृटि

प्रधानप्रकृतिः अस्मासु आरोपितराज्यतन्त्रभारः सततमुदास्ते । अथवा यत् स्वयमभियोगदुःखैरसाधारणैरपाकृतं, तदेव राज्यं सुखयति । कुतः ?—

स्वयमाहृत्य भुञ्जाना बलिनोऽपि स्वभावतः ।
गजेन्द्राश्च नरेन्द्राश्च प्रायः सीदन्ति दुःखिताः ॥ १६ ॥

---

रूपम् ) न किञ्चित्परिहास्यते सर्वं समाहितमिति परितः सकलोपायैर्बीजन्यासादिर्वं बीजनिष्पत्तिः परिन्यासः । वृषल एव चन्द्रगुप्त एव केवलं साक्षात् प्रधानप्रकृतिः मुख्यमन्त्री अस्मासु आरोपितो न्यस्तो राज्यतन्त्रस्य स्वराष्ट्रस्मरणस्य भारो येन स तथोक्तः सततं सर्वदा उदास्ते उदासीनः सन् तिष्ठति । अथवा स्वयमात्मना असाधारणैर्विशेषैः अभियोगदुःखैः कृत्यविषयकाग्रहसमुत्पन्नखेदैः अपाकृतं रहितं यद्राज्यं तदेव सुखयति सुखं करोतीत्यर्थः । ( तत्करोतीति णिचि रूपम् ) स्वनीतिप्रयोगात्मकेन बीजेन चन्द्रगुप्तस्य सुखावाप्त्याऽयं बीजः सुखागमः प्राप्तिर्नामाऽङ्गम् । एवंरीत्या मुखसन्धेर्द्वादशाङ्गानि निरूपितानि । इतः परं यमपटचरवृत्तान्तं सर्वोऽपि ।

अवान्तरार्थसम्बन्धः सन्धिरेकान्वये सति ।

इत्युक्तस्य स्वपक्ष-परपक्षा-नुरक्ता-परक्तजनजिज्ञासा-राक्षसमुद्राप्राप्त्याद्यवान्तरप्रयोजनसम्बन्धस्य कथनार्थः । प्रयुक्ताश्च परपक्षेत्यनेन सूचितस्य यमपटचरस्य प्रवेशः ॥

ननु लोकेऽस्मिन् स्वोद्योगावाप्तसम्पदो बलवन्तोऽपि प्रायः स्वयमाहरणपूर्वकभोगं कुर्वन्त्येवेत्यस्य प्राकृतिकदृष्टान्तप्रदर्शनेन समर्थनं कुर्वन्नाह-स्वयमाहृत्येति । स्वभावतः स्वभावादेव यद्वा—स्वभावतः स्वभावेन प्रकृत्येति यावत् । 'प्रकृत्यादिभ्य उपसंख्यानमि' ति विहिततृतीयायास्तसिः । बलिनोऽपि बलवन्तोऽपि पराक्रमिणोऽपीति यावत् । राजेन्द्राः राजानः स्वयं साक्षात् आत्मनेति यावत् । आहृत्य संगृह्य ( गजेन्द्रपक्षे ) खाद्यं पिप्पलयन्यग्रोधकदल्यादिकं ( नरेन्द्रपक्षे ) राज्यादिकं भुञ्जानाः उपभोगं कुर्वाणाः ( भुजोऽनवने ) इति तङ् ( ताच्छील्यो वयोवचनशक्तिषु चानश् ) ( इति चानश् ) दुःखिता आहरणजन्यक्लेशभाजिनः सन्तः प्रायो बाहुल्येन ( प्रायःशब्दोऽव्ययं प्रकृत्यादिभ्य इत्येतद्विहिततृतीयान्तः ) सीदन्ति बहुतरकार्यवैयग्र्येण क्लिश्यन्ति । अत्र स्वयं राज्यादिकमाहृत्य भुञ्जानानां नरेन्द्राणां

( ततः प्रविशति सह यमपटेन चरः )

चरः—पणमह जमस्स चलणे, किं कज्जं देवेहिं अस्मेहिं ? । (१)
एसो क्खु अस्मभत्ताणं हरइ जीअं फड़फड़न्तम् ॥ १७ ॥

---

( १ ) प्रणमत यमस्य चरणौ किं कार्यं देवैरन्यैः ? ।
एष खल्वन्यभक्तानां हरति जीवं परिस्फुरन्तम् ॥

---

प्रस्तुतानां, स्वयं पिप्पलन्यग्रोधादिकमाहृत्य भुञ्जानानां गजेन्द्राणामप्रस्तुतानाञ्च बाहुल्येनावसादनरूपैकक्रियायामभिसम्बन्धसद्भावेन दीपकालंकारः । उक्तञ्च तल्लक्षणं साहित्यदर्पणे यथा—

अप्रस्तुतप्रस्तुतयोर्दीपकं तु निगद्यते ।
अथ कारकमेकं स्यादनेकासु क्रियासु चेत् ॥ इति ।

उक्तञ्च कुवलयानन्दे—

वदन्ति वर्ण्यावर्ण्यानां धर्मैक्यं दीपकं बुधाः ।
मदेन भाति कलभः प्रतापेन महीपतिः ॥ इति ।

वैदर्भी रीतिः । कारुण्यं रसः । माधुर्यगुणः । अनुष्टुप् वृत्तम् ॥ १६ ॥

ननु असूचितपात्रस्य प्रवेशनिषेधेन नियुक्ताश्च प्रणिधय इत्यनेन प्रागुपक्षिप्तप्रणिधिसूचनात्तत्प्रवेशमाह—तत इति । ततस्तदनन्तरं यमस्य धर्मराजस्य पट इव पटो यमपटस्तेन यमपटेन सहोपलक्षितश्चरो भृत्यः प्रविशति रङ्गस्थानमिति शेषः । शुभाशुभकर्मसूचकपटावलोकनाद्भिक्षुकस्य जीविका भवतीति ।

( १ ) ननु कल्याणाकल्याणावबोधकशमनपटाच्छादितहस्तश्चरो यमानुरागवन्तमात्मानं प्रकटयितुं सकलसुरापेक्षया यमात्मकेष्टदेवस्य प्राधान्यमाह—प्रणमतेति । यमस्य कृतान्तस्य

कृतान्तो यमुनाभ्राता शमनो यमराड् यमः ।

इत्यमरः । चरणौ पादौ प्रणमत वन्दत यूयमित्यस्य शेषः । अन्यैः यमभिन्नैर्देवैर्गणेशप्रभृतिभिः सुरैः किं कार्यं किम्प्रयोजनम् न किञ्चिदपीत्यर्थः । एष खलु यम एव (एवार्थकोऽत्र खलुशब्दः) अन्येषां सुराणां भक्ता अन्यभक्तास्तेषां तथोक्तानां चञ्चद्वंतं क्रियमाणं परिस्फुरन्तमिति पाठे प्रकटीभवन्तं जीवं प्राणान् हरति नाशयति । न केऽपि देवा यमहस्तान्मृतस्वभक्तजीवनपरित्राणं कर्तुं शक्नुवन्ति सत्वन्य-

अपिअ—

पुरिसस्स जीविदव्वं विसमादो होइ भत्ति गहिआदो । (१)
मारेइ सव्वलोअं जो तेण जमेण जीआमो ॥ १८ ॥

( १ ) अपि च—पुरुषस्य जीवितव्यं विषमाद् भवति भक्तिगृहीतात् ।
मारयति सर्व्वलोकं यस्तेन यमेन जीवामः ॥

म्बिनैव प्राणं हरति अतः सकलदेवापेक्षया यमस्य प्राधान्यादस्यैव सेवा समुचितेति भावः । अप्रस्तुतस्य वर्णनात्प्रस्तुतचाणक्यवर्णनस्य गम्यत्वादत्राऽप्रस्तुतप्रशंसा-नामालङ्कारः । उक्तञ्च दर्पणे तल्लक्षणं यथा—

अप्रस्तुतात्प्रस्तुतं चेद्गम्यते पञ्चधा ततः ।
अप्रस्तुतप्रशंसा स्यादिति, ॥

केचित्तु—परित्यज्यान्यदेवसेवनं यमचरणमात्रसेवनशिक्षात्मकपूर्वार्द्धगतवा-क्यार्थम्प्रति यमस्यान्यदेवकप्राणहारकत्वात्मकपरार्द्धगतवाक्यार्थस्य हेतुत्वेनोपन्या-सादत्र काव्यलिङ्गमलङ्कार इति वदन्ति । रीतिरत्रापि वैदर्भी । शान्तो रसः । मा-धुर्यंगुणः । आर्या वृत्तम् ॥ १७ ॥

( १ ) ननु तस्यैवान्यथा समर्थनं कुर्वन्नाह—पुरुषस्येति । भक्त्या प्रचुरा-ऽनुरागेण गृहीतो वशीकृतस्तस्मात् प्रभूतस्नेहसन्तापितात् विषमात् क्रूरादपि य-मात् ( यमशब्दोऽध्याहार्यः ) यममाश्रित्येत्यर्थः । ( ल्यब्लोपे पञ्चमी ) पुरुषस्य प्राणिमात्रस्य जीवितव्यं जीवनं भवति जायते । अपमृत्युनाशिनी यमभक्तिरिति भावः । यो यमः सर्वलोकं सकलप्राणिनं मारयति विनाशयति तेन यमेन धर्मराजेन तमुपसेव्येत्यर्थः । यद्वा—तदनुकम्पया जीवामः श्वसिमः । एतद्गाथायुगलेन क्रूरत्वेन यमसादृश्यवतश्चाणक्यस्य स्वपक्ष-परपक्षविषयकानुकम्पा-दण्डसामर्थ्यमभिधोतय-न्नात्मनो गुप्तदूतत्वं बोधयति । यथा यमविरुद्धप्राणिनो जीवनं न सम्भवति तथा चाणक्यविरोधिनोऽपीति न केनापि चाणक्यविरोधिना वर्त्तितव्यमिति भावः । अ-त्राप्यप्रस्तुतयमवर्णनतः प्रस्तुतचाणक्यवर्णनावगतेरप्रस्तुतप्रशंसालङ्कारः । अगहि-नाशकयमरूपहेतुतस्तत्सेवकजीवनधारणप्रतिपादनाद्विषमालङ्कारश्च ।

एतल्लक्षणं दर्पणे यथा—

गुणौ क्रिये वा चेत्स्यातां विरुद्धे हेतुकार्ययोः ।

ता एदं गेहं पविसिअ जमपडअं दंसअंतो गाअमि । ( १ )

( इति परिक्रामति । )

शिष्यः—( विलोक्य । ) भद्र ! न प्रवेष्टव्यम् ।

चरः—हंहो बह्मण ! कस्स एदं गेहम् ? ( २ )

शिष्यः—अस्माकमुपाध्यायस्य सुगृहीतनाम्न आर्य्यचाणक्यस्य ।

चरः—( विहस्य । ) हंहो बह्मण ! अत्तकेरकस्स ज्जेव्व एदं धम्मभादुअस्स घरं होदि, ता देहि मे पवेसं, जाव दे उवज्झाअस्स धम्मं उवदिसामि । ( ३ )

---

( १ ) तस्मादिदं गृहं प्रविश्य यमपटं दर्शयन् गायामि ।

( २ ) अहो ब्राह्मण ! कस्येदं गृहम् ?

( ३ ) अहो ब्राह्मण ! आत्मीयस्यैव एतद् धर्म्मभ्रातुर्गृहं भवति,

---

यद्वारब्धस्य वैकल्यमनर्थस्य च सम्भवः ॥

विरूपयोः संघटना या च तद्विषमं मतम् ॥ इति ॥ १८ ॥

( १ ) तस्मादिति । तस्मात्कारणादिदं पुरोवर्त्ति साक्षाद्दृश्यमानमिति यावत् । गृहं प्रविश्यान्तर्गत्वा यमस्य कृतान्तस्य पटं चित्रं यमपटं कृतान्तचित्रमित्यर्थः । दर्शयन् साक्षात्कारयन् लोकानिति शेषः । गायामि गानं करोमीत्यर्थः ।

शिष्य इति । विलोक्य दृष्ट्वा चरमिति शेषः ( विपूर्वकालोकतेः क्यपि रूपम् ) भद्र ! सौम्य, न प्रवेष्टव्यम् नाऽभ्यन्तरं गन्तव्यमित्यर्थः (प्रपूर्वकविशेः कर्मणि तव्यति रूपम् )

( २ ) हंहो बह्मण इति । हेब्राह्मण ! हे द्विज ! कस्य किन्नामधेयस्य इदं साक्षादवलोक्यमानं गृहं सदनं वर्तत इति शेषः ॥

अस्माकमिति । अस्माकं उपाध्यायस्य ( उपेत्यास्मादधीत इति विग्रहे उपाधिपूर्वकादिङः 'इङश्चे'ति घञ् ) अध्यापकस्य सुगृहीतं पुण्यं नामाऽभिधानं यस्य स सुगृहीतनामा तस्य पुण्यजनकाऽभिधेयस्य यन्नामोच्चारणेन पुण्यमुत्पद्यते तस्येत्यर्थः ।

स सुगृहीतनामा स्यात्प्रातर्यः स्मर्यते जनैः ।

इत्युक्तेः इदं गृहमस्तीति शेषः ॥

( ३ ) हंहो बह्मण इति । अहोब्राह्मण ! आत्मीयस्यैव मत्सम्बन्धिन एव,

शिष्यः—( सक्रोधम् । ) धिक् मूर्ख ? किं भवान् अस्मादुपाध्याया-दपि धर्मवित्तरः ?

चरः—हंहो बह्मण ! मा कुप्यः णहि क्खु सव्वो सव्वं जाणादि, ता किम्पि दे उवज्झाओ जाणादि, किम्पि अह्मारिसापि जाणन्ति । ( १ )

शिष्यः—( सक्रोधम् । ) मूर्ख ! सर्वज्ञतामुपाध्यायस्य चोरयितु-मिच्छसि !!

चरः—हंहो बह्मण ! जइ दे उवज्झाओ सव्वं जाणादि, जाणादु दाव कस्स चन्दो अणभिमदोत्ति ? ( २ )

शिष्यः—मूर्ख ! किमनेन ज्ञातेन गुरोर्भविष्यति ?

चरः—हंहो बह्मण ! तुअ उवज्झाओ ज्जेव जाणिस्सदि जं इमिणा

---

तस्माद् देहि मे प्रवेशं, यावत् तवोपाध्यायस्य धर्ममुपदिशामि ।

( १ ) अहो ब्राह्मण ! मा कुप्यः न हि खलु सर्वः सर्वं जानाति, तत् किमपि ते उपाध्यायो जानाति, किमपि अस्मादृशा अपि जानन्ति ।

( २ ) अहो ब्राह्मण ! यदि तवोपाध्यायः सर्वं जानाति, जानातु तावत् कस्य चन्द्रोऽनभिमत इति ।

---

धर्मभ्रातुः राजकीयकृत्यसम्पादकस्येत्यर्थः । एतद् गृहं भवनमस्ति तस्तस्मात्कारणात् मम प्रवेशमभ्यन्तरगमनाज्ञां देहि मार्गं मा रुन्द्धीत्यर्थः । यावत्कालं तव उपाध्यायस्य गुरोः यमपटं धर्मराजचित्रं प्रसार्य दर्शयित्वा धर्मं शुभं वृत्तमिति शेषः उपदिशामि कथयामि । ( धर्मं नगरवृत्तान्तमुपदिशामीति गूढाभिसन्धानवचनम् ) । सर्वोऽपि धर्मतो याचकस्य आन्तरं प्रवेशं ददातीति वाक्यार्थः ॥

शिष्य इति । रे मूर्ख ! अज्ञानयुक्त उपाध्यायस्य मद्गुरोः सर्वज्ञतां चोरयितुमपहर्तुमिच्छसि किमिति यावत् ।

( २ ) हंहो बह्मण इति । हे ब्राह्मण ! यदि तव उपाध्यायो गुरुः सर्वं निखिलवस्तुजातं जानाति ज्ञायते तदा जानातु तावत् कस्य चन्द्रो हिमांशुः अनभिमतोऽनभिप्रेत इति ( कस्य चन्द्रगुप्तोऽनभिलषित इति च गूढतात्पर्यम् ) ।

किमनेनेति । अनेन ज्ञातेन ( अत्र तृतीया गम्यमानसाधनक्रियाऽपेक्षणात्करणत्वेनेति बोध्यम् ) कश्चन्द्रानभिलाषीति ज्ञानतो गुरोरुपाध्यायस्य किं साध्यते ।

आणिदेण भोदि । उज्जुअबुद्धिआ तुमं दाव इत्तिअं जाणासि, कमलाणं चन्दो अणभिमदो त्ति । णं पेक्ख,-(१)

कमलाणं मणोहराणं वि रूआदो विसंवअइ शीलम् ।
संपुण्णमण्डलम्मि वि जाइं चन्दे विरुद्धाइं ॥ १६ ॥ (२)

---

( १ ) अहो ब्राह्मण ! तवोपाध्याय एव ज्ञास्यति यदेतेन ज्ञातेन भवति, ऋजुबुद्धिस्त्वं तावन् एतावन् जानासि, कमलानां चन्द्रोऽनभिमत इति । ननु पश्य,—

( २ ) कमलानां मनोहराणामपि रूपाद्विसंवदति शीलम् ।
सम्पूर्णमण्डलेऽपि यानि चन्द्रे विरुद्धानि ॥

---

किमर्पीति भावः ।

( २ ) कमलानामिति । मनोहराणामधिकसौन्दर्यवतामपि कमलानां पङ्कजानां रूपादाकारात् शीलं चरितं विसम्वदति विसदृशम्भवति सौन्दर्यसदृशं न भवतीत्यर्थः । यत्राकृतिस्तत्र गुणा वसन्तीत्युक्त्याऽऽकृतिचरितयोस्तुल्यत्वं समुचितमतथात्वमनुचितं स्यात् । तदेव बोधयति-सम्पूर्णमण्डलेऽपीति । सम्पूर्णमण्डले समग्रबिम्बे चन्द्रे विधौ यानि कमलानि विरुद्धानि विसदृशाचरणवन्ति भवन्ति । चन्द्रोदये कमलानां सङ्कोचनं तत्कान्त्यसहनत्वातिशयानुचितमिति भावः । ( अनेन श्लोकेन प्रशस्तगुणशालिनोऽपि राक्षसपक्षपातिनो रूपविसदृशचरितमसम्पूर्णमण्डले मौर्ये विरुद्धमाचरन्तीति गूढाऽभिप्रायः । भाविसमग्रमण्डलत्वेपि मौर्यस्य प्रजानान्तत्र विरुद्धाचरणमयुक्तमिति ध्वन्यते )। अवर्णनीयकमलस्य समग्रबिम्बेन्दावपि विभिन्नाचरणात्मकसामान्यतः पूर्णमण्डलमौर्ये प्रजास्नेहाभावप्रदर्शनरूपानुचितत्वात्मकविशेषावगमादत्राऽप्रस्तुतप्रशंसालङ्कारः । उक्तं च तल्लक्षणं यथा—

कचिद्विशेषः सामान्यात्सामान्यं वा विशेषतः ।
कार्यान्निमित्तं कार्यं च हेतोरथसमात्समम् ॥
अप्रस्तुतात्प्रस्तुतं चेद्गम्यते पञ्चधा ततः ।
अप्रस्तुतप्रशंसा स्यादिति ।

हेतोश्चरितविसादृश्येऽसत्त्वेऽपि चरितविसादृश्यात्मककार्यस्य जायमानत्वाद् विभावनालङ्कारः । मनोहरात्मककारणसत्त्वेऽपि तद्नुगुणगुणस्थितिरूपकार्यस्या-

चाणक्यः—( आकर्ण्य आत्मगतम् । ) अये! चन्द्रगुप्तात् अपरक्तान् पुरुषान् जानामि इति उपक्षिप्तमनेन ।

शिष्यः—मूर्ख ! किमिदसम्बद्धमभिधीयते ?

चरः—हंहो बह्मण ! सुसंबद्धं ज्जेव एदं भवे । (१)

शिष्यः—यदि किं स्यात् ?

चरः—जदि सुणन्तं जाणन्तं अ जणं लहे (२)

चाणक्यः—( विलोक्य । ) भद्र ! सुखं प्रविश, लप्स्यसे श्रोतारं ज्ञातारञ्च ।

( १ ) अहो ब्राह्मण ! सुसम्बद्धमेवैतत् भवेत् ।

( २ ) यदि शृण्वन्तं जानन्तञ्च जनं लभे । ( सुणितुं जाणन्त इति पाठे— श्रोतुं जानन्तम् इति सं० )

सत्त्वात् विशेषोक्तिनामालङ्कारश्च इत्यनयोः सङ्करः । एतदलङ्कारद्वयलक्षणद्वयं यथा दर्पणे—

विभावना विना हेतौ कार्योत्पत्तिर्निगद्यते ।
सति हेतौ फलाभावे विशेषोक्तिस्ततो द्विधा ॥

इति केचित् ॥ १९ ॥

आकर्ण्येति । आकर्ण्य श्रुत्वा आत्मगतं स्वैरश्राव्यम् यथा तथा अवोचदित्यर्थः । अये! सम्बोधनमिदम् । चन्द्रगुप्तात् नृपलादपरक्तान् विरक्तान् विरुद्धानिति यावत् । पुरुषान् लोकान् जानामि अवगच्छामि इति इत्थमनेन चरेण उपक्षिप्तं कथितम् ये न चन्द्रगुप्तविषयकाऽनुरागिणो राक्षसादयस्तानहं वेद्मीति भावः ।

किमिदमिति । इदं किमसम्बद्धं पूर्वापरसम्बन्धरहितमसङ्गतमिति यावत् । वचनमिति शेषः । अभिधीयते उच्यते त्वयेति शेषः ( अभिपूर्वकाद्धाधातोः कर्मणि लटि रूपम् )

( १ ) हंहो ब्रह्मण इति । एतद् मम वचनं सुसम्बद्धमेव सुसङ्गतमेवेत्यर्थः । भवेत् स्यात् ।

यदीति । यदि तव वचनं सुसङ्गतमेव भवेत्तर्हि किं स्यात्तेनेति ।

( २ ) यदीति । यदि शृण्वन्तं श्रोतारं जानन्तं ज्ञातारं च जनं लभे प्राप्नोमि ! तदा वचनमाकूतं सफलमिति भावः ।

चरः—एसो प्पविसामि। (प्रविश्योपसृत्य च।) जेदु जेदु अज्जो (१)

चाणक्यः—(विलोक्य आत्मगतम्) कथं प्रभूतत्वात् कार्य्याणां कस्य परिज्ञाने नियुक्तो निपुणकः इति न ज्ञायते। आं ज्ञातम्, अये कथमयं प्रकृतिचित्तपरिज्ञाने नियुक्तो निपुणकः !! (प्रकाशम्) भद्र ! स्वागतम्। उपविश्यताम्।

चरः—जं अज्जो आणवेदि त्ति। (२) (भूमावुपविशति)।

चाणक्यः—भद्र ! उपवर्णय इदानीं स्वनियोगवृत्तान्तम्। अपि वृषलमनुरक्ताः प्रकृतयः ?

चरः—अध इं ? अज्जेण क्खु तेसु तेसु विराअकारणेसु परिहरिदेसु सुगहीदणामधेए देए चन्दउत्ते दिढं अनुरत्ताओ पइदिओ। किन्तु

(१) एष प्रविशामि। जयति जयत्यार्य्यः।

(२) यदार्य्य आज्ञापयतीति

(?) अथ किमिति। अथशब्दः स्वीकारार्थकोऽव्ययम्, आर्येण भवता तेषु भूतपूर्वेषु विरागकारणेषु विरक्ति (असन्तोष) हेतुषु परिहृतेषु दूरीकृतेषु सत्सु (अत्र 'यस्य च भावेने'ति सप्तमी) नामैव नामधेयं (नामशब्दात्स्वार्थे धेयप्रत्ययः) सुगृहीतं पुण्यं नामधेयमभिधानं यस्य स तथोक्तस्तस्मिन् सुगृहीतनामधेये ऽस्यतीति देवो राजा। उक्तञ्च कोशे—राजा भट्टारको देव इति। तस्मिन्देवे राज्ञि चन्द्रगुप्ते मौर्ये प्रकृतयः प्रजाः दृढमधिकं विशेषत इति यावत। अनुरक्ताः स्नेहयुक्ताः सन्तीति शेषः। किन्तु पर्व भग इव नगो हर्म्यादिः सोऽस्त्यस्मिन्निति नगरं (मध्वादित्वाद्रः) तस्मिन्नगरे पुरे अमात्यराक्षसेन राक्षसनाम्ना मन्त्रिणेत्यर्थः। सह प्रथमं पूर्वं समुत्पन्नः सञ्जातः स्नेहोऽनुरागो बहुमानः सत्कारः स्नेहश्च बहुमानश्च स्नेहबहुमानौ समुत्पन्नौ स्नेहबहुमानौ येषां ते समुत्पन्नबहुमानास्त्रयः पुरुषाः जनाः सन्ति वर्तन्ते। ये त्रयः पुरुषाः देवस्य राज्ञः चन्द्रस्य श्रीरिव श्रीर्यस्य स च-न्द्रश्रीस्तस्य चन्द्रश्रियः इन्दुकान्तेः चन्द्रगुप्तस्येति शेषः। श्रियं अभ्युदयं राजल-क्ष्मीमिति यावत्। न सहन्ते न मृष्यन्ति सोढुं समर्था न भवन्तीति यावत, क्वचित् किन्त्वस्त्यत्र नगरे इति पाठः। तत्रास्तीत्यस्य क्रियावाचकाव्ययत्वात्सन्तीत्यर्थे न भेदः।

उण सन्ति एत्थ णअरे अमच्चरक्खसेण सह पढमं समुप्पण्णसिणेहबहुमाणा तिण्णि (ण्णा) पुरिसा, जे देअस्स चन्दसिरिणो सिरिं ण सहन्ति। (१)।

चाणक्यः—(सक्रोधम्)। ननु वक्तव्यं स्वजीवितं न सहन्ते इति। भद्र! अपि ज्ञायन्ते नामधेयतः?

चरः—कधं अजाणिअणामधेआ अज्जस्स णिवेदिअन्ति? (२)

चाणक्यः—तेन हि श्रोतुमिच्छामि।

चरः—सुणादु अज्जो, पढमं दाव अज्जस्स रिपुपक्खे बद्धपक्खवादो क्खवणओ। (३)

---

(१) अथ किम्? आर्य्येण खलु तेषु तेषु विरागकारणेषु परिहृतेषु सुगृहीतनामधेये देवे चन्द्रगुप्ते दृढमनुरक्ताः प्रकृतयः। किंतु पुनः सन्त्यत्र नगरे अमात्यराक्षसेन सह प्रथमं समुत्पन्नस्नेहबहुमानास्त्रयः पुरुषाः, ये देवस्य चन्द्रश्रियः श्रियं न सहन्ते।

(२) कथमज्ञातनामधेया आर्यस्य निवेद्यन्ते?

(३) शृणोत्वार्यः प्रथमं तावदार्यस्य रिपुपक्षे बद्धपक्षपातः क्षपणकः?

---

सक्रोधमिति। सकोपं वदतीति शेषः।

प्रश्नावधारणानुज्ञाऽनुनयामन्त्रणे ननु—

इति कोशप्रामाण्यादत्रामन्त्रार्थको (सम्बोधनार्थको) ननु शब्दोऽव्ययम्। तथा च ननु भोः इत्थं वक्तव्यं यत् ये चाणक्याभ्युदयं न सहन्ते ते स्वस्यात्मनो जीवितं जीवनं न सहन्ते शीघ्रमेव परलोकगामिनो भविष्यन्तीत्यभिप्रायः। अपिशब्दोऽत्र प्रश्नार्थकः। नामधेयतः [ नामधेयशब्दात्तृतीयायास्तसिल् ] ते नामधेयेन नाम्ना ज्ञायन्ते बुध्यन्ते किमित्यर्थः।

(२) कथमिति। अज्ञातमविदितं नामधेयं नाम येषां तेऽज्ञातनामधेया आर्यस्य भवतः सम्प्रदानस्य शेषत्वविवक्षया षष्ठी सन्निधाविति शेषः। कथं केन प्रकारेण निवेद्यन्ते विज्ञाप्यन्ते।

(३) शृणोत्वार्य इति। आर्यः श्रेष्ठो भवान् शृणोतु आकर्णयतु प्रथमं प्राक् तावच्छब्दो वाक्यालङ्कारे। रिपुपक्षे शत्रौ बद्धपक्षपातः कृतानुरागः क्षपणको बौद्धसंन्यासी।

चाणक्यः—(सहर्षमात्मगतम् ।) अस्मद्रिपुपक्षे बद्धपक्षपातः क्षपणकः (प्रकाशम्) किंनामधेयो हि सः ?

चरः—जीवसिद्धी णाम । (१) ।

चाणक्यः—अस्मद्रिपुपक्षे बद्धपक्षपातः क्षपणक इति कथमवगतं भवता ?

चरः—जेण सा अमच्चरक्खसेण पउत्ता विसकण्णआ देवे पव्वदेस्सरे समावेसिदा । (२)

चाणक्यः—(स्वगतम्) जीवसिद्धिरेव तावत् अस्मत्प्रणिधिः । (प्रकाशम्) भद्र ! अथ अपरः कः ?

---

(१) जीवसिद्धिर्नाम ।

(२) येन सा अमात्यराक्षसेन प्रयुक्ता विषकन्यका देवे पर्वतेश्वरे समावेशिता ।

---

सहर्षमिति । हर्षेण सह वर्तमानं सहर्षं सानन्दमात्मगतं स्वगतं नातिस्पष्टमित्यर्थः । कथयतीति शेषः । विष्णुशर्मा नाम कश्चिदस्मत्सहपाठी ब्राह्मणस्तेन सम्प्रति महत्कार्यं भविष्यतीति प्रोक्तः क्षपणकः शत्रुपक्षानुरागित्वेनातिख्यातिं गतः । अतस्तद्द्वाराऽस्मदिष्टसिद्धिर्भविष्यतीति हर्षहेतुः । निवेदिते जीवसिद्धौ तमनवगच्छन्तमिव तूष्णीम्भूतं चाणक्यं संभाष्य तत्तत्कर्माभिधानेन ज्ञापयति जीवसिद्धिर्नाम स इति । प्रकाशं सर्वश्राव्यं स्फुटं किंनामधेयः किमभिधानः स क्षपणक इति ।

(२) येनेति । अमात्यराक्षसेन नन्दाख्यमन्त्रिणा प्रयुक्ता व्यापारिता विषकन्यका प्राणघातकारिणी कन्यका देवे राज्ञि पर्वतेश्वरे ( अत्र वैषयिकसप्तमी ) येन क्षपणकेन समावेशिता सम्प्रयुक्ता ।

स्वगतमिति । अनतिस्पष्टमित्यर्थः । एषोऽयं जीवसिद्धिरेतदभिधानः क्षपणकः, प्रणिधीयते गूढकार्यं ज्ञाप्यतेऽस्मिन्निति प्रणिधिः ( प्रनिपूर्वकाद्धाधातोः 'कर्मण्यधिकरणे च' इति किः ) घुसंज्ञकधातौ परे ( 'नेर्गदनदपतपदघु…' इति नेर्णत्वम् ) । अस्माकं प्रणिधिरस्मत्प्रणिधिः गुप्तदूत इत्यर्थः । असौ राक्षसस्य सुहृत्त्वेन लोकप्रवादनिर्वहणं मलयकेतुं प्रत्याययिष्यतीति भावः । प्रकाशं सुस्पष्टं भद्र साधो अपरोऽन्यः कः किंनामधेयः ।

चरः—अज्ज ! अबरो क्खु अमच्चरक्खसस्स पिअवअस्सो काअत्थो सअडदासो णाम । (१)

चाणक्यः—( विहस्यात्मगतम् । ) कायस्थ इति लघ्वी मात्रा; तथापि न युक्तं प्राकृतमपि रिपुमवज्ञातुम् । तस्मिन् मया सुहृच्छद्मना सिद्धार्थको निक्षिप्तः । (प्रकाशम् ) भद्र ! तृतीयं श्रोतुमिच्छामि ।

चरः—तिदीओ बि अमच्चरक्खसस्स दुदीअं विअ हिअअं पुप्फउरवासी मणिआरसेट्ठी चन्दणदासो णाम, जस्स गेहे कलत्तं णासीकदुअ अमच्चरक्खसो णअरादो अवक्कन्तो । (२)

---

( १ ) आर्य्य ! अपरः खलु अमात्यराक्षसस्य प्रियवयस्यः कायस्थः शकटदासो नाम ।

( २ ) तृतीयोऽपि अमात्यराक्षसस्य द्वितीयमिव हृदयं पुष्पपुरनिवासी मणिकारश्रेष्ठी चन्दनदासो नाम, यस्य गेहे कलत्रं न्यासीकृत्य अमात्यराक्षसो नगरादपक्रान्तः ।

---

( १ ) आर्येति । अपरोऽन्यः खलु अमात्यश्चासौ राक्षसोऽमात्यराक्षसस्तस्य तथोक्तस्य राक्षसनाम्नो मन्त्रिणः प्रीणातीति प्रियः ( प्रीञ् तर्पणे कान्तौ चेत्यस्मात्कः ) वयसा वर्षेण तुल्यो वयस्यः प्रियश्चासौ वयस्यश्चेति प्रियवयस्यः ( 'नौवयोः' इत्यनेन तुल्यार्थे यति रूपम् ) परमसुहृत् कायस्थो लेखकः शकटदासो नाम नाम्ना शकटदास इति प्रसिद्धः । अस्तीति शेषः ।

विहस्यात्मगतमिति । विहस्य हास्यं कृत्वा कायस्थशब्दश्रवणात्तस्याल्पसारत्वमवेक्ष्य चाणक्यस्य हास्यमुत्पन्नमिति भावः । आत्मगतं स्वगतं कथयतीति शेषः । कायस्थ इति लघ्वी अल्पा मात्रा अंशः अतोऽल्पबुद्धिरयम् नानेनापकारः कर्तुं शक्यते अनादराऽभिव्यञ्जकमिदं वचनम् । नास्मादस्मदनिष्टसम्भावनेति तात्पर्यम् , तथापि अल्पत्वेऽपि प्राकृतं क्षुद्रमपि रिपुं शत्रुमवज्ञातुमुपेक्षितुं न युक्तं नोचितम् ।

विवर्णः पामरो नीचः प्राकृतश्च पृथक् जनः ।

इत्यमरः तस्मिन् शकटदासे सुहृच्छद्मना मित्रव्याजेन सिद्धार्थकः पुरुषविशेषो दूतः क्षिप्तो नियुक्तः ।

( २ ) तृतीयोऽपीति । द्वितीयमपरं हृदयं मानसमिव परमविश्वासपात्र

चाणक्यः—( आत्मगतम् ) नूनं सुहृत्तमः, न हि अनात्मसदृशेषु राक्षसः कलत्रं न्यासीकरिष्यति । ( प्रकाशम् ) भद्र ! चन्दनदासस्य गृहे राक्षसेन कलत्रं न्यासीकृतमिति कथमवगम्यते भवता ?

चरः— अज्ज ! इअं अंगुलीअमुद्दा अज्जं अवगदत्थं करिस्सदि । ( इति मुद्रामर्पयति ) (१)

चाणक्यः—( मुद्रामवलोक्य गृहीत्वा, राक्षसस्य नाम वाचयित्वा च, सहर्षं स्वगतम् ) ननु राक्षस एव अस्मदङ्गुलिप्रणयी संवृत्त इति । ( प्रकाशम् ) भद्र ! अङ्गुलिमुद्राधिगमं विस्तरेण श्रोतुमिच्छामि ।

---

( १ ) आर्य ! इयमङ्गुलिमुद्रा आर्यमवगतार्थं करिष्यति । ( अज्ज अवगमइस्सदि इति पाठे—आर्यमवगमयिष्यति इति सं० ) ।

---

मियेति यावत् । पुष्पपुरनिवासी मणिकारश्रेष्ठी रत्ननिर्मातृवणिगिति यावत् । अस्तीति शेषः मणिकारश्रेष्ठिनो गृहे सदने कलत्रं भार्यां

कलत्रं श्रोणिभार्ययोरिति कोशः ।

न्यासीकृत्य निक्षिप्य स्थापयित्वेत्यर्थः । अमात्यराक्षसो नगरात्पुरादपक्रान्तो निर्गतः पर्वतकपुत्रमलयकेतुं सेवितुमिति शेषः ।

आत्मगतमिति । स्वगतम् नूनं निश्चितं सुहृत्तमः परमस्नेही अनात्मसदृशेषु आत्मसदृशभिन्नेष्वित्यर्थः । न न्यासीकरिष्यति न स्थापयिष्यति । प्रकाशं सुस्पष्टम् । भद्र साधो गृहे भवने कलत्रं स्त्रियं न्यासीकृतं स्थापितं कथं केन प्रकारेणावगम्यते बुध्यते ।

( १ ) आर्येति । आर्य पूज्य ! इयं प्रत्यक्षदृश्यमाना अङ्गुलिमुद्रा नामाङ्कितमङ्गुलीयकमस्तीति शेषः । सैवार्यं पूज्यम्भवन्तमिति शेषः । अवगतो ज्ञातोऽर्थोऽभिप्रायो येन स तथोक्तस्तमवगतार्थं विज्ञातार्थं करिष्यति विधास्यति नामाङ्किताङ्गुलिमुद्रावलोकनेनैव चन्दनदासालयाधिकरणकराक्षसकर्तृककलत्रस्थापनावगतिर्भविष्यतीति भावः ।

मुद्रामवलोक्येति । मुद्रां नामाङ्कितमङ्गुलीयकमवलोक्य समीक्ष्य गृहीत्वा हस्ते स्थितां विधाय राक्षसस्य मन्त्रामात्यस्य नामाऽभिधानं वाचयित्वा पठित्वा सहर्षं सानन्दं यथा तथा । ( क्रियाविशेषणमिदम् ) स्वगतमनतिस्पष्टं मनसीत्यर्थः

चरः—सुणादु अज्जो, अत्थि दाव अहं अज्जेण पउरजणचरिददंसणे णिउत्तो, तदो परघरप्पवेसं परस्स अणासंकणीएण इमिणा जमपडेण आहिण्डन्तो मणिआरसेट्ठिणो चन्दणदासस्स घरं पविट्ठोह्मि, तहिं जमपडअं पसारिअ पउत्तोह्मि गीदाइं गाइदुं—" (१)

चाणक्यः—ततस्ततः ।

---

( १ ) शृणोत्वार्यः, अस्ति तावदहमार्येण पौरजनचरित्रदर्शने नियुक्तः, ततः परगृहप्रवेशे परस्यानाशङ्कनीयेनानेन यमपटेन आहिण्डमानो मणिकारश्रेष्ठिनश्चन्दनदासस्य गृहं प्रविष्टोऽस्मि, तत्र यमपटं प्रसार्य प्रवृत्तोऽस्मि गीतानि गातुम् ।

---

( इत्थं प क्रियाविशेषणम् ) ब्रवीमीति शेषः । ननु भोः (सम्बोधनार्थको ननुशब्दोऽव्ययम् ) राक्षस एव नन्दामात्य एव अस्माकमङ्गुलिस्तस्यास्तस्यां वा प्रणयी स्नेही सम्वृत्तस्संजातः हस्तस्थित इति यावत् । मुद्राप्राप्त्या राक्षसं प्राप्तमिवावगच्छामीति भावः । प्रकाशं सुस्पष्टं ( क्रियाविशेषणमिदम् ) कथयामीति शेषः । भद्र साधो ! अंगुलिमुद्राया नामाङ्कितमङ्गुलीयकस्याधिगमः प्राप्तिरङ्गुलिमुद्राधिगमस्तं विस्तरेण क्रमेण ( प्रकृत्यादित्वात्तृतीया ) श्रोतुमाकर्णयितुमिच्छामि अभिलषामि ।

( १ ) शृणोत्वार्य इति । आर्यः पूज्यो भवान् शृणोतु आकर्णयतु । आर्येण पूज्येन मान्येनेति यावत् । पुरे भवाः पौराः (तत्र भव इत्यण्) पौराश्च ते जनाः पौरजनाः तेषां चरितानि कर्माणि पौरजनचरितानि तेषां दर्शनेऽनुसरणे इति यावत् । अहं नियुक्तो नियोजितोऽस्मि अस्मीत्यर्थः ( अस्मीत्यस्य क्रियावाचकाव्ययत्वम् ), ततो नियोजनानन्तरं पश्चादित्यर्थः । गृहं सदनं तत्र प्रवेशो नागमनं तस्मिन् परगृहप्रवेशे ( विषयसप्तम्यन्तमिदम् ) परस्यान्यस्यानाशङ्कनीयेन सन्देहयोग्येन अनेन प्रत्यक्षदृश्यमानेन यमपटेन कृतान्तचित्रेण आहिण्डमानः पर्यटन् परिभ्रमन्निति यावत् । मणिकारश्रेष्ठिनो मणिकारेश्वरस्य चन्दनदासस्य गृहमालयं प्रविष्टोऽस्मि । तत्र चन्दनदासालये यमपटं कृतान्तचित्रं प्रसार्य विलोकयन् लोकानिति शेषः । गीतानि गातुं प्रवृत्तोऽस्मि तत्परो भवामि ।

ततस्तत इति । ततस्तदनन्तरं गीतगानानन्तरमित्यर्थः । किं वृत्तं जातं तत्कथयेति शेषः ।

चरः—तदो, एक्कादो पञ्चवरिसदेसीओ प्पिअदंसणीअशरीराकिदी कुमारओ बालजणसुलहकोदूहलोप फुल्लणअणजुअलओ णिक्कमिदुं प्पउत्तो. तदो 'हा णिग्गदो हा णिग्गदो'त्ति संकापरिग्गहणिभूदगुरुओ तस्सज्जेव्व आवरकस्स अब्भंतरे इत्थिआजणस्स उत्थिदो महन्तो कलअलो । तदो ईसिदुआरदेशदाविदमुहीए एकाए इत्थिआए सो कुमारओ णिक्कमन्तो ज्जेव्व णिब्भच्छिअ अवलम्बिदो कोमलाए बाहुलदाए । तस्सा अ कुमारसंरोहसंभमप्पचलिदंगुलिदो करादो पुरिसंगुलिपरिणाहप्पमाणघडिआ विआलिदा इअं अंगुलिमुद्दिआ देहलीबन्धम्मि णिपडिआ; ताए इत्थिआए अणवबुद्धन्त ज्जेव्व मम चलणपासं समागच्छिअ पणामणिहुआ णववहूव्व णिच्चला संवुत्ता, मये वि अमच्चरक्खसस्स णामंकिदेत्ति अज्जस्स पादमूलं पाविदा, ता ऐसो इमाए मुद्दाए आगमोत्ति । (१)

---

(१) ततश्च एकस्मात् आवरकात् पञ्चवर्षदेशीयः प्रियदर्शनीयशरीराकृतिः कुमारकः बालजनसुलभकौतूहलात्फुल्लनयनयुगलको निष्क्रमितुं प्रवृत्तः,ततः'हा निर्गतः हा निर्गत' इति शङ्कापरिग्रहनिभृतगुरुकः (शङ्कापडिग्गह णिवेदन्त इति पाठे–शङ्कापरिग्रहं निवेदयन् इति सं०) तस्यैव आवरकस्याभ्यन्तरे स्त्रीजनस्य उत्थितो महान् कलकलः । ततः ईषद्द्वारदेशदापितमुख्या एकया स्त्रिया स कुमारको निष्क्रामन्नेव निर्भत्स्यावलम्बितः कोमलया बाहुलतया । तस्याश्च कुमारसंरोधसम्भ्रमप्रचलिताङ्गुलेः करात् पुरुषाङ्गुलिपरिणाहप्रमाणघटिता विगलितेयमङ्गुलिमुद्रिका देहलीबन्धे निपतिता; तया स्त्रिया अनवबुध्यमानैव मम चरणपार्श्वे समागत्य प्रणामनिभृता नववधूरिव निश्चला संवृत्ता मयाऽपि अमात्यराक्षसस्य नामाङ्कितेति आर्यस्य पादमूलं प्रापिता, तस्मात् एषाऽस्या मुद्राया आगम इति ।

( १ ) तत एकस्मादिति । ततो गीतगानानन्तरमेकस्मात् आव्रियते इत्यावरः आवरणं ( आङ्पूर्वकाद्वृणोतेरप् ) आवर एवाऽऽवरकस्तस्मादावरकात् जवनिकाया इत्यर्थः । अपवरकादिति पाठे गवाक्षादित्यर्थः । पञ्च वर्षाणि यस्य स पञ्चवर्षः, ईषदसमाप्तः पञ्चवर्षः पञ्चवर्षदेशीयः प्रिया मनोहरा दर्शनीया भव्या शरीरस्य

कायस्याऽऽकृतिराकारो यस्य स प्रियदर्शनीयशरीराकृतिः कुमार एव कुमारकः (स्वार्थे कः) शिशुरित्यर्थः, बालजनस्य शिशोः सुलभं स्वभावजं यत्कौतूहलं कौतुकं तेनोत्फुल्लं विकसितं नयनयुगलं नेत्रयुग्मं यस्य स तथोक्तः, निष्क्रमितुं निर्गन्तुं प्रवृत्त उद्युक्तः। ततस्तदनन्तरं हा निर्गतो हा निर्गत इति इत्येवंरूपः शङ्कायाः सन्देहस्य परिग्रहः प्राप्तिस्तेन निभृतमतिशयं गुरुको वर्द्धमानः तस्यैवापवरकस्य जवनिकाया अभ्यन्तरे मध्ये स्त्रीजनस्य नारीजनस्य महान् विशेषः कलकलः अव्यक्तध्वनिरुत्थितः समुत्पन्नः। ततः कलकलोत्पत्त्यनन्तरमित्यर्थः। ईषदल्पं द्वारमेव देशः प्रदेशस्तत्र दापितं निहितं स्थापितमिति यावत्। मुखमाननं यया सा तथोक्ता तथा तयोक्तया एकया केवलया अद्वितीययेति यावत्। स्त्रिया नार्या स उक्तविधः कुमारकः शिशुः निष्क्रामन्नेव बहिर्निर्गच्छन्नेव निर्भर्त्स्य उपालभ्य कोमलया बाहुलतया भुजशाखया अवलम्बितो धृतः। तस्याः स्त्रियश्च कुमारस्य शिशोः (पृथुकः शावकः शिशुरित्यमरः) संरोधो बहिर्गमनप्रतिषेधस्तत्र सम्भ्रमो व्याकुलता तेन प्रचलिता प्रकम्पिता अङ्गुलिस्तस्मात्कुमारसंरोधसम्भ्रमप्रचलिताङ्गुलेः (पूर्वं कुमारसंरोधशब्दयोः षष्ठीतत्पुरुषस्ततः सम्भ्रमशब्देन सप्तमीतत्पुरुषस्ततो बहुव्रीहिः) कराद्धस्तात् पुरुषस्य पुंसोऽङ्गुलिः पुरुषाऽङ्गुलिस्तस्य परिणाहो विशालत्वं तस्य प्रमाणेन परिमाणेन घटिता निर्मिता पुरुषाऽङ्गुलिप्रमाणघटिता इयं साक्षाद्दृश्यमानाऽङ्गुलिमुद्रा नामाङ्कितमङ्गुलीयकं विगलिताऽङ्गुलितश्च्युता सती देहल्या द्वाराधःप्रदेशस्य बन्धो बन्धनस्थानं देहलीबन्धस्तत्र निपतिता भ्रष्टा पुरुषकराऽङ्गुष्ठापेक्षया स्त्रीकराङ्गुलेः कृशत्वेन ततस्तत्पतनं सम्भवतीति भावः। तया स्त्रिया नार्या अनवबुध्यमानाऽज्ञायमाना एवं साऽङ्गुलिमुद्रा (अनवबुद्धैवेति पाठेऽज्ञातैवेत्यर्थः) मम चरणपार्श्वे मत्पादसन्निधिं समागत्य समेत्य प्रणामेन प्रणत्या निभृता विनीता नम्रेति यावत् प्रणामनिभृता प्रणतिविनीता।

'वश्यः प्रणेयो निभृतविनीतप्रश्रिताः' समा इत्यमरः।

कुलवधूः कुलाङ्गनेव निश्चला सुस्थिरा संवृत्ता संजाता, मयाऽपि अमात्यराक्षसस्य राक्षसनाम्नो मन्त्रिणः नाम्नाऽङ्किता चिह्निता नामाङ्कितेत्येवमवलोकयति शेषः। आर्यस्य मान्यस्य भवतः पादमूलं चरणनिकटं प्रापिता समानीता तस्मादेव इत्येवंरूपः अस्याः प्रत्यक्षदृश्यमानाया अङ्गुलिमुद्राया नामाङ्कितायाः ... आगमो कामोदन्तमिति।

चाणक्यः—भद्र ! श्रुतम् । अपसर न चिरादस्य परिश्रमस्यानुरूपं फलमधिगमिष्यसि ।

चरः—जं अज्जो आणवेदित्ति । (१) ( इति निष्क्रान्तः । )

चाणक्यः—शार्ङ्गरव ! शार्ङ्गरव !

शिष्यः—( प्रविश्य ) उपाध्याय ! आज्ञापय ।

चाणक्यः—वत्स ! मसीभाजनं पत्रञ्चोपानय ।

शिष्यः—यदाज्ञापयत्युपाध्यायः । ( इति निष्क्रम्य पुनः प्रविश्य ) उपाध्याय ! इदं मसीभाजनं पत्रञ्च ।

चाणक्यः—( गृहीत्वा स्वगतम् ) किमत्र लिखामि ? अनेन खलु लेखेन राक्षसो जेतव्यः ।

---

( १ ) यदार्य्य आज्ञापयति इति ।

---

भद्रेति । भद्रं कुशलमस्त्यस्येति भद्रः ( अर्शाद्यजन्तः ) भद्र कुशलिन् श्रुतं सर्वमाकर्णितं मयेति शेषः । अपसर गच्छ नचिरादतिशीघ्रं (नशब्दस्य चिरादित्यनेन समासः) अस्य परिश्रमस्योद्योगस्याऽनुरूपं सदृशं फलमधिगमिष्यसि प्राप्स्यसि ।

( १ ) निष्क्रान्तो रङ्गस्थानाद्बहिर्गतः ।

इत्थमनेकरससमुद्भवबीजसमुत्पत्तिनिरूपणं कृतम् । एतन्निरूपणादेवायं मुखसन्धिः साकल्येन व्याख्यातः ।

लक्ष्यालक्ष्यस्य बीजस्य व्यक्तिः प्रतिमुखं मतम् ।

इति लक्षणादेतदग्रे प्रतिमुखसन्धिः प्रागलक्ष्यस्य व्यक्तस्य मध्ये यमपटस्वरूपताख्यानेनालक्षितस्यागरूपनीतियोगबीजस्य पुनस्तथाऽभिव्यक्तेरुद्भेदात् ।

एवं बिन्दुसम्बन्धस्य च सद्भावात् । बिन्दुप्रयत्नेत्युभयमग्रे वक्ष्यते—

बिन्दुप्रयत्नाऽनुगमादङ्गान्यस्य त्रयोदश ।
विलासः परिसर्पश्च विधुतं तापनं तथा ॥
नर्मद्युतिः प्रशमनं विरोधः पर्युपासनम् ।
वज्रपुष्पं परिन्यासो वर्णसंहार इत्यपि ॥

वत्सेति—मसीभाजनं मस्याधारपात्रमुपानय कुतश्चिदानीय मन्निकटे स्थापय ।

किमत्रेति—अत्रास्मिन्पत्रे किं वृत्तमिति शेषः ।

**प्रतिहारी—( प्रविश्य ) जेदु जेदु अज्जो । (१)**

**चाणक्यः—( सहर्षमात्मगतम् । ) गृहीतोऽयं जयशब्दः । ( प्रकाशम् । ) शोणोत्तरे ! किमागमनप्रयोजनम् ?**

---

( १ ) जयति जयत्यार्य्यः ।

---

अवान्तरार्थे यमपटचरवृत्तान्तेनान्तरितराजकार्यस्य पुनः प्रवर्तनादयं चाणक्यस्य पुनरुद्यमो बिन्दुः । उक्तञ्च तल्लक्षणं साहित्यदर्पणे यथा—

अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणमिति केचित् ।

( २ ) **प्रतीहारीति**–राजनिकटवर्त्तिद्वारस्थिता स्त्री प्रतीहारी । उक्तञ्च कोषे

द्वारि द्वाःस्थे प्रतीहारः प्रतीहार्यप्यनन्तरे इति ।

सन्धिविग्रहसम्बद्धं नानाकार्यसमुत्थितम् ॥

निवेदयन्ति याः कार्यं प्रतीहार्यस्तु ताः स्मृताः ।

राज्ञः सन्धिविग्रहादिकार्यनिवेदनकर्त्री स्त्री प्रतीहारीति तदर्थः । अत्र नाटके तस्याः शोणोत्तरेति नाम । प्रविश्य रङ्गस्थानमिति शेषः । आर्यो जयति सर्वोत्कर्षेण वर्त्तताम् ( जयत्वित्यस्य स्थाने जयतीति प्रयोगो जयतेस्त्वर्थे नेति शब्दशास्त्रविशेषाऽनुशासनात् ) ।

**सहर्षमात्मगतमिति**—हर्षेण प्रमोदेन सह वर्तमानं सहर्षं आत्मगतं स्वान्तःश्राव्यम् ( इदं द्वयं क्रियाविशेषणम् ) राक्षसजयकामनया चित्तं स्थिरीकृत्य विचारयति चाणक्ये जयार्थसम्वलितप्रतीहारीवचनश्रवणाद्भाविसूचकजयशब्दाकर्णनाच्चाणक्यहर्षस्य जातत्वादुक्तं तेन गृहीतोऽयं जयशब्द इति ।

यत्रार्थे चिन्तितेऽन्यस्मिन् तल्लिङ्गोऽन्यः प्रयुज्यते ।

आगन्तुकेन भावेन पताकास्थानकं तु तत् ॥

सहसैवार्थसम्पत्तिः गुणवत्युपचारतः ।

पताकास्थानकमिदं प्रथमं परिकीर्तितम् ॥

इति दर्पणोक्तलक्षणादेतन्नाटकांशे प्रथमं पताकास्थानकम् । किञ्च कार्यसिद्धिविषयकेनाऽयं विलासो नाम प्रथममङ्गम् । प्रकाशं स्पष्टं शोणोत्तरां प्रतीहारीं सम्बोधनमिदम् ।

प्रतीहारी—अज्ज ! कमलमउलाआरमञ्जलिं सीसे णिवेसिअ देओ चन्दसिरी अज्जं विण्णवेदि । इच्छामि अहं अज्जेण अब्भणुण्णादो देअस्स पव्वदेसरस्स पारलोइअं कादुं, तेण अ धारिदपुव्वाइं आभरणाइं गुणवन्ताणं बह्मणाणं पडिवादेमित्ति । (१)

चाणक्यः—( सहर्षमात्मगतम् । ) साधु वृषल ! साधु ! ममैव हृदयेन सह सम्मन्त्र्य सन्दिष्टवानसि । ( प्रकाशम् । ) शोणोत्तरे ! उच्यतामस्मद्वचनाद्वृषलः, साधु वत्स ! साधु, अभिज्ञः खल्वसि लोकव्यवहाराणां, तदनुष्ठीयतामात्मनोऽभिप्रायः किन्तु पर्वतेश्वरधृतपूर्वाणि भूषणानि गुणवन्ति, गुणवद्भ्य एव ब्राह्मणेभ्यः प्रतिपादनीयानि । तद् एषोऽहं स्वयं परीक्षितगुणान् ब्राह्मणान् प्रेषयामि ।

---

(१) आर्य ! कमलमुकुलाकारमञ्जलिं शीर्षे निवेश्य देवश्चन्द्रश्रीरार्यं विज्ञापयति । इच्छाम्यहमार्येणाभ्यनुज्ञातो देवस्य पर्वतेश्वरस्य पारलौकिकं कर्त्तुं, तेन च धारितपूर्वाण्याभरणानि गुणवतां ब्राह्मणानां प्रतिपादयामीति ।

---

(१) आर्येति । आर्य मान्य, चन्द्रस्य विधोः श्रीरिव श्रीः शोभा यस्य स चन्द्रश्रीरिन्दुकान्तिः देवो राजा चन्द्रगुप्त इति यावत् । कमलस्य पङ्कजस्य मुकुलः कलिका तस्याकार इवाकार आकृतिर्यस्य स तं कमलमुकुलाकारं अज्यतेऽवबोध्यते सौशील्यं येनासावञ्जलिस्तमञ्जलिं शीर्षे मस्तके निवेश्य निधाय आर्यं मान्यं भवन्तं विज्ञापयति निवेदयति प्रार्थयतीति यावत् । आर्येण मान्येन भवताऽभ्यनुज्ञात आदिष्टः सन् देवस्य राज्ञः पर्वतेश्वरस्य परलोके प्रयोजनमस्येति पारलौकिकं परलोकसिद्ध्यर्थं कृतं श्राद्धादिकं कर्म कर्त्तुं विधातुमिच्छामि । तेन पर्वतेश्वरेण च पूर्वं धारितानि धारितपूर्वाणि ( सुप्सुपेति समासः ) आभरणानि भूषणानि ब्राह्मणानां विप्राणां प्रतिपादयामि समर्पयामि ।

सहर्षमिति । साधु वृषल साधु ! मम मदीयेनैव हृदयेन मानसेन सह सार्धं सम्मन्त्र्य मन्त्रयित्वा सन्दिष्टवान् आदिष्टवानसि मम हृदयानुगतमेव त्वया विज्ञापितमित्यर्थः । शोणोत्तरे प्रतीहार्याः सम्बोधनमिदम् । अस्मद्वचनात् मद्वचनानुसारेण वृषलश्चन्द्रगुप्त उच्यतामभिधीयताम् । साधु वत्स! व्यवहरणं व्यवहार आचारः

प्रतिहारी—जं अज्जो आणवेदि त्ति । (१) ( निष्क्रान्ता । )

चाणक्यः—शार्ङ्गरव ! शार्ङ्गरव ! उच्यन्तामस्मद्वचनाद्विश्वावसुप्रभृतयः त्रयो भ्रातरः, यथा वृषलात्प्रतिगृह्याभरणानि भवद्भिरहं द्रष्टव्य इति ।

शिष्यः—यदाज्ञापयत्युपाध्यायः । ( इति निष्क्रान्तः । )

चाणक्यः—( स्वगतम् । ) उत्तरोऽयं लेखार्थः, पूर्वः कतमोऽस्तु । ( विचिन्त्य । ) आं ज्ञातः, उपलब्धवानस्मि प्रणिधिभ्यः, यथा तस्य म्लेच्छराजबलस्य मध्यात् प्रधानतमाः पंच राजानः परया भक्त्या राक्षसमनुवर्त्तन्ते । ते यथा—

---

( १ ) यदार्य्य आज्ञापयतीति ।

---

( भावे घञ् ) लोकानां व्यवहारा आचारा लोकव्यवहारास्तेषां लोकव्यवहाराणामभिज्ञः कुशलोऽसि । लोकाचारविषयकपरमनैपुण्यमुपगतोऽसीति भावः । तत्तस्मात्कारणात् आत्मनः स्वस्याऽभिप्रायस्तात्पर्यमनुष्ठीयताम् तात्पर्यानुरूपं क्रियताम् । किन्तु परं पर्वतेश्वरेण मलयकेतुपित्रा पूर्वं धृतानि धृतपूर्वाणि गुणवन्ति बहुमूल्यानि उत्कृष्टानि भूषणान्यलंकरणानि गुणवद्भ्यः श्रोत्रियादिगुणशालिभ्य एव ब्राह्मणेभ्य इति शेषः । प्रतिपादनीयानि समर्पणीयानि । योग्यानामेव योग्यवस्तुदानमौचित्यमित्यभिप्रायश्चाणक्यस्य पात्रभूतस्वगुप्तचरविश्वावसुप्रभृतित्रयेण मौर्यकरगतस्यापि तदलंकरणस्य दानव्याजेन वणिग्द्वारा राक्षससान्निध्ये प्रेषणीयत्वमित्यभिप्रायः । तत्तस्मात्कारणादहं स्वयमेव साक्षादेव परीक्षितगुणान् सद्गुणशालिनो ब्राह्मणान् विप्रान् प्रेषयामि प्रेषयिष्यामि ( भविष्यत्सामीप्ये लट् ) ।

शार्ङ्गरवेति । हे शार्ङ्गरव ! अस्मद्वचनान्मम वचनाऽनुसारेण विश्वं वसु यस्य स विश्वावसुः ( 'विश्वस्य वसुराटोरि'ति दीर्घः ) स प्रभृतिरादिर्येषां ते विश्वावसुप्रभृतयस्त्रयो भ्रातरः सोदराः, वृषलाच्चन्द्रगुप्तादाभरणानि भूषणानि प्रतिगृह्याऽऽदाय स्वीकृत्येति यावत् । भवद्भिः सालंकरणैरित्यर्थः । द्रष्टव्योऽवलोकनीय इति । अलंकरणत्रयस्य पृथक् पृथक् परिग्रहार्थं त्रयो भ्रातर इत्युक्तम् ।

स्वगतमिति—अनतिस्फुटमित्यर्थः । अयमलंकरणरूप उत्तरोऽन्तिमः भगवताऽनुप्रेषितस्यालंकारत्रयस्योपगम इति निर्वहणे वाचयिष्यमाण इति यावत् ।

कौलूतश्चित्रवर्मा मलयनरपतिः सिंहनादो नृसिंहः
काश्मीरः पुष्कराक्षः क्षतरिपुमहिमा सैन्धवः सिन्धुषेणः ।
मेघाक्षः पञ्चमोऽस्मिन् पृथुतुरगबलः पारसीकाधिराजो
नामान्येषां लिखामि ध्रुवमहमधुना चित्रगुप्तः प्रमार्ष्टु ॥ २० ॥

---

स्वस्तितयेत्यादि पञ्चमाङ्कावलोकयिष्यमाणस्य लेखस्यार्थः प्रतिपाद्योऽस्त्विति शेषः । लेखनीयस्यैतदलंकारत्रयमन्तिमो विषय इति भावः । पूर्वसन्धौ दृष्टस्य मध्ये नष्टस्य बीजस्यानुसन्धानादिदं दृष्टनष्टबीजानुसरणं परिसर्पः । पूर्वः प्रथमः कतमः कीदृशो लेखार्थ इति यावदस्तु स्यात् कथमिति पाठेऽपि स एवार्थः । लेख्यास्मिन्नथवा किंचिदलंकारविषये पूर्वभागे किं लिखितमस्त्विति भावः । विचिन्त्य विचार्य । आ इति स्मरणार्थकमव्ययम् ज्ञातं निश्चितम् । प्रणिधिभ्यो गूढदूतेभ्यः ( अपादान पञ्चम्यन्तमिदम् ) उपलब्धवान् ज्ञातवानस्मि भवामि, म्लेच्छराजबलस्य म्लेच्छाधिपसैन्यस्य मध्यात् ( इदमप्यपादानपञ्चम्यन्तम् ) प्रधानतमा अतिशयेन प्रधानाः । पञ्च राजानो नृपाः परया महत्या भक्त्या बन्धुतया राक्षसं नन्दामात्यमनुवर्तन्तेऽनुसरन्ति ।

तदेव दर्शयति—कौलूत इति । कौलूतः कुलूतदेशाधिपः चित्रवर्मा नाम, नृसिंहो नरश्रेष्ठो मलयनरपतिः मलयगिरिनिकटवर्तिदेशाधिपः सिंहनादो नाम, काश्मीरदेशाधिपः पुष्कराक्षो नाम, क्षतो विनाशितो रिपूणामरीणां महिमा प्रभावः सामर्थ्यमिति यावत् येनासौ क्षतरिपुमहिमा शत्रुन्दम इति यावत् । सैन्धवः सिन्धुदेशाऽधिपः सिन्धुषेणो नाम । पृथु महत् तुरगबलमश्वसैन्यं यस्याऽसौ पृथुतुरगबलः प्रभूताश्वादिसैन्य इत्यर्थः । पारसीकानां यवनादिदेशोद्भवानामधिराजोऽधिपतिः पारसीकाधिराजः मेघाक्षो नाम, एते पञ्च राजानः । एतेषां राज्ञां नामानि अस्मिन्लेखपत्रेऽहमधुना साम्प्रतं ध्रुवं निश्चितं लिखामि चित्रगुप्तो यममन्त्री प्रमार्ष्टु अपाकरोतु चित्रगुप्तस्तेषां मल्लिखितानि नामानि प्रोञ्छतु । तानहमेव शासिष्यामि चित्रगुप्तोद्योगोऽत्र विफल एवेति । एतल्लेखे मत्प्रयत्नेनैवैतेषां मरणं भविष्यति; अतो जीवितलेखे स्वपत्रलिखितमेतेषां नाम चित्रगुप्तः प्रमार्क्ष्यतीति भावः । मया तेषां नामलिखनेन चित्रगुप्तलिखितप्रमार्जनादर्थतस्तन्मरणसूचनादत्र श्लोकेऽर्थापत्तिरलंकारः । उक्तञ्च तल्लक्षणं दर्पणे यथा—

दण्डापूपिकयाऽन्यार्थाऽऽगमोऽर्थापत्तिरिष्यते ।

( विचिन्त्य । ) अथवा न लिखामि सर्वमनभिव्यक्तमेव तावदास्ताम् । ( प्रकाशम् । ) शार्ङ्गरव ! शार्ङ्गरव !

शिष्यः—( प्रविश्य । ) उपाध्याय ! आज्ञापय ।

चाणक्यः—वत्स ! श्रोत्रियाक्षराणि प्रयत्नेन लिखितान्यपि नियतमस्फुटानि भवन्ति, तदुच्यतामस्मद्वचनात् सिद्धार्थकः । ( कर्णे एवमिव । ) एभिरक्षरैः केनापि, किमपि, कस्यापि, स्वयं वाच्यमिति, अदत्तबाह्यनामानं लेखं शकटदासेन लेखयित्वा, मामुपतिष्ठस्व, न चाख्येयमस्मै चाणक्यो लेखयतीति ।

---

इति । पाञ्चाली रीतिः । ओजोगुणः । वीरो रसः । स्रग्धरा वृत्तम् ॥ २० ॥

विचिन्त्येति । तावत् प्राक् सर्वं लेखपत्रलेखनादिकं अनभिव्यक्तमनतिस्पष्टमेवास्तां तिष्ठतु नामलेखनादस्माभिर्व्यंजितं लेखयिष्यमाणं पत्रं शकटदासो न लेखिष्यतीति भावः । अनिष्टवस्तुनि नामलेखने अपायभियादिदमनिष्टवस्तु निक्षेपकत्वं विधुतम् । नाट्येन नटोचितव्यापारविशेषेण लिखित्वा वर्णविन्यासं कृत्वा, शार्ङ्गरव, शिष्यसम्बोधनमिदम् ।

प्रविश्य रङ्गस्थानमिति शेषः, उपाध्याय गुरो आज्ञापय निदेशं कुरु ।

साक्षात्पत्रालेखने हेतुं प्रदर्शयति—वत्स, श्रोत्रियाक्षराणीति । वत्सेति शिष्यसम्बोधनम् । श्रोत्रियस्य वेदविदोऽध्यापकस्येति यावत् द्विजस्येति शेषः । अक्षराणि वर्णाः प्रयत्नेन प्रयासेन लिखितानि विन्यस्तान्यपि अस्फुटानि अनतिस्पष्टानि भवन्ति जायन्ते तत् तस्मादस्मद्वचनान्ममवचनानुसारेण सिद्धार्थक उच्यतामभिधीयताम् । एभिरक्षरैर्वर्णैः केनापि जनेन कस्यापि सविधे किमपि स्वयं साक्षाद्वाच्यमभिधेयमिति इतः अदत्तानि बाह्यानां कान्तराक्षसप्रभृतीनां नामानि यस्मिन् तमदत्तबाह्यनामानं यद्वा अदत्तानि लेखशिरोभागस्थप्रतिपाद्यनामानि यद्वा लेखकस्तेषां नामानि यस्मिन् तथोक्तं लेखं पत्रं शकटदासेन तदाख्या कायस्थेन ( लेखकर्त्रा ) लेखयित्वा मामुपतिष्ठस्व मत्समीपवर्ती भव ( उपपूर्वकतिष्ठतेः 'उपाद्देवपूजासङ्गतिकरण' इति सूत्रेण सङ्गतावात्मने पदम् ) चाणक्यो लेखयतीत्यस्मै शकटदासाय न वाच्यमिदं वक्तव्यम् । ( क्रियया यमभिप्रैति सोऽपि सम्प्रदानमित्यनुशासनेन सम्प्रदानसंज्ञायामस्मै इति सम्प्रदानचतुर्थ्यन्तम् । )

शिष्यः—तथेति । ( निष्क्रान्तः । )

चाणक्यः—( स्वगतम् । ) हन्त जितो मलयकेतुः ।

सिद्धार्थकः—( लेखहस्तः प्रविश्य । ) जेदु जेदु अज्जो । अज्ज ! अअं सो सअडदासेण सहत्थलिहिदो लेहो । (१)

चाणक्यः—( गृहीत्वा निरीक्ष्य । ) अहो दर्शनीयताक्षराणाम् ! ( इत्यनुवाच्य । ) भद्र ! अनया मुद्रया मुद्रयैनम् ।

सिद्धार्थकः—जं अज्जो आणवेदित्ति । ( तथा कृत्वा । ) अज्ज ! अअं सो मुद्दिदो लेहो, ता आणवेदु अज्जो किं अवरं अणुचिट्ठीअदु त्ति ।

---

( १ ) जयति जयत्वार्यः । आर्य ! अयं सः शकटदासेन स्वहस्तलिखितो लेखः । ( " सहु वअणेण अविचालिअ " इत्यधिकपाठे—मम वचनेनाविचार्य इति सं० ) ।

( २ ) यदाचार्य आज्ञापयति । आर्य अयं स मुद्रितो लेखः, तदाज्ञापयत्वार्य किमपरमनुष्ठीयतामिति ।

---

तथेतीति । भवदाज्ञानुयोगं करिष्यामीत्यर्थः । निष्क्रान्तो निर्गतो रङ्गस्थानादिति शेषः ।

स्वगतमिति । सर्वैरश्रोतव्यं यथा तथा कथयतीत्यर्थः । हन्त ( इदं हर्षसूचकमव्ययम् )

हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोरित्यमरः ।

मलयकेतुः पर्वतेश्वरसुतो जितो भवति शेषः ॥

( १ ) लेखहस्तः प्रविशतीति । लेखः पत्रिका हस्ते करे यस्यासौ लेखहस्तः करे पत्रिकामादायेत्यर्थः । प्रविश्य रङ्गस्थानमिति शेषः । आर्यः पूज्यो भवान् जयति सर्वोत्कर्षेण वर्तताम् । आर्य मान्य, शकटदासेन तन्नाम्ना कायस्थेन अयं प्रत्यक्षदृश्यमानः स भवदुक्तो लेखो पत्रं लिखितः ।

गृहीत्वेति । आदाय पत्रमिति शेषः । अहो ( विस्मयसूचकमव्ययमिदम् ) दर्शनीयाकारतां ( अहो हो च विस्मये इति ) दर्शनीयानि मनोज्ञानि अक्षराणि वर्णाः सन्तीति शेषः । अनुवाच्य पठित्वा भद्र साधो, अनया राक्षसनामाङ्कितया मुद्रयाङ्गुलिमुद्रया एनं लेखं पत्रं मुद्रय अङ्कय ।

( २ ) सिद्धार्थक इति । एतद् भवानाज्ञापयतीति, तथा कृत्वा मुद्र-

चाणक्यः—भद्र ! कस्मिंश्चित् आत्मनाऽनुष्ठेये कर्मणि त्वां व्यापारयितुमिच्छामि ।

सिद्धार्थकः—( सहर्षम् ) अज्ज ! अणुग्गहीदोह्मि, ता आणवेदु अज्जो, किं इमिणा दासजणेण अज्जस्स अणुचिट्ठिदव्वं । (१)

चाणक्यः—भद्र ! प्रथमं तावत् वध्यस्थानं गत्वा घातकाः सरोषं दक्षिणाक्षिसङ्कोचसंज्ञां ग्राहयितव्याः, ततस्तेषु गृहीतसंज्ञेषु भयापदेशादितस्ततः प्रद्रुतेषु शकटदासो वध्यस्थानादपनीय राक्षसं प्रापयितव्यः, तस्माच्च सुहृत्प्राणरक्षणपरितुष्टात् पारितोषिकं ग्राह्यं, राक्षस एव कञ्चित् कालं सेवितव्यः, ततः प्रत्यासन्नेषु परेषु त्वया प्रयोजनमिदमनुष्ठेयम । ( कर्णे एवमेवम् )

---

( १ ) आर्य्य ! अनुगृहीतोऽस्मि, तदाज्ञापयतु आर्य्यः । किमनेन दासजनेन आर्य्यस्यानुष्ठातव्यम ।

---

विस्वेत्यर्थः । आर्य पूज्य, अयं प्रत्यक्षदृश्यमानो लेखः वर्त्र मुद्रितोऽङ्कित , अपरमन्यत् किं कार्यमिति शेषः । अनुष्ठीयतां क्रियतामिति ।

भद्रेति । भद्र साधो! सिद्धार्थक! कस्मिंश्चित् क्वचित आत्मजनेन सुहृज्जनेनाऽनुष्ठेयं तस्मिन्नात्मजनाऽनुष्ठेये कर्मणि कार्ये त्वां भवन्तं व्यापारयितुं नियोजयितुमिच्छामि कामये ।

सहर्षमिति । हर्षेणानन्देन सह वर्तमानं सहर्षं सानन्दं ( क्रियाविशेषणमिदम् ) कथयतीति शेषः । आर्य मान्य ! अनुगृहीतोऽनुकम्पितोऽस्मि भवामि भवतेति शेषः । आर्यः पूज्यो भवान आज्ञापयतु निदेशं करोतु अनेन दासजनेन अनुचरेण आर्यस्य पूज्यस्य भवतः किमनुष्ठानार्थं विधातव्यम् ।

प्रथममिति । प्रथमं पूर्वं 'तावच्छब्दो वाक्यालंकारे, वध्यस्थानं प्राणदण्डप्रदानभूमिं गत्वा प्राप्य घ्नन्तीति घातकाः हिंसकाः ( हन्तेश्चुक्ति 'हनस्तः' इति नस्य तस्य रूपम् ) रोषेण कोपेन सहितः सरोषः दक्षिणं च तदक्षि दक्षिणाक्षि तस्य संकोचो दक्षिणाक्षिसंकोचः सरोषश्चासौ दक्षिणाक्षिसंकोचः सरोषदक्षिणाक्षिसंकोच स चासौ संज्ञा संकेतः सरोषदक्षिणाक्षिसंकोचसंज्ञा तां सरोषदक्षिणाक्षिसंकोचसंज्ञां ग्राहयितव्याः प्रापयितव्याः । शकटदासशूलारोपणक्षणे मया क्रियमाणे सकोपदक्षि

सिद्धार्थकः—जं अज्जो आणवेदित्ति । ( १ )

चाणक्यः— शार्ङ्गरव ! शार्ङ्गरव !

शिष्यः—( प्रविश्य । ) उपाध्याय ! आज्ञापय ।

चाणक्यः— उच्यतां मद्वचनात् कालपाशिको दण्डपाशिकश्च, यथा वृषलः समाज्ञापयति, य एष क्षपणको जीवसिद्धिर्नाम राक्षसप्रयुक्तो विषकन्यया पर्वतेश्वरं घातितवान्; स एनमेव दोषं प्रख्याप्य सनिकारं नगरात् निर्वास्यताम् इति ।

---

( १ ) यदार्य्य आज्ञापयतीति ।

---

णनयनेपक्ष्मिमोलना ( संकोच ) रूपकसंकेते तं शकटदासं परित्यज्य पलायितव्यम्म-त्स्मिरिति संकेतयितव्या इति भावः । ततस्तदनन्तरं संकेतग्रहणानन्तरमित्यर्थः । गृहीताङ्गीकृतो ज्ञात इति यावत् । संकेतः संज्ञा यैस्ते गृहीतसंकेतेषु तेषु घातकेषु भयापदेशाद्भयव्याजात् इतस्ततः चतुर्दिक्षु प्रद्रुतेषु पलायितेषु सत्सु शकटदासस्त्वया-मकाराक्षसमिश्रं वध्यस्थानात् ( अपादाने पञ्चमी ) प्राणदण्डदानभूमेरित्यर्थः । अपनीय पृथक्कृत्य आनीयेति यावत् । राक्षसं नन्दामात्यं प्रापयितव्यो नेतव्यः । तस्मात् सुहृदो मित्रस्य प्राणाः तेषां परिरक्षणं तेन परितुष्टः सुहृत्प्राणपरिरक्षणपरि-तुष्टस्तस्मात्तस्मात् ( अपादानपञ्चम्यन्तमिदम् ) पारितोषिकं हर्षसूचकद्रव्यादि ग्राह्यं स्वीकार्यम् । राक्षस एव नन्दामात्य एव कञ्चित्कालं कियत्समयं सेवितव्यः आश्रितव्यः, ततः सेवनानन्तरं परेषु शत्रुषु प्रत्यासन्नेषु समीपवर्त्तिषु सत्सु त्वया भवता इदं प्रयोजनं कार्यमनुष्ठेयं कर्त्तव्यम् । कर्णे एवमेवं राक्षसप्रासपारितोषिकेण यत्कर्त्तव्यं यथाकर्त्तव्यं पञ्चमाङ्के कथयिष्यमाणसुहृद्भेदव्यापारसमूहं तत्सर्वं कथयतीत्यर्थः ।

उच्यतामिति । अस्मद्वचनान्मद्वचनाऽनुसारेण कालपाशिकः एतन्नामकः दण्डपाशिकश्चैतन्नामकश्च दूतः उच्यतामभिधीयताम् यथा वृषलश्चन्द्रगुप्तः समाज्ञा-पयति निर्देशं करोति, य एषः क्षपणकः बौद्धसन्यासी जीवसिद्धिर्नाम तदाख्यश्चाण-क्यप्रणिधिः राक्षसेन नन्दामात्येन प्रयुक्तो नियुक्तः सन् विषकन्यया पर्वतेश्वरं तदा-ख्यराजानं घातितवान् विनाशितवान् स जीवसिद्धिः एनमेव दोषमपवादं प्रख्याप्य संकीर्त्य निकारेण परिभावेन सह वर्तमानं सनिकारं सतिरस्कारमिति यावत् । नग-

शिष्यः-- तथेति । ( इति परिक्रामति )

चाणक्यः--वत्स ! तिष्ठ तिष्ठ, योऽयमपरः कायस्थः शकटदासो नाम राक्षसप्रयुक्तो नित्यमस्मच्छरीरमभिद्रोग्धुमिह प्रयतते, स चाप्येनं दोषं प्रख्याप्य शूलमारोप्यतां, गृहजनश्चास्य बन्धनागारे प्रवेश्यतामिति ।

शिष्यः--तथेति । ( इति निष्क्रान्तः । )

चाणक्यः--( चिन्तां नाटयित्वा स्वगतम् । ) अपि नाम दुरात्मा राक्षसो गृह्येत ?

---

रात्पुरः निर्वास्यतां निःसार्यताम् । जीवसिद्धेः पुरो बहिष्करणं स्वकृतपर्वतेश्वरवधस्य राक्षसकृतत्वेन ख्यापनार्थं तेन जीवसिद्धिना मलयकेतुनिकटे पर्वतेश्वरो राक्षसेनैव हतो न तु चाणक्येनेति ख्यापनार्थञ्च ।

तथेति । यथाऽऽज्ञापयतीत्यादिः । करिष्यामीति शेषः । परिक्रामति गच्छतीत्यर्थः ।

तिष्ठ तिष्ठेति । वीप्सायां द्विरुक्तिः । यावत्पुनराज्ञापयामि तावत्तिष्ठेत्यर्थः । योऽयमपरो द्वितीयः शकटदासो नाम एतदभिधानः कायस्थः चित्रगुप्तसजातीयः राक्षसप्रयुक्तो नन्दामात्यप्रेरितः सन् नित्यं प्रतिदिनं अस्माकं शरीरं अस्मच्छरीरं मत्कायमिव मौर्यमभिद्रोग्धुं विनाशयितुं प्रयतते उद्योगं करोति ( अस्मच्छरीरमित्यत्र 'कृपद्रुहेर्ष्यासूयार्थानाम्' इति कर्मत्वेन द्वितीया ) स चापि शकटदासोऽपि एनं दोषमपराधं प्रख्याप्य प्रकटय्य शूलं तदाख्यं लौहनिर्मितशस्त्रविशेषमारोप्यतामारूढतां स्थाप्यतामिति यावत् । अस्य च शकटदासस्य च गृहजनः कलत्रादिः बन्धनागारे कारागृहे प्रवेश्यतां निक्षिप्यताम् । बन्धनागारे शकटदासगृहजनप्रवेशनफलमुत्तरत्र चतुर्थेऽङ्के 'तत्र च पुत्रदारैः सह नगरात्' इति राक्षसागमनवचनेन मलयकेतुमनसि स्मृतं स्यात्पुत्रदारस्येति राक्षसस्य च चित्तं विकलतापादनमिति ध्येयम् ।

तथेति । यथाज्ञापयति तथा करोमीत्यर्थः । निष्क्रान्तः रङ्गस्थानाद्बहिर्गत इत्यर्थः ।

चिन्तां नाटयित्वा चिन्तां स्मरणं नाटयित्वा कृत्वा आत्मगतं मनसि इदं ब्रवीति शेषः । दुष्टः आत्मा यस्यासौ दुरात्मा राक्षसः अपि गृह्येत बद्धः स्यादिति ( अत्र सम्भावनायां लिङ् ) ।

सिद्धार्थकः— अज्ज ! गहीदो । ( १ ) पताका ३ स्थान

चाणक्यः—(सहर्षमात्मगतम् ) हन्त गृहीतो राक्षसः (प्रकाशम् ) भद्र ! कोऽयं गृहीतः ?

सिद्धार्थकः—गहीदो मए अज्जस्स सन्देसो, ता गमिस्सं अहं कज्ज-सिद्धीए । ( २ )

चाणक्यः—( साङ्गुलिमुद्रं लेखमर्पयित्वा ) भद्र ! सिद्धार्थक ! गम्यताम् , अस्तु ते कार्य्यसिद्धिः ।

सिद्धार्थकः— जं अज्जो आणवेदि त्ति । ( ३ ) ( प्रणम्य निष्क्रान्तः । )

---

( १ ) आर्य्य ! गृहीतः ।

( २ ) गृहीतो मया आर्य्यस्य सन्देशः, तद्गमिष्याम्यहं कार्य्यसिद्ध्यै ।

( ३ ) यदार्य्य आज्ञापयतीति ।

---

आर्येति । आर्य ! मान्य, गृहीतः स्वीकृतो मयेति शेषः ।

अर्थोपक्षेपकं यत्तु लीनं सविनयं भवेत् । श्लिष्टप्रत्युत्तरोपेतं तृतीयमिदमुच्यते ॥

इति दर्पणलक्षणात्तृतीयं पताकास्थानम् ।

सहर्षमिति । हर्षेणाऽऽनन्देन सह वर्तमानं सहर्षं आत्मगतं स्वगतमित्यर्थः । ( क्रियाविशेषणद्वयम् ) । हन्त ( हर्षसूचकमव्ययमिदम् ) दुर्ग्राह्यो राक्षसो वश्यो भवेन्न वेति विचारयन् चाणक्यो गृहीत इति सिद्धार्थकोक्तमिश्रितवाक्याकर्णनादति-शयानन्दयुक्तः सन् प्रकाशं सुस्पष्टं कथयतीति शेषः । भद्र ! साधो, कोऽयं गृहीतः को वशीकृत इत्यर्थः ।

गृहीत इति । आर्यस्य मान्यस्य भवतः सन्देशो वाचिकं ( सन्देशवाग्वा-चिकं स्यादित्यमरः ) गृहीतः स्वीकृतः । तत्तस्मात्कार्यस्याऽभीष्टस्य सिद्ध्यै नि-ष्पत्त्यै गमिष्यामि यास्यामि ।

चाणक्य इति । अङ्गुलिमुद्रया सह वर्तमानं साङ्गुलिमुद्रं लेखं पत्रमर्पयित्वा समर्प्य । भद्र ! साधो ! सिद्धार्थक ! तन्नामक गूढचर ! गम्यतां ते तव कार्यसिद्धिर-स्तु अभीष्टलाभो भवतु । ( उत्तरोत्तरवाक्यैः कार्यसिद्धिबीजप्रकाशनादिदं प्रसम-नम् ) । मलयकेतुराक्षसेत्युभयविरोधाधानार्थं लेखरूपोपायविधानम् ।

जं अज्ज इति । आर्यो भवान् यदाज्ञापयति निदेशं करोति तथा करोमीत्य-

शिष्यः । ( प्रविश्य । ) उपाध्याय ! कालपाशिको दण्डपाशिकश्च उपाध्यायं विज्ञापयतः, इदमनुष्ठीयते देवस्य चन्द्रगुप्तस्य शासनमिति ।

चाणक्यः—शोभनम् । वत्स ! मणिकारश्रेष्ठिनं चन्दनदासमिदानीं द्रष्टुमिच्छामि ।

शिष्यः—यदाज्ञापयत्युपाध्यायः । ( इति निष्क्रम्य चन्दनदासेन सह पुनः प्रविश्य । ) इत इतः श्रेष्ठिन् !

चन्दनदासः—( स्वगतम् । )

चाणक्कम्मि अअरुणे सहसा सद्दाविदस्स लोअस्स ।
वड्ढइ णिद्दोसस्स वि सङ्का किं जाददोसस्स ॥ २१ ॥ (१)

---

( १ ) चाणक्येऽस्मिन्नकरुणे सहसा शब्दायितस्य लोकस्य ।
वर्द्धते निर्दोषस्याऽपि शङ्का किं जातदोषस्य ?

---

र्थः । निष्क्रान्तः रङ्गस्थानाद्बहिर्गतः ।

प्रविश्येति । रङ्गशालामित्यादिः । उपाध्याय ! आचार्य, कालपाशिको दण्डपाशिकश्चेमौ दतौ उपाध्यायमाचार्यं भवन्तमिति शेषः विज्ञापयतः प्रार्थयतः । देवस्य राज्ञश्चन्द्रगुप्तस्य मौर्यस्य शासनमाज्ञा अनुष्ठीयते क्रियते ।

शोभनमिति । चन्द्रगुप्तशासनप्रतिपालनं युक्तमित्यर्थः । वत्स शार्ङ्गरव ! मणिकारश्रेष्ठिनं वैश्यजातीयं चन्दनदासं राक्षससुहृदमिदानीं सम्प्रति द्रष्टुमवलोकितुमिच्छामि वाञ्छामि । अतः परं राक्षसस्य चन्द्रगुप्तमन्त्रित्वास्वीकारिणस्तदर्थमस्तमांक कल्पियमाणोपायबीजमुपक्षेप्तव्यमित्याह—चन्दनदासमित्यादि ।

यदिति । उपाध्यायो गुरुर्भवानिति शेषः । यदाज्ञापयति निर्दिशं करोतीत्यभिधाय शिष्यो निष्क्रम्य रङ्गशालातो बहिर्निर्गत्य पुनर्भूयः चन्दनदासेन राक्षससुहृदा सह सार्धं प्रविश्य रङ्गशालामित्यादिः ।

चाणक्येऽस्मिन्निति । अविद्यमाना करुणा दया यस्मात्तस्मिन्नकरुणे निर्दये इति यावत् । अस्मिन् चाणक्ये कौटिल्ये ( चाणक्येन अकरुणेनेति पाठो युक्तः ) सहसा अकस्मात् शब्दायितस्य ( शब्दं करोति इत्यर्थे 'शब्दवैरकलहे'ति क्यङि ततो हेतुमण्णिजन्तात्कर्मणि क्ते इति तस्य 'निष्ठायां सेटी'ति णेर्लोपे षष्ठ्ये-

ता भणिदा मए धणसेणप्पमुहा तिण्णि वाणिजिआ । जधा कदावि चाणक्कहदओ गेहं मे विचिणादि, ता अवहिदा णिव्वहध भट्टिणो अमच्चरक्खसस्स घरअणं, मह दाव जं होदि तं होदु त्ति ( १ )

शिष्यः—भोः श्रेष्ठिन् ! इत इतः ।

चन्दनदासः—अअं आगदोह्मि । ( २ ) ( उभौ परिक्रामतः ) ।

शिष्यः—उपाध्याय ! अयं श्रेष्ठी चन्दनदासः ।

चन्दनदासः—( उपसृत्य । ) जेदु जेदु अज्जो ( ३ )

---

( १ ) तद्भणिता मया धनसेनप्रमुखास्त्रयो वाणिजिकाः, यथा कदापि चाणक्यहतको गेहं मे विचिनोति तदवहिता निर्वहत भर्त्तुः अमात्यराक्षसस्य गृहजनं, मम तावत् यद्भवति तद्भवतु इति ।

( २ ) अयमागतोऽस्मि ।

( ३ ) जयति जयत्वार्य्यः ।

---

कवचने प्रयोगः ) आहूतस्य लोकस्य जनस्य निर्दोषस्याऽपराधरहितस्याऽपि शङ्का भयं वर्द्धते जायते किं पुनः का कथा जातदोषस्य राक्षसकलत्ररक्षणेन सागसो ममेति शेषः । कुटिलातिचतुरचाणक्यान्तिकमुपेयुषो निरागसोऽपि भयोत्पत्तौ साग-सस्तु सुतरां तदित्यर्थापत्तिरलंकारः । आर्या छन्दः ॥ २१ ॥

तत्तस्मात्कारणात् निजस्य स्वस्य निर्देशः शासनम् तस्मिन् संस्थिता विद्यमा-ना निजनिर्देशसंस्थितास्त्रयो वाणिजिका वाणिज्यव्यापारिण इत्यर्थः । धनसेनः प्रमुख आदिर्येषान्ते धनसेनप्रमुखा धनसेनप्रभृतयो मया भणिताः कथिताः, कदापि कस्मि-श्चिदपि काले चाणक्यो हतकश्चाणक्यहतकः, ('कुत्सितानि कुत्सनैरि'ति समासः) मे मम गेहं भवनं विचिनोति मार्गयति परीक्षते इति यावत् । तस्मात्कारणाद्भर्त्तुः स्वामिनोऽमात्यराक्षसस्य गृहजनं कलत्रादिकम् अवहिताः सावधानाः सन्तः यूयमिति शेषः । निर्वहत निष्कासयत मदन्तःपुरादन्यस्थानं नयतेति यावत् । मम यद्भवति तद्भवतु ।

अयमिति । अयमहमागतः प्राप्तोऽस्मि भवामि । उभौ परिक्रामतः शिष्य-चन्दनदासावागच्छतः ।

उपसृत्येति । समीपमागत्येत्यर्थः । आर्यो मान्यो भवान् जयति सर्वोत्कर्षे-ण वर्त्तताम् ।

चाणक्यः—( नाट्येनावलोक्य । ) भोः श्रेष्ठिन् । स्वागतम् ? इदमासनमास्यताम् ।

चन्दनदासः—( प्रणम्य ) किं ण आणादि अज्जो, जहा अणुचिदो उवआरो परिहवादोवि महन्तं दुःखमुप्पादेदि, ता इह ज्जेव्व अहं उचिदाए भूमीए उवविसामि ( १ )

चाणक्यः—भोः श्रेष्ठिन् ! मा मैवम् , उचितमेवैतत् अस्मद्विधैः सह भवतः। तदुपविश्यतामासन एव ।

चन्दनदासः—( स्वगतम् । ) उपलक्खिदं अणेण किंपि । (प्रकाशम् ।) जं अज्जो आणवेदि त्ति । ( २ ) ( उपविष्टः ) ।

---

( १ ) किं न जानाति आर्य्यः, यथाऽनुचित उपचारः (अत्र "सहिदस्स" इत्यधिकपाठे—"सहृदस्य" इति मं०) परिभवादपि महद्दुःखमुत्पादयति, तद् इहैव अहमुचितायां भूमावुपविशामि ।

( २ ) उपलक्षितमनेन किमपि । यदार्य्य आज्ञापयति इति ।

---

नाट्येनेति । नटोचितव्यापारविशेषेण, अवलोक्य दृष्ट्वा, भोः श्रेष्ठिन् चन्दनदास ! स्वागतं सुष्ठु आगमनं ते भवतु इदं साक्षाद्दृश्यमानम् आस्यतेऽस्मिन्नित्यासनम् । आस्यतामुपविश्यताम् । ( एतदादि चन्दनदासाभिमानार्थं परिहासवचनं नर्म ) ।

प्रणम्येति । प्रणामं कृत्वेत्यर्थः । आर्यो मान्यो भवानिति शेषः, किं न जानाति न ज्ञायते यदनुचित उपचारः, अयुक्ताभ्यर्थनादिरूपसत्कारः परिभवादपि तिरस्कारादपि महद्दुःखं बहुतरक्लेशमुत्पादयति जनयति तत्तस्माद्धेतोः अहम् इहैवात्रैवोचितायां योग्यायां भूमौ पृथिव्यामुपविशामि ।

भोः श्रेष्ठिन्निति । भो चन्दनदास, एवमुचितायां भूमावित्येव वचनं मा मा ( वीप्सायां द्विरुक्तिः ) वदेति शेषः । अस्मद्विधैर्मादृशैः सह सार्धं भवतस्तव, एतदुपचारकरणमुचितमेव युक्तमेव ( सम्भावितमेवैतदिति पाठे एतदुपचारकरणं सम्भावितमेवेत्यर्थः ) एतदुपचारकरणं सम्भावितमेवेति बहिरुपचारः परिभवकारणन्तु निगूढ आशयः ।

स्वगतमिति । अनतिस्फुटं ( क्रियाविशेषणमिदम् ) ब्रवीतीति शेषः ।

चाणक्यः—भोः श्रेष्ठिन् । चन्दनदास ! अपि प्रचीयन्ते संव्यवहाराणां वृद्धिलाभा वः ?

चन्दनदासः—( स्वगतम् ) अत्यादरो संकणीओ ( प्रकाशम् ) अज्ज ! अध इं; अज्जस्स पसाएण अखण्डिदा मे वाणिज्जा । ( १ )

चाणक्यः—भोः श्रेष्ठिन् ! अपि कदाचित् चन्द्रगुप्तदोषा अतिक्रान्तपार्थिवगुणान् अधुना स्मारयन्ति प्रकृतीः ?

चन्दनदासः—( कर्णौ पिधाय ) सन्तं पावं । सारअणीसासमुग्गदेण

---

( १ ) आर्य ! अथ किम्; आर्यस्य प्रसादेन अखण्डिता मे वाणिज्याः ।

---

अनेन चाणक्येन किमपि ममापराधादिकमुपलक्षितं ज्ञातं अन्मद्गिधैरित्यादि यद् स्या तथा प्रतीतिरिति भावः ।

अपीति । प्रश्नार्थकोऽत्राऽपिः । वो युष्माकं संव्यवहाराणां क्रयविक्रयात्मकवाणिज्यानां वृद्धिलाभाः प्रचीयन्ते वर्द्धन्ते किमित्यर्थः ।

स्वगतमिति । सर्वैरप्याश्चर्यं यथा तथा वदतीति शेषः, अत्यादरोऽतिशयसत्कारः शंकनीयोऽनिष्टसूचकः । प्रकाशं सर्वैः श्राव्यम्, आर्यस्य भवतः प्रसादेन मे मम वाणिज्या वणिजां कर्माणि अखण्डिता निष्प्रत्यूहाः सन्तीति शेषः । ( वाणिज्यं तु वणिज्या स्यादित्यमरः ) ।

अपि कदाचिदिति । चन्द्रगुप्तस्य दोषाश्चन्द्रगुप्तदोषा मौर्यापराधाः अतिक्रान्ता अतीताः पार्थिवानां राज्ञां गुणास्तानतिक्रान्तपार्थिवगुणान् अतीतनन्दप्रभृतिनृपगुणानित्यर्थः । अधुना साम्प्रतं कदाचित् कस्मिंश्चित्काले प्रकृतीः प्रकृतिभिरित्यर्थः स्मारयन्त्यपि किमित्यर्थः । स्मरतेर्ज्ञानसामान्यवाचित्वेन 'गतिबुद्धी'ति कर्मत्वेन प्रकृतीरिति द्वितीयान्तमिति केचित् । वस्तुतस्तु स्मरणस्य ज्ञानविशेषवाचित्वेन ज्ञानसामान्यवाचित्वाऽभावेन कर्मत्वाऽप्राप्त्या कथंचिदङ्कुशतयोक्तः प्रयोगः ।

कर्णौ पिधायेति । श्रोत्रे कराभ्यामाच्छाद्येत्यर्थः । अपिपूर्वकाद्धातेर्ल्यपि

वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।

आपं चैव हलन्तानां यथा वाचा निशा दिशा ॥

त्रिअ पुण्णिमाचन्देण चन्दसिरिणा अधिअं णंदन्ति पइदिओ ( १ )

चाणक्यः—भोः श्रेष्ठिन्! यद्येवं, प्रीताभ्यः प्रकृतिभ्यः प्रियमिच्छन्ति राजानः।

चन्दनदासः—आणवेदु अज्जो। किं कित्तिअं अ अत्थजादं इमादो इच्छीअदित्ति। ( २ )

चाणक्यः—भोः श्रेष्ठिन्! चन्द्रगुप्तराज्यमिदं, न नन्दराज्यं, यतो नन्दस्यैवार्थरुचेरर्थसम्बन्धः प्रीतिमुत्पादयति, चन्द्रगुप्तस्य तु भवतामपरिक्लेश एव।

---

( १ ) शान्तं पापं, शारदनिशासमुद्गतेनेव पूर्णिमाचन्द्रेण चन्द्रश्रियाधिकं नन्दन्ति प्रकृतयः।

( २ ) आज्ञापयतु आर्यः किं कियद्वा अर्थजातमस्माज्जनादिष्यत इति।

---

इत्यपेरकारलोपं पिधायेति प्रयोगः। शान्तं पापमवाच्यमित्यर्थः।

शान्तं पापमनिर्देश्ये।

इत्युक्त्या नाट्ये अश्राव्यश्रवणे शान्तं पापमिति प्रयोगः। शरदि भवा शारदी सा चासौ निशा चेति शारदनिशा तत्र समुद्गतेनोदितेन पूर्णिमाचन्द्रेण पौर्णमासीन्दुना इव चन्द्रश्रिया चन्द्रगुप्तेन ( इयमनुगुणोदाहरणाख्यं प्रीतिर्नमस्तुतिरष्टममङ्गम् ) अधिकमतिशयं प्रकृतयः प्रजाः नन्दन्ति मोदन्ते।

यद्येवमिति। चन्द्रगुप्तेऽधिकानुरागस्तत्त्वे इत्यर्थः। प्रीताभ्यः प्रसन्नाभ्यः प्रकृतिभ्यः प्रजाभ्यः राजानो नृपतयः प्रियमिष्टमिच्छन्ति कामयन्ते।

आज्ञापयत्विति। आर्यो मान्यो भवानिति शेषः। आज्ञापयतु निदेशं करोतु कियत् किंपरिमाणमर्थजातं धनादिकम्, मत्तः किमर्थ्यत इति भावः। ( इयं राजानुरागहेतुर्वाक्यरचनोपन्यासः। )।

श्रेष्ठिन्निति। भो चन्दनदास! इदं राज्यं राष्ट्रम् चन्द्रगुप्तस्य वृषलस्य न तु नन्दस्य तदाख्यनृपतेः, अर्थे धने रुचिरभिप्रीतिर्यस्य तस्यार्थरुचेः धनाभिलाषिणो नन्दस्य तदाख्यनृपतेरेव अर्थेन सम्बन्धः सम्पर्कः प्रीतिं हर्षमुत्पादयति जनयति चन्द्रगुप्तस्य मौर्यस्य तु भवतां युष्माकमपरिक्लेशो दुःखाऽभाव एव प्रीतिमुत्पादयतीत्यर्थः। धनाकाङ्क्षिणो धनागमेन सुखं तादृशम्तु नन्द एवेति तस्यैव धनग्रहण

चन्दनदासः--( सहर्षम् ) अज्ज ! अणुग्गहीदोह्मि ( १ )

चाणक्यः--भोः श्रेष्ठिन् ! स चापरिक्लेशः कथमाविर्भवतीति न पुनः प्रष्टव्याः स्मो भवता ।

चन्दनदासः--आणवेदु अज्जो । ( २ )

चाणक्यः--संक्षेपतो राजनि अविरुद्धाभिर्वृत्तिभिर्वर्त्तितव्यम् ।

चन्दनदासः--अज्ज ! को उण अधण्णो, अज्जेण अवगच्छीअदि ( ३ )

( १ ) आर्य्य ! अनुगृहीतोऽस्मि ।

( २ ) आज्ञापयत्वार्य्यः ।

( ३ ) आर्य्य ! कः पुनरधन्य आर्य्येणावगम्यते ? [ "जोराअरुद्धोत्ति" इति पाठे—यो राजविरुद्धः । "राअ" इत्यत्र "राणि" "राण" इति च क्वचित् पाठः । "राज्ञि" राजविषये" "राज्ञा सह" वा इति सं० ]

प्रीतिजनकं मौर्यस्य तु धनाकांक्षित्वाऽभावात्प्रकृतिसुखेनैव सुखमिति भावः ।

सहर्षमिति । सानन्दं यथा तथा कथयतीति शेषः । आर्य ! मान्य, अनुगृहीतोऽस्मि भवदीयाऽनुग्रहेण कृतार्थोऽस्मीत्यर्थः । धनानभिलाषित्वकथनेनोदात्तत्वमौर्याभिजक्षतिविरहस्मरणेन चन्दनदासः सहर्षः ।

ननु अन्यधर्मस्याक्लेशस्यान्येन बोद्धुमशक्यत्वाद्व्यंजकहेतुनैव तदवगम इति दर्शयति—स चेति स चापरिक्लेशः क्लेशाऽभावः कथं केन प्रकारेणाऽऽविर्भवति जायतेऽभिव्यक्तो भवतीति यावत् इति तदभिव्यक्तिप्रकारो भवता वयं न प्रष्टव्या जिज्ञासितव्याः स्मोऽपि तु प्रष्टव्या एव । ननु इति पाठे प्रकृतिदुःखाऽभावसूचको हेतुः प्रष्टव्य एवेत्यर्थः ।

क्लेशाऽभावहेतुजिज्ञासार्थं चाणक्येन नियोजितश्चन्दनदासो जिज्ञासते—आज्ञापयत्विति । को हेतुरपरिक्लेशव्यञ्जक इति कथयतु भवानिति भावः ।

संक्षेपत इति । संक्षेपतः समासतोऽविस्तरत इति यावत् । राजनि नृपतौ अविरुद्धाभिरनुकूलाभिर्वृत्तिभिर्व्यवहारैर्वर्त्तितव्यं स्थातव्यं भवद्भिरिति शेषः । राजन्यनुकूलव्यवहार एवाऽपरिक्लेशव्यञ्जको विरुद्धाचरणं तु क्लेशव्यञ्जक इति भावः ।

आर्येति । आर्य ! मान्य, कः पुनरधन्यो भाग्यहीनः आर्येण पूज्येन भवताऽवगम्यते ज्ञायते ।

चाणक्यः—भवान् एव तावत् प्रथमः।

चन्दनदासः—( कर्णौ पिधाय। ) सन्तं पावं सन्तं पावं, कीदिसे तिणाणं अग्गिणा सह बिरोहो ( १ )

चाणक्यः—अयमीदृशो विरोधो, यत् त्वमद्यापि राजापथ्यकारिणोऽमात्यराक्षसस्य गृहजनं स्वगृहमभिनीय रक्षसि।

चन्दनदासः—अज्ज! अलीअं एदं केणावि अणज्जेण अज्जस्स णिवेदिदं। ( २ )

चाणक्यः—भोः श्रेष्ठिन्! अलमाशङ्कया, भीताः पूर्वराजपुरुषाः पौराणामनिच्छतामपि गृहेषु गृहजनं निक्षिप्य देशान्तरं व्रजन्ति ततस्तत्प्रच्छादनमेव दोषमुत्पादयति।

---

( १ ) शान्तं पापं शान्तं पापं, कीदृशस्तृणानामग्निना सह विरोधः?
( २ ) आर्य्य! अलीकमेतत्, केनापि अनार्य्येण आर्य्यस्य निवेदितम्।

---

भवानेवेति। तावच्छब्दो वाक्यालंकारे प्रथमं पूर्वं भवानेवाऽन्यस्याऽनागम्यने मयेति शेषः। ( इदं प्रतिमुखनिष्ठुरवचनं वज्रम् )।

कर्णौ पिधायेति। श्रोत्रे आच्छाद्य, शान्तं पापमवाच्यमित्यर्थः। तृणानां शष्पाणामाग्निना पावकेन सह कीदृशः क इव विरोधो विद्वेषः। नैव विरोधः सम्भवतीत्यर्थः। यथा चाग्निना सह तृणविरोधसम्भवस्तथा राज्ञा सह ममेति भावः। अत्राऽप्रस्तुतप्रशंसालंकारः। दृष्टान्तलंकार इति केचित्।

अयमिति। पथ्योऽनेपतं पथ्यमिष्टं न पथ्यमपथ्यमनिष्टम् राज्ञोऽपथ्यं करोति तच्छीलो राजाऽपथ्यकारी तस्य राजाऽपथ्यकारिणो नृपाऽनिष्टविधायिनेः अमात्यराक्षसस्य राक्षसनाम्नो मन्त्रिणो गृहजनं कलत्रादिकं स्वगृहमभिनीय स्वभवने स्थापयित्वा रक्षसि त्रायसे। प्राक् नगरान्निष्क्रमणकाले रक्षणस्यौचित्येऽपि सम्प्रति मलयकेतोराश्रयणेन मौर्यानिष्टविधानक्षणे तत्कलत्रावनस्य कौचित्यमिति भावः।

आर्येति। आर्य! मान्य, एतत् चन्दनदासो राक्षसकलत्रमवतीति वृत्तमलीकम्मिथ्या केनापि अनिर्दिष्टनाम्नाऽनार्येणाऽसाधुना पुरुषेणेति शेषः। आर्यस्य (शेषत्वेन विवक्षया षष्ठी) आर्यायेत्यर्थः। निवेदितं कथितम्।

अलमिति। आशङ्कया भयेनालं व्यर्थमवाच्यमिति यावत् ( अत्र गम्यमानादि

चन्दनदासः—एव्वं णेदं । तस्सिं समये आसी अह्मघरे अमच्चरक्खसस्स घरअणो । (१)

चाणक्यः—प्रथमम् अनृतम्, इदानीम् आसीदिति परस्परविरोधिनी वचने ।

चन्दनदासः—एत्तिअं ज्जेव अत्थि मे वाआच्छलं । (२)

चाणक्यः—भोः श्रेष्ठिन् ! चन्द्रगुप्ते राजनि न परिग्रहः छलानां, तत् समर्पय राक्षसस्य गृहजनमच्छलं भवतु भवतः ।

---

(१) एवं नु इदम् । तस्मिन् समये आसीदस्मद्गृहे अमात्यराक्षसस्य गृहजनः ।

(२) एतावदेवास्ति मे वाक्छलम् ।

---

क्रिया कारकविभक्तौ प्रयोजिकेत्यनेन तृतीया ) पूर्वाश्च ते राजानः पूर्वराजास्तेषां पुरुषाः पूर्वराजभृत्या इत्यर्थः । भीता भययुक्ताः सन्तः अनिच्छतामनभिलषतामपि पौराणां पुरवासिनां गृहेषु सद्मसु नृपजनं कलत्रादिकं निक्षिप्य स्थापयित्वा देशान्तरमन्यदेशं व्रजन्ति गच्छन्ति तत्प्रच्छादनमेव तस्य गृहजनस्य गोपनमेव दोषमनिष्टमुत्पादयति जनयति ।

एवमिति । नु भोः यदुक्तमार्येण निजगृहनिक्षिप्तराक्षसकलत्रगोपनं दोषजनकमिदमेवं युक्तमित्यर्थः । तस्मिन् समयेऽस्मद्गृहे मद्भवने अमात्यराक्षसस्य गृहजनः कलत्रादिकमासीदवर्तत ।

प्रथममिति । प्रथमं पूर्वमनृतमलीकमिदानीं सम्प्रति आसीदवर्ततेति वचने वाक्ये परस्परमन्योऽन्यं विरुद्ध इति परस्परविरोधिनी विरुद्धे । प्रागलीकमेतदित्यादिना राक्षसगृहजनाऽनिष्टोत्पत्तिभिया स्वगृहे तत्स्थित्यभावः प्रतिपादितः सम्प्रति तत्प्रच्छादनमनिष्टोत्पादकमित्यवगत्य तस्मिन् समये आसीदित्युक्त्या प्राक् तत्स्थितिप्रतिपादनादिदं त्वदीयं परस्परमसङ्गतमिति भावः ।

एतावदेवेति । एतावत् पूर्वाऽपरविरोधरूपं मे मम वाक्छलं वाचि वचने छलं व्याजो न तु यथार्थतत्तत्कृतनिह्नवात्मको मन्तुरिति भावः ।

चन्द्रगुप्त इति । चन्द्रगुप्ते मौर्ये राजनि शासके सति छलानां व्याजानां परिग्रहोऽवकाशो न वास्तीत्यर्थः, तत्तस्माद्धेतोः राक्षसस्य नष्टामात्यस्य गृहजनं

चन्दनदासः—अज्ज णं विण्णवेमि, तस्सिं समए आसी अह्मघरे अमच्चरक्खसस्स घरअणो त्ति ! ( १ )

चाणक्यः—अथ इदानीं क्व गतः ?

चन्दनदासः—ण जाणामि कहिं गदो त्ति । ( २ )

चाणक्यः—( स्मितं कृत्वा । ) कथं न ज्ञायते नाम ? भोः श्रेष्ठिन् । शिरसि फणी, दूरे तत्प्रतीकारः ; अन्यच्च नन्दमिव विष्णुगुप्तः—"

( अर्द्धोक्ते लज्जां नाटयति । )

चन्दनदासः—( स्वगतम् )—

उवरि घणं घणरडिअं दूरे दइआ किमेदहावडिअम् ।

---

( १ ) आर्य्य ! ननु विज्ञापयामि, तस्मिन् समये आसीदस्मद्गृहे अमात्यराक्षसस्य गृहजन इति ।

( २ ) न जानामि कुत्र गत इति ।

---

पोष्यवर्गं समर्पय देहि भवतस्तत्राऽस्माकापट्यं भवतु अस्तु अमात्यराक्षसकलत्रादिसमर्पणेन निष्कपटो भवत्विति भावः ।

स्मितं कृत्वेति । ईषद्धसित्वेत्यर्थः । कथं केन प्रकारेण न ज्ञायते नाऽवगम्यते । भो श्रेष्ठिन् ! चन्दनदास ! शिरसि मूर्ध्नि फणास्त्यस्यासौ फणी सर्पोऽस्तीति शेषः ( अनेन दर्शनमात्रेणैव विनाशसम्भावना व्यज्यते ) तस्य फणिनः प्रतीकारो निवृत्त्युपायस्तत्प्रतीकारोऽतिदूरेऽत्यसन्निहिते वर्तते इति शेषः । चन्द्रगुप्तप्रतिकूलेन राक्षसेन सह मैत्रीकरणात् ( तद्गृहजनरक्षणाद्वा ) असह्यपराक्रमो नृपदण्ड उपस्थितः सम्मलयकेतुरमात्यराक्षसश्चन्द्रगुप्तं विनाश्य नृपदण्डवारणं करिष्यतीति प्रतीकारोऽतिदूरे दूरवर्ती संजातप्राय एवेति भावः । अप्रस्तुतशिरसि फणीति प्रतिपादनेन प्रस्तुतसन्निहितराजदण्डरूपार्थावगमादत्राऽप्रस्तुतप्रशंसालंकारः ।

अन्यच्चेति— अपरविधं भयं दर्शयति यथा विष्णुगुप्तश्चाणक्यो नन्दं नवनन्दान् तथैव मौर्यस्त्वामिति भावः । ( नन्देति [illegible] ) स्वकर्तृकनन्दविनाशस्योपमानत्वेन स्वेनैवाऽभिधानादयुक्तमिति चाणक्यो लज्जितः ।

ननु मदृशराक्षसगृहजनगोपनेन पापाऽधिकपापारोपणेन तु राजदण्डस्यावश्यम्भावादित्थं विपत्प्राप्तौ किं विधेयमिति चिन्तां सूचयन्नाह—उपरीति । उपरि ऊर्ध्वं

हिमवदि दिव्योसहिओ सीस्से सप्पो समाविट्ठो ॥ २२ ॥(१)

चाणक्यः--चन्द्रगुप्तममात्यराक्षसः समुच्छेत्स्यतीति मैवं मंस्थाः !

(१) उपरि घन घनरटितं दूरं दयिता किमेतदापतितम् ।
हिमवति दिव्यौषधयः शीर्षे सर्पः समाविष्टः ॥

विहायसीति यावत् । घनं निविडं सान्द्रमिति यावत् घनस्य मेघस्य रटितं स्तनितमतिघोरगर्जितमित्यर्थः । श्रूयत इति शेषः । एतत्किमापतितं प्राप्तम् घनगर्जनस्य कामोद्दीपकत्वेन विरहिजनासह्यत्वेन च प्रियाविरहितस्य मम तामन्तरेणास्समयक्षेपणाऽसम्भवादवसाने प्राप्तमिति तात्पर्यम् । अमुमेवाऽर्थं दृष्टान्तद्वारा प्रदर्शयति शीर्षे शिरसि फणी सर्पः समाविष्टो दंशनार्थं समुपागतः, दिव्यौषधयस्तत्प्रतीकारोपायभूतोत्तमभेषजानि हिमवति हिमालये सन्तीति शेषः । मृत्युरोगस्योपस्थितत्वात्सन्निकर्षकौषधस्याऽसान्निध्यात्प्रतीकाराऽसम्भवेनावश्यं मे मृत्युर्भविष्यतीति भावः । एतत्पद्यप्रतिपाद्याऽप्रस्तुतेन सन्निहितश्चाणक्यदण्डो दूरस्थस्तत्प्रतीकारो राक्षसादिति प्रस्तुतावगमादप्रस्तुतप्रशंसाऽलंकारः ।

अप्रस्तुतात्प्रस्तुतं चेद्गम्यते पञ्चधा ततः ।
अप्रस्तुतप्रशंसा स्यादिति

दर्पणोक्तलक्षणात् । केचित्त्वित्थमलंकारमत्र योजयन्ति, तथा हि—घनस्तनिताशङ्कण्ठावद्विरहिणः प्रियाऽसान्निध्यात् दुःखापनोदनाभावात्मकाऽप्रस्तुतेन चन्दनदासकर्णकराक्षसगृहजनप्रदानतश्चाणक्यप्रतीत्यभावात्मकप्रस्तुतावगमादप्रस्तुतप्रशंसालंकारः। स च शिरःस्थफणिनो हिमवतो भेषजानयनमिव सन्निहितराजदण्डस्य मम राक्षसप्रतीकारोऽसम्भव इति बिम्बप्रतिबिम्बभावावगमात् दृष्टान्तालंकारेण संकीर्णः । एतल्लक्षणं यथा साहित्यदर्पणे—

दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम् । इति ।

चन्द्रगुप्तमिति । भोः श्रेष्ठिन् ! अमात्यराक्षसो नन्दप्रधानसचिवः चन्द्रगुप्तं मार्यं समुच्छेत्स्यति समुन्मूलयिष्यतीति मैवं मंस्थाः मैवं जानीहि ।

(२२) यथा कामोद्दीपकघनगर्जनस्याऽतिसान्निध्येन तत्प्रतीकारभूतदयिताया असान्निध्यात् विरहिणो मरणं यथा औषधेरसान्निध्याच्छिरसि दष्टस्य मरणं तथाऽमात्यराक्षसस्याऽसामीप्यादुपस्थितचाणक्यदुःशासनात्मतस्य मे मरणमवश्यं भावीति भावः ।

पश्य,—

विक्रान्तैर्नयशालिभिः सुसचिवैः श्रीर्वक्रनासादिभिः
नन्दे जीवति, या तदा न गमिता स्थैर्यं चलन्ती मुहुः ।
तामेकत्वमुपागतां द्युतिमिव प्रह्लादयन्तीं जगत्
कश्चन्द्रादिव चन्द्रगुप्तनृपतेः कर्तुं व्यवस्येत् पृथक् ? ॥ २३ ॥

---

विक्रान्तैरिति । नन्दे नन्दाख्ये नृपे जीवति विद्यमाने सति (जात्यैकवचनम्) नवनन्देषु जीवत्सु सत्स्वित्यर्थः । मुहुरसकृत् चलन्ती निन्दितनृपस्याश्रयणादस्थिरा या श्रीः राज्यलक्ष्मीः विक्रान्तैः पराक्रमिभिः शक्तिमद्भिरिति यावत् ( नयेन नीत्या शालन्ते शोभन्त इति नयशालिनः सुप्यजातौ णिनिः ) तैर्नयशालिभिर्नीतिज्ञैः सुसचिवैः सुमन्त्रिभिः वक्रनासादिभिर्वक्रनासप्रभृतिभिः प्रधानपुरुषैरिति शेषः । स्थैर्ये नैश्चल्यं न गमिता न प्रापिता न स्थिरीकृतेति यावत् । एकत्वं स्थिरत्वं नैश्चल्यमित्यर्थः । उपागतां प्राप्तां जगद्विश्वं प्रह्लादयन्तीं भासयन्तीं द्युतिमिव ज्योत्स्नामिव तां श्रियं राजलक्ष्मीं चन्द्रात्सुधांशोरिव चन्द्रगुप्तनृपतेः वृषलभूपतेः ( पृथग्विनेति पञ्चमी ) पृथक् भिन्नां दूरस्थामिति यावत् । कर्तुं विधातुं को जनो व्यवस्येत् प्रवर्तेत न कोऽपि पृथक्कर्तुं शक्नुयादित्यर्थः । कुनृपाश्रितत्वादस्थिरा या यस्या राजश्रियो नन्दसमये स्थैर्यं न सम्पादितवन्तो वक्रनासादयस्तस्याश्चन्द्रगुप्ताश्रितायाः श्रियो मयि विद्यमाने को जनः पार्थक्यविधायी न कोऽपीति भावः । उपमानवाचकद्युति-चन्द्रशब्दयोरुपमेयवाचकश्री-चन्द्रगुप्तशब्दयोश्च, सामान्यधर्मस्य जगत्प्रह्लादकत्व-स्यौपम्यवाचकस्य शब्दस्य चोपादानादत्र श्रौतीपूर्णोपमालङ्कारः । लक्षणं यथा सा-हित्यदर्पणे—

सा पूर्णा यदि सामान्यधर्म औपम्यवाचि च ।
उपमेयं चोपमानं भवेद्वाच्यमियं पुनः ॥
श्रौती यथेववाः शब्दाः इत्यादि

वैदर्भी रीतिः । ओजोगुणः । वीरो रसः । शार्दूलविक्रीडितं छन्दः ॥ २३ ॥

( २१ ) अनेकनन्दसाचिव्यकार्यस्थैर्येण स्थापनाऽसम्भवात्नैकवक्रनासादिमन्त्रिद्वाराऽस्थिराया राज्यश्रिय एकेनऽमात्याराक्षसेन स्थिरीकरणं न सम्भवतीति भावः ।

अपि च, ( आस्वादितेत्यादि प्रागुक्तं पठति । )

चन्दनदासः--( स्वगतम् । ) फलेण संपादिदं सोहदि दे विकत्थिदं । ( १ ) ।

( नेपथ्ये कलकलः )

चाणक्यः--शार्ङ्गरव ! ज्ञायतां किमेतत् ।

शिष्यः--यदाज्ञापयत्युपाध्यायः । ( निष्क्रम्य, पुनः प्रविश्य । ) उपाध्याय ; एष राज्ञश्चन्द्रगुप्तस्याज्ञया राजापथ्यकारी क्षपणको जीवसिद्धिः सनिकारं नगरान्निर्वास्यते ।

( १ ) फलेन सम्पादितं शोभते ते विकत्थितम् ।

आस्वादितेति । आस्वादितद्विरदशोणितशोणशोभामित्यादि पूर्वोक्तं पद्यं वारंवारमनुवक्तं पुनः पठतीत्यर्थः । इदं स्वामिस्नेहाऽभिव्यक्तियुक्तवचनं पुष्पम् ।

फलेनेति । फलेन कार्येण सम्पादितं ते तव विकत्थितमात्मश्लाघा शोभते दीप्यते । सम्पादितमिति पाठे प्रकटितमित्यर्थः ।

नेपथ्य इति—नेपथ्ये वेषरचनालये कलकलः मौर्याज्ञया जीवसिद्धिनिष्कासनक्षणे तद्दर्शनार्थमागतानां लोकानां रव इत्यर्थः ।

शार्ङ्गरवेति । वत्स ! ज्ञायतां किमेतत् वेषनिर्माणसद्मनि किंहेतुको जनरव इति बुध्यतामित्यर्थः ।

उपाध्यायेति । गुरो ! राज्ञो देवस्य चन्द्रगुप्तस्य वृषलस्याऽऽज्ञया निदेशेन पथोऽनपेतं पथ्यं ( 'धर्मपथ्यर्थन्यायादनपेते' इति यति रूपम् ) न पथ्यमपथ्यमहितमित्यर्थः । राज्ञोऽपथ्यं राजाऽपथ्यं राजापथ्यं करोति तच्छीलो राजाऽपथ्यकारी राजद्रोहीत्यर्थः । एषः असौ क्षपणको बौद्धसंन्यासिविशेषो जीवसिद्धिस्तदाख्यः सनिकारं ( क्रियाविशेषणमिदम् ) निकारेण तिरस्कारेण सह वर्तमानं सनिकारं सतिरस्कारं यथा स्यात्तथेत्यर्थः । नगरात्पुरो निर्वास्यते निष्कास्यते । संन्यासिनामपि ब्राह्मणवद्दण्डः । उक्तञ्च—

वपनं द्रविणादानं स्थानान्निष्कासनं तथा ।
एष हि ब्रह्मबन्धूनां वधो नान्योऽस्ति दैहिकः ॥ इति ।

चाणक्यः—क्षपणकः अहह !! अथवा—अनुभवतु राजापथ्यकारित्वस्य फलम् । भोः श्रेष्ठिन् चन्दनदास ! एवमयं राजापथ्यकारिषु तीक्ष्णदण्डो राजा, तत् क्रियतां पथ्यं सुहृद्वचः, समर्प्यतां राक्षसगृहजनः, चिरमनुभूयन्तां विचित्रा राजप्रसादाः ।

चन्दनदासः—णत्थि मे गेहे अमच्चरक्खसघरअणो । ( १ )

( नेपथ्ये पुनः कलकलः । )

चाणक्यः—शार्ङ्गरव ! ज्ञायतां पुनः किमेतत् ।

शिष्यः—यदाज्ञापयत्युपाध्यायः । ( इति निष्क्रम्य, पुनः प्रविश्य ) उपाध्याय ! असौ राजाज्ञया राजापथ्यकारी कायस्थः शकटदासः शूलमारोपयितुं नीयते ।

चाणक्यः—स्वकर्मफलभाक् भवतु । भोः श्रेष्ठिन् ! एवमयं राजा

( १ ) नास्ति मे गेहे अमात्यराक्षसगृहजनः ।

क्षपणक इति । मुण्डी निष्परिग्रहस्तपस्वी आपमानयोग्य इति कारुण्याविष्कारार्थमहहशब्दः । अथवेति—राजद्रोहिणो युक्त एवैष दण्ड इति समाधिः । राजापथ्यकारित्वस्य राजद्रोहविधायित्वस्य फलमनुभवतु भुनक्तु । अयमेव राजा नृपतिश्चन्द्रगुप्तो राजाऽपथ्यकारिषु राजविद्रोहिषु तीक्ष्णस्तीव्रो दण्डः शासनं यस्यासौ तीक्ष्णदण्डः उग्रशासन इत्यर्थः वर्तत इति शेषः । तत्तस्माद्धेतोः पथ्यं हितं सुहृदो मित्रस्य वचो वचनं सुहृद्वचः सहृदयकथनमित्यर्थः । क्रियतां विधीयतां, राक्षसगृहजनो राक्षसकलत्रादिकं समर्प्यताम् मदायत्तीक्रियताम्, चिरं बहुकालं विचित्रा बहुविधा राजप्रसादाः नृपानुरागाः, वा नृपाऽनुग्रहा अनुभूयन्ताम् प्राप्यन्ताम् ।

स्यात्प्रसादोऽनुरागेऽपीत्यमरः ।

प्रसादोऽनुग्रहे काव्यगुणस्वास्थ्यविपत्तिषु ॥ इति मेदिनी ।

उपाध्यायेति । असौ स राजाऽपथ्यकारी राजद्रोही कायस्थः चित्रगुप्तप्रजातीयः शकटदासस्तन्नाम्यो राक्षसमुहृत् शूलं लोहनिर्मितमायुधमारोपयितुं नीयते तन्निकटं प्राप्यते ।

स्वकर्मफलभागिति । स्वस्यात्मनः कर्म कार्यं तस्य फलं स्वकर्मफलं तद्भजतीति स्वकर्मफलभाग् भवतु स इति शेषः । एवमनेन प्रकारेण राजापथ्यकारिषु

पथ्यकारिषु तीक्ष्णदण्डो राजा, न मर्षयिष्यति राक्षसकलत्रप्रच्छादनं भवतः, तद् रक्ष परकलत्रेणात्मनः कलत्रं जीवितञ्च ।

चन्दनदासः—अज्ज ! किं मे भअं दंसेसि ? सन्तं वि गेहे अमच्चरक्खसस्स घरअणं ण समप्पेमि, किं उण असन्तं । ( १ )

चाणक्यः—चन्दनदास ! एष ते निश्चयः ?

चन्दनदासः—बाढं, एसो मे त्थिरो णिच्छओ । ( २ )

चाणक्यः—( स्वगतम् । ) साधु चन्दनदास ! साधु ।—

---

( १ ) आर्य ! किं मे भयं दर्शयसि ? सन्तमपि गेहे अमात्यराक्षसस्य गृहजनं न समर्पयामि, किं पुनरसन्तम् ।

( २ ) बाढं, एष मे स्थिरो निश्चयः ।

---

राजद्रोहिषु तीक्ष्णदण्डः उग्रशासनोऽयमेव राजा नृपतिश्चन्द्रगुप्त इति शेषः । भवतस्तव राक्षसकलत्रप्रच्छादनं राक्षसगृहजनगोपनं न मर्षयिष्यति सहिष्यते, तत्तस्मात्कारणात् परकलत्रेण राक्षसगृहजनसमर्पणेनेत्यर्थः । आत्मनः स्वस्य कलत्रं गृहजनं जीवितं च रक्ष पाहि, अन्यथा तदनर्पणे भवत्कलत्रजीवितयोर्विनाशः स्यादिति भावः ।

आर्येति । आर्य ! मान्य, कौटिल्य ! मे मामित्यर्थः । दृशेः सर्वत्रेति भाष्यकृदुक्त्या पत्यं दर्शयन्नित्यत्रेव चतुर्थी) भयं त्रासं दर्शयसि अवलोकयसि गृहे सद्मनि ममेति शेषः । अमात्यराक्षसस्य नन्दसचिवस्य गृहजनं कलत्रादिकं सन्तमपि विद्यमानमपि न समर्पयामि न प्रदास्यामीत्यर्थः ( भविष्यत्सामीप्ये लट् ) किं पुनरसन्तमविद्यमानम् ।

बाढमिति । ( स्वीकारार्थकमव्ययमिदम् ) एवमित्यर्थः । एषोऽसौ मे मम निश्चयः प्रतिज्ञा स्थिरो दृढ इत्यर्थः ।

ननु बन्धुहेतोः सकलसम्पत्तिं परित्यज्य सुखेन मरणमङ्गीकुर्वन् चन्दनदासो दृढप्रतिज्ञ इत्यवगत्य चेतसा तं प्रशंसयति -- सुलभेष्विति । परस्य परकीयार्थस्य संवेदने समर्पणे कृते सति, अर्थानां लाभा येभ्यस्तेऽर्थलाभा अर्थप्राप्त्युपायास्तेष्वर्थकामेषु सुलभेषु सुकरेषु सत्सु स्वार्थमनादृत्य इदमन्यगृहजनसंगोपनात्मकं दुष्करं कठिनं कर्म कार्यं इदानीमस्मिन् कलौ शिविना तन्नामकोशीनरदेशाधिपेन विना त्वदन्यः को

सुलभेष्वर्थलाभेषु परसंवेदने जनः ।
क इदं दुष्करं कुर्य्यादिदानीं शिबिना विना ॥ २४ ॥

( प्रकाशम् । ) चन्दनदास ! एष ते निश्चयः ?

चन्दनदासः—बाढं । ( १ )

चाणक्यः—( सक्रोधम् । ) दुरात्मन् दुष्टवणिक् ! अनुभूयतां तर्हि राजकोपः ।

चन्दनदासः—( बाहू प्रसार्य । ) सज्जोह्मि, अणुचिट्ठदु अज्जो अत्तणा अहिआरस्स अणुरूअं । ( २ )

---

( १ ) बाढम् ।

( २ ) सज्जोऽस्मि, अनुतिष्ठत्वार्यः आत्मनोऽधिकारस्यानुरूपम् ( "स-रिसं" इति पाठे—सदृशम् ) ।

---

जनो लोकः कुर्यात् कर्तुं समर्थो न कोऽपीत्यर्थः । शिबिस्तु कृतयुगे कृतवान् त्वन्तु कलाविति ततोऽपि त्वं प्रशस्तकीर्त्तिशालीति भावः । शिबिः कृतयुगे कपोतरूपधा-रिशरणागतेन्द्ररक्षणार्थं श्येनरूपधारिधर्म्मसन्तुष्टये स्वमांसं दत्तवानिति पौराणिकी कथा स्मर्तव्या ।

शिबेः कृतयुगे दुष्करकार्यकारित्वं तव तु कलाविन्युपमानभूतशिबेरुपमेयस्योपमे-यस्य चन्दनदासस्याधिक्यवर्णनादत्र व्यतिरेकालङ्कारः । लक्षणं दर्पणे यथा—

आधिक्यमुपमेयस्योपमानान्न्यूनताऽथवा ।
" व्यतिरेकः "

इति । प्रशस्तकीर्त्तिशालिशिबिनृपतिचरितस्य प्रस्तुताङ्गत्वादुदात्तालङ्कारश्च ।

लोकातिशयसम्पत्तिवर्णनोदात्तमुच्यते ।
यद्वाऽपि प्रस्तुतस्याङ्गं महतां चरितं भवेत् ॥

इति दर्पणलक्षणात् । प्रसादगुणः । वैदर्भी रीतिः । परसंवेदनशब्दस्य परकीया-र्थसमर्पणरूपार्थः कष्टगम्य इति कष्टत्वं दोषः । अनुष्टुब्वृत्तम् ॥ २४ ॥

सक्रोधमिति । सकोपं यथा स्यात्तथा कथयतीत्यर्थः । ( क्रियाविशेषणमि-दम् ) । दुष्ट आत्मा यस्यासौ दुरात्मा तत्सम्बोधने दुरात्मन् क्रूरहृदय, दुर्वणिक् ! तर्हि तदा राजकोपो नृपाऽमर्षोऽनुभूयताम् उपभुज्यतां साक्षात्क्रियतामिति यावत् ।

सज्जोऽस्मीति । अहं दण्डग्रहणार्थमुद्यतोऽस्मीत्यर्थः । आर्यो भवान् भवा

चाणक्यः—( सक्रोधम् । ) शार्ङ्गरव ! उच्यतामस्मद्वचनात् कालपाशिको दण्डपाशिकश्च;—"शीघ्रमयं दुष्टवणिक् निगृह्यताम्" अथवा—तिष्ठतु, उच्यतां दुर्गपालो विजयपालश्च, गृहीतगृहसारमेनं सपुत्रकलत्रं संयम्य रक्ष तावत्, यावत् मया वृषलाय कथ्यते, स एवास्य प्राणहरं दण्डमाज्ञापयिष्यति ।

शिष्यः—यदाज्ञापयत्युपाध्यायः । श्रेष्ठिन् ! इत इतः ।

चन्दनदासः—( उत्थाय । ) अज्ज ! अअमाअच्छामि । ( स्वगतम् । ) दिट्ठिआ मित्तकज्जेण मे विणासो जणिदो, ण उण पुरिसदोसेण । ( १ ) (परिक्रम्य शिष्येण सह निष्क्रान्तः । )

---

( १ ) आर्य ! अयमागच्छामि । दिष्ट्या मित्रकार्येण मे विनाशो जनितः, न पुनः पुरुषदोषेण ।

---

निति शेषः । आत्मनः स्वस्याधिकारानुरूपं स्वत्वसदृशमनुतिष्ठतु विदधातु ।

शार्ङ्गरवेति । वत्स ! अस्मद्वचनात्तत्कथनाऽनुसारेण कालपाशिको दण्डपाशिकश्चेति दूतद्वयमुच्यतामभिधीयताम् । अयमेष दुष्टवणिक् दुष्टवैश्यः निगृह्यतां दण्ड्यताम् । अथवा दुर्गपालको विजयपालकश्चेत्युभौ दूतौ वक्तव्यौ गृहीत आयत्तीकृतो गृहस्य सारो मूलधनादिरूपः स्थिरांशो यस्य स गृहीतगृहसारस्तं गृहीतगृहसारं ।

सारो बले स्थिरांशे चेति मेदिनी ।

पुत्राश्च कलत्रं च ( एषामितरेतरद्वन्द्वः ) पुत्रकलत्राणि तैः सह वर्तत इति सपुत्रकलत्रस्तं सपुत्रकलत्रमेनं चन्दनदासं संयम्य बद्ध्वा तावत् तावत्कालं रक्ष पालय स्थापयेति यावत् । यावत्कालं वृषलाय मौर्याय कथ्यते निवेद्यते । वृषल एव अस्य चन्दनदासस्य प्राणान् जीवान् हरतीति प्राणहरस्तं प्राणहरं जीवनाशकं दण्डं निग्रहमाज्ञापयिष्यति विधास्यति । ( इदं छद्मना हितागमननिरोधनं निरोधः ) छद्मना व्याजेन हितागमनाय स्वेष्टसिद्धये चन्दनदासनिरोधात् । अथवा, हितं राक्षसमागमयतीति हितागमो हितागमनस्य हितराक्षसागमनहेतुभूतस्य चन्दनदासस्य निरोधनात् ।

आर्येति । स्वगतमनतिस्पष्टं यथा तथा वक्तीति शेषः । (क्रियाविशेषणमिदम्)

चाणक्यः—( सहर्षम् । ) हन्त, लब्ध इदानीं राक्षसः कुतः ?

त्यजत्यप्रियवत् प्राणान् यथा तस्यायमापदि ।
तथैवास्यापदि प्राणा नूनं तस्यापि न प्रियाः ॥ २५ ॥

( नेपथ्ये कलकलः । )

चाणक्यः—शार्ङ्गरव !

शिष्यः—( प्रविश्य । ) उपाध्याय ! आज्ञापयतु !

चाणक्यः—ज्ञायतां किमेतत् ।

शिष्यः—( निष्क्रम्य विभाव्य पुनः प्रविश्य सम्भ्रान्तः ) उपाध्याय ! एष खलु शकटदासं वध्यमानं वध्यभूमेरादाय समपक्रान्तः सिद्धार्थकः ।

---

दिष्ट्या भाग्येन ( इदमव्ययं तृतीयाविभक्त्यन्तप्रतिरूपकम् ) मित्रकार्येण सुहृत्प्रयोजनेन ( हेतुतृतीयान्तमिदम् ) मे मम विनाशोऽपायः पुरुषस्य दोषश्चरित्रदूषणहेतुभूतचौर्यादिकाऽपकर्मेत्यर्थः । पुरुषदोषस्तेन पुरुषदोषेण स्वकीयाऽऽगसेत्यर्थः । न विनाशः मृत्युरित्यर्थः । अत्र परिसंख्याऽलंकारः ।

त्यजतीति । अयमेष चन्दनदासः श्रेष्ठी राक्षससुहृत् तस्य राक्षसस्य आपदि कलत्रादेः शत्रुहस्तपतनात्मकविपत्तौ प्राणानसून् अप्रियवत् अनिष्टवत् यथा त्यजति जहाति तथैव तेन प्रकारेणैव अस्य चन्दनदासस्याऽऽपदि राजदण्डेन प्राणसंहरणात्मकापत्तौ तस्यापि राक्षसस्यापि प्राणा असवः नूनं निश्चितं प्रिया न भविष्यन्तीत्यर्थः । यथा चन्दनदासो राक्षसकलत्ररक्षणार्थं प्राणं त्यजति तथा चन्दनदाससमुद्धरणाय राक्षसोऽप्यात्मानमर्पयिष्यतीति भावः ।

मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः ।

इति साहित्यदर्पणधृतलक्षणादत्रोत्प्रेक्षाऽलंकारः । अयं स इव सोयमिवेति परस्परमुपमानोपमेययोरुपमानोपमेयभावादुपमालंकार इति कश्चित् । वैदर्भी रीतिः । प्रसादगुणः । अनुष्टुप् छन्दः ॥ २५ ॥

विभाव्येति । विलोक्येत्यर्थः । एष सिद्धार्थकः वध्यभूमेः ( अपादानपञ्चम्य-

---

( २५ ) एतेनाऽयमर्थो वक्ष्यमाणो व्यज्यते—

मिथो विपत्प्रतीकारो मित्रस्तत्र च संस्थितिः ।
सुहृदां जायते नूनमापत्काले परीक्षणम् ॥ इति ।

चाणक्यः—( स्वगतम् । ) साधु सिद्धार्थक ! साधु, कृतः कार्य्यारम्भः ( प्रकाशम् । ) प्रसह्य किमपक्रान्तः ? ( सक्रोधम् ) वत्स ! उच्यतां भागुरायणो यथा त्वरितमेनं सम्भावयेति ।

शिष्यः—( पुनस्तथा कृत्वा प्रविश्य सविषादम् । ) उपाध्याय ! हा धिक् कष्टम्, अपक्रान्तो भागुरायणोऽपि ।

चाणक्यः—( स्वगतम् । ) व्रजतु कार्य्यसिद्धये । ( प्रकाशं सक्रोधमिव ) वत्स ! कृतं विषादेन, उच्यन्तामस्मद्वचनाद् भद्रभट-पुरुषदत्त-हिङ्गुरात-बलगुप्त-राजसेन-रोहिताक्ष-विजयवर्माणः शीघ्रमुपसृत्य गृह्यतां दुरात्मा भागुरायणः ।

---

न्तमिदम् ) प्राणदण्डस्थानादित्यर्थः । वध्यमानं संयम्यमानं शकटदासं तन्नामानं कायस्थमादाय गृहीत्वा समपक्रान्तः पलायितः ।

कृतः कार्यारम्भ इति । कार्यस्य वध्यभूमितः शकटदासमादायाऽपसरणात्मककृत्यस्य आरम्भः अभ्यादानं कृतो विहितः ।

स्यादभ्यादानमुद्घात आरम्भः ।

प्रसह्य हठादित्यर्थः, अपक्रान्तः पलायितः भागुरायणस्तन्नामकदूत उच्यताम् एनं सिद्धार्थकं सम्भावय, निगृह्य शीघ्रमानयेति बाह्यार्थः । त्वमपि तेन सार्द्धं कार्यं साधयेति गूढोऽर्थः । ( अयमपि बिन्दुः ) ।

पुनस्तथेति । पुनर्भूयस्तथा कृत्वा सम्भाव्य प्रविश्य समेत्य रङ्गस्थानमित्यादिः । सविषादं सखेदं ( क्रियाविशेषणमिदम् ) कथयतीति शेषः । उपाध्याय गुरो ! हा (खेदसूचकमव्ययमिदम्) कष्टं दुःखं धिक्, भागुरायणोऽपि अपक्रान्तः पलायितः । मलयकेतुमाश्रित्य कथयिष्यमाणकार्यसम्पादनाय भागुरायणस्याऽपक्रमणं तत्तु स्वयमेव चाणक्येनोपदिष्टमिति भावः । अयं चतुर्वर्णनिर्वर्णने वर्णसंहारः । ब्राह्मणादिचतुर्वर्णान्तःपातिनीनां प्रकृतीनां ये याता इत्यादिना वर्णनात्त्रयोदशमङ्गम् । तृतीयाङ्के वक्ष्यमाणं तेषामुदन्तमानेष्यामीति गूढाशयः ।

स्वगतमिति । अनतिस्पष्टमित्यर्थः ( क्रियाविशेषणमिदम् ) कार्यसिद्धये अभिधास्यमानस्योपदिष्टकृत्यसम्पादनायेत्यर्थः । व्रजतु गच्छतु । प्रकाशं सुस्पष्टं ( क्रियाविशेषणमेतद् ) सक्रोधमिव सकोपमिव (इदमपि क्रियाविशेषणम्) कथयतीत्यस्य शेषः । यद्वा सकोपमिवेत्येव क्रियाविशेषणं प्रकाशमिति तु अध्याहृतवचन-

शिष्यः—यदाज्ञापयत्युपाध्यायः । ( इति निष्क्रम्य पुनः प्रविश्य सविषादम् । ) उपाध्याय ! हा धिक् कष्टं, सर्वमेव तन्त्रमाकुलीभूतं, तेऽपि खलु भद्रभटप्रभृतयः प्रथममुषस्येवापक्रान्ताः ।

चाणक्यः—( स्वगतम् । ) सर्वेषामेव शिवाः पन्थानः सन्तु । ( प्रकाशम् । ) वत्स ! अलं विषादेन । पश्य,—

ये याताः किमपि प्रधार्य हृदये, पूर्वं गता एव ते
ये तिष्ठन्ति, भवन्तु तेऽपि गमने कामं प्रकामोद्यमाः ।
एका केवलमर्थसाधनविधौ सेनाशतेभ्योऽधिका
नन्दोन्मूलनदृष्टवीर्यमहिमा बुद्धिस्तु मा गान्मम ॥ २६ ॥

---

मित्यस्य विशेषणम् सकोपं यथा स्यात्तथा प्रकाशं स्पष्टं वचनं कथयति चाणक्य इति तस्य निर्गलितोऽर्थः । वत्स, पुत्र विषादेन खेदेन कृतं व्यर्थम् खेदो न कर्त्तव्य इति तदर्थः, अस्मद्वचनान्मद्वाक्याऽनुसारेण भद्रभटादयो दूता उच्यन्ताम् उपसृत्य समीपं गत्वा दुरात्मा दुष्टहृदयो भागुरायणस्तन्नामकश्चरो निगृह्यताम् ।

यदाज्ञापयतीति । उपाध्यायो गुरुर्भवानिति शेषः । यदाज्ञापयति निदेशं करोति । इति इत्यभिधाय निष्क्रम्य निर्गत्य रङ्गस्थानादिति शेषः । पुनर्भूयः प्रविश्याभ्यन्तरमेत्य सविषादं सखेदं कथयतीत्यस्याध्याहारः । उपाध्याय! गुरो, हाखेदे कष्टं क्लेशं धिक् दुःखं निन्दनीयमित्यर्थः । सर्वमेव सकलमेव तन्त्रं प्रकृतिमण्डलं प्रजासमूहमिति यावत् आकुलीभूतं व्याकुलं पीडितमिति यावत् वर्तत इति शेषः । तेऽपि भद्रभटादयः उषस्येव प्रभात एवाऽपक्रान्ताः पलायिताः । यत्तु-शिष्योक्तावप क्रान्ता,इत्यस्यास्मदिष्टसम्पादनायैव गता इत्यर्थस्तन्न । शिष्यस्य तज्ज्ञानाऽभावात् । अत एवालं विषादेनेति चाणक्योक्तिः सङ्गच्छते सङ्गच्छते च पूर्वाऽपरग्रन्थसन्दर्भः ।

स्वगतमिति । अप्रकाशमित्यर्थः । सर्वेषामखिलानां भद्रभटादीनामित्यर्थः । पन्थानो मार्गाः शिवं कल्याणमस्त्येषामिति शिवाः ( अर्शाद्यजन्तः ) कल्याणयुक्ता इत्यर्थः । सन्तु भवन्तु । प्रकाशं सुस्पष्टमित्यर्थः । वत्स! पुत्र, विषादेन खेदेन अलं व्यर्थम् खेदो न विधेय इत्यर्थः ।

ये याता इति । गद्यस्थवत्सेति सम्बोधनपदमादायान्वयः कार्यस्तं प्रत्येव

---

( २६ ) अस्मादृष्टकार्यसाधनाय गतानां तेषां भद्रभटादिगुप्तचराणामितः पलायनं युक्तमेवेति गूढोऽर्थः ।

( उत्थाय प्रत्यक्षवदाकाशे लक्ष्यं बद्ध्वा । ) एष खलु दुरात्मनो भद्रभटप्रभृतीनाहरामि । ( आत्मगतम् । ) दुरात्मन् राक्षस ! क्वेदानीं यास्यसि ? एषोऽहमचिरात् भवन्तं,—

स्वच्छन्दमेकचरमुज्ज्वलदानशक्ति—
मुत्सेकिना बलमदेन विगाहमानम् ।

---

चाणक्योक्तेरिति ध्येयम् । हे वत्स! ये भागुरायणप्रभृतयः किमपि मदिष्टमनिष्टं वा हृदये मनसि निधाय कृत्वा ( अस्मदनिष्टं मनसि कृत्वेति बहिः, अस्मदिष्टसाधनमुद्दिश्येति गूढः ) याता मलयकेतुनिकटं गतास्ते पूर्वं प्रागेव गता अलं तत्खेदेनेति भावः । ये तदतिरिक्ता जनास्तिष्ठन्ति इह वर्तन्ते, तेऽपि गमने इतः प्रयाणे कामं यथेच्छं प्रकामः प्रकृष्ट उद्यम उद्योगो येषां ते प्रकामोद्यमाः उत्साहवन्तो भवन्तु सन्तु । अर्थस्य साधनं निष्पादनं तस्य विधिर्विधानं तस्मिन्नर्थसाधनविधौ प्रयोजनसम्पादनात्मकविधाने सेनाशतेभ्यो बहुसेनाभ्योऽधिका बहुला, नन्दानामुन्मूलने विनाशे दृष्टः साक्षात्कृतो वीर्यस्य सामर्थ्यस्य महिमा प्रभावो यस्यास्तादृशी नन्दोन्मूलनदृष्टवीर्यमहिमा एकाऽद्वितीया मम बुद्धिर्धीः केवलं मा गात् न गच्छतु मद्बुद्धिरेव सकलकार्यसम्पादनपट्वीति भद्रभटप्रभृतीनामितो गमनेऽपि न काप्यनुपपत्तिरिति भावः । सकलकार्यसम्पादने हेतुभूताया बुद्धेर्वाक्यार्थत्वेन काव्यलिङ्गमलङ्कारः ।

हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम् ।

इति तल्लक्षणात् । सेनाशतरूपोपमानादुपमेयभूतबुद्धेराधिक्यप्रतिपादनाद्व्यतिरेकालङ्कारश्चेत्यनयोः संसृष्टिः ।

"आधिक्यमुपमेयस्योपमानान्न्यूनताऽथवा ।
व्यतिरेक इति"

इति लक्षणात् । लाटी रीतिः । ओजो गुणः । शार्दूलविक्रीडितं छन्दः ॥२६॥

क्वेति । सर्वत्र मद्गुप्तचराधिष्ठितत्वान्न ते गुप्तस्थानप्राप्तिसम्भव इति भावः ।

**स्वच्छन्दमिति** । स्वच्छन्दं निरङ्कुशं स्वपक्षाऽनाश्रयणाद्विजातीयपरपक्षाश्रयणेन न कोऽपि तव नियन्ताऽस्तीत्यर्थः । यद्वा स्वच्छन्दं ( विचरणक्रियाविशेषणम् ) एकः सहायहीनश्चरतीत्येकचरस्तं तथोक्तं गजपक्षे यूथहीनं उज्ज्वला प्रभूता दानशक्तिर्वितरणसामर्थ्यं यस्य स तथोक्तस्तं तथोक्तं 'नन्दान्वयसम्बन्धिनोऽस्मान्वि-

बुद्ध्या विगृह्य, वृषलस्य कृते, क्रियाया-
मारण्यकं गजमिव प्रगुणीकरोमि ॥ २७ ॥

( इति निष्क्रान्ताः सर्वे । )

इति मुद्राराक्षसे प्रथमोऽङ्कः ।

---

हाय तत्रैकश्चरसीति भावः, गजपक्षे उज्ज्वला प्रभूता दानशक्तिर्मदजलक्षरणं यस्य तथोक्तम् उत्सेकिना उद्रिक्तेन बलमदेन सैन्याऽभिमानेन शारीरिकशक्त्युद्भूतोत्कृष्ट-पराक्रमेण वा विगाहमानं मदनिष्टायोद्युक्तं गजपक्षेऽरण्यसरोवरादिकमालोडयन्तं भवन्तं बुद्ध्या मत्या निगृह्य आयत्तीकृत्य वृषलस्य मौर्यस्य कृते निमित्तं तदिष्टसम्पा-दनार्थमित्यर्थः । क्रियायां तस्यैव मन्त्रित्वग्रहणादिरूपायां गजपक्षे वाहनादिरूपा-याञ्च आरण्यकं वन्यं गजं करिणमिव प्रगुणीकरोमि वशीकरोमि गजपक्षे दृढरज्जु-बद्धं करोमीत्यर्थः । शक्त्यादृढरज्जुबन्धनाद्युपायेन संवाहनादिक्रियायां गजमिव मौर्यमन्त्रित्वग्रहणरूपक्रियायां त्वां वशीकरोमीति भावः । अत्रोपमालंकारः श्लेषे-णाऽनुप्राणितः । वैदर्भी रीतिः । ओजो गुणः । वसन्ततिलकं वृत्तम् ॥ २७ ॥

प्रथमोऽङ्क इति ।

प्रत्यक्षनेतृचरितं रसभावसमुज्ज्वलम् ।

इत्यादिदर्पणेऽङ्कलक्षणं प्रदर्शितम् ।

इति मैथिलश्रीकनकलालठक्कुरविरचितायां मुद्राराक्षसभावबोधिनी-व्याख्यायां प्रथमोऽङ्कः ।

---

( २७ ) स्वच्छन्दं निरङ्कुशम् एकचरं सहायहीनम् उज्ज्वलदानशक्ति प्रचुरदानसामर्थ्यं उत्सेकिना प्रवर्तमानेन बलमदेन सैन्याभिमानेन विगाहमानम् मदनिष्टतत्परं भवन्तम्, स्वच्छ-न्दं निश्शासनम् एकचरं यूथहीनम् उज्ज्वलदानशक्ति प्रभूतमदक्षरणम् उत्सेकिना जायमानेन बलमदेन शरीरोद्भूतसामर्थ्येन विगाहमानं वन्यसरोवरमालोडयन्तम् आरण्यं वन्यं गजमिव बुद्ध्या निगृह्य वशीकृत्य वृषलस्य मौर्यस्य कृते निमित्तं क्रियायां मन्त्रित्वादिग्रहणरूपायां पक्षे संवाह-नादिरूपायां प्रगुणीकरोमि वशीकरोमि पक्षे दृढ बन्धन करोमि ।

# द्वितीयोऽङ्कः ।

( ततः प्रविशत्याहितुण्डिकः । )*

आहितुण्डिकः—

जाणन्ति तन्तजुत्तिं जहट्ठिअं मण्डलं अहिलिहन्ति ।
जे मन्तरक्खणपरा ते सप्पणराहिवे उवचरन्ति ॥१॥ (१)

---

( १ ) जानन्ति तन्त्रयुक्तिं यथास्थितं मण्डलमभिलिखन्ति ।
ये मन्त्ररक्षणपरास्ते सर्पनराधिपावुपचरन्ति ॥

---

तत इति । ततः प्रथमाङ्कसमाप्त्यनन्तरं चाणक्यादिनिखिलपात्रनिष्क्रमणानन्तरं वा आहितुण्डिकः सर्पक्रीडनोपजीविवेशधारी विराधगुप्तनामा राक्षसगुप्तचरः प्रविशति रङ्गस्थानमिति शेषः । अहिः सर्पस्तस्य तुण्डं मुखमहितुण्डमहितुण्डेन दीव्यतीत्याहितुण्डिकः ( 'तेन दीव्यतो'त्यनेन ठक् ) सर्पक्रीडनोपजीवीत्यर्थः ।

अथ नन्दामात्यराक्षसकृतोपायप्रवृत्तिमभिधातुं प्राप्त्याशापताकासम्बन्धात्मको गर्भसन्धिर्द्वितीयाऽङ्केनाऽभिधीयते—

गर्भस्तु दृष्टनष्टस्य बीजस्याऽन्वेषणं मुहुः ।

इति तल्लक्षणम् । प्रथमाङ्के दृष्टस्याऽत्र राक्षसाऽऽहितुण्डिकसंवादरूपया व्यापिन्या कथया पताकाख्यया नष्टस्याऽदृष्टस्य चाणक्यनयात्मकबीजस्याग्रे मुहुरन्वेषणादयं गर्भसन्धिः । पताकाप्राप्त्याशाऽनुगुण्येन गर्भसन्धेरङ्गानि—

अभूताहरणं मार्गो रूपोदाहरणे क्रमः ।
संग्रहश्चाऽनुमानञ्च तोटकाधिबले यथा ॥
उद्वेगसम्भ्रमाक्षेपा द्वादशाऽङ्गान्यनुक्रमात् ॥

अत्राऽऽहितुण्डिकच्छद्मधारिणो विराधगुप्तस्य सकलप्राकृतवचनं प्रस्तुतोपयोगिच्छद्माऽऽचरणमभूताहरणम् , अप्रस्तुतस्य राक्षसं प्रति कुसुमपुरोदन्ताऽभिधानस्योपयोगे छद्माचरणात् ।

जानन्तीति । ये जनाः तन्त्रे विषौषधविशेषे युक्तिं प्रयोगं यथास्थितं यथा-

---

* राक्षसस्य भाव्यनिष्टसूचनार्थमाहितुण्डिकप्रवेश इत्यवधेयम् ।

वत् जानन्ति अवगच्छन्ति मण्डलं माहेन्द्रादिदेवतामन्त्रं मण्डलाऽऽकारवेष्टनं वा अभिलिखन्ति रेखाकारेण लिखन्ति यद्वा सर्पकुण्डलस्थानं विशेषतोऽवगत्य पृथ्वीं विदारयन्ति ये च मन्त्रैर्गारुडादिमन्त्रैः रक्षणे आत्मगोपने परा आसक्ताः ते सर्पमुपचरन्ति सेवन्ते पक्षे—ये जनाः तन्त्रे स्वराष्ट्रचिन्तने ।

तन्त्रं स्वराष्ट्रे चिन्तायां शास्त्रौषधमखेष्वपि । इति वैजयन्ती ।

युक्तिं न्यायं यथास्थितं यथावत् समुचितमिति यावत् जानन्ति ज्ञायन्ते । मण्डलं राष्ट्रं चाऽभिलिखन्ति । (अभिरभागे इत्यभेः कर्मप्रवचनीयत्वेन तद्योगे द्वितीया ) विशेषरूपेणाऽवगत्य पत्राल्ढान् कुर्वन्ति । ये च मन्त्राणां षाड्गुण्यचिन्तनात्मकमन्त्रणाकार्याणां रक्षणं गोपनं परं प्रधानं येषां ते मन्त्ररक्षणपरास्ते जनाः नराधिपं राजानं किञ्चित्स्खलनेऽप्युग्रतेजसा जीवनाशकमिति यावत् उपचरन्ति आश्रयितुं शक्नुवन्तीत्यर्थः । तन्त्रमन्त्रादिषु सर्वथा कुशलैः सर्पनराधिपोपचरणं विधेयमिति भावः ।

पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत् ।
एकधर्माऽभिसम्बन्धः स्यात्तदा तुल्ययोगिता ॥
नियतानां सकृद्धर्मः सा पुनस्तुल्ययोगिता ।

धर्म इत्यनन्तरं यदुपादीयते इत्यस्य शेषान्नियतानां प्राकरणिकानामप्राकरणिकानां वा धर्मो यदुपादीयते सा तुल्ययोगितेत्यर्थः ।

वर्ण्यानामितरेषां वा धर्मैक्यं तुल्ययोगिता ।

इत्यादिदर्पण-प्रकाश-कुवलयानन्दस्थलक्षणेभ्यः सर्पनराधिपयोर्द्वयोः प्राकरणिकत्वेन प्रस्तुतत्वादुपचरणात्मकैकक्रियाऽभिसम्बन्धतया श्लोकेऽस्मिन् तुल्ययोगितालङ्कारः । स च तन्त्रादिपदानां श्लिष्टत्वाच्छ्लेषालंकारानुप्राणितः । सर्पश्चासौ नराधिपश्चेत्यनयोरितरेतरद्वन्द्वः सर्पनराधिपाविति समासोऽवगन्तव्यः ।

केचित्तु—सर्पो नराधिप इव सर्प इव नराधिप इति वोपमितोपमानेति समासद्वयमवमत्योपमितसमासपक्षे सर्पे नराधिपत्वारोपादुपमानसमासपक्षे नराधिपे सर्पत्वारोपात्तत्सादृश्यबोधनाद्वा तन्त्रादिपदानां श्लिष्टत्वाच्च श्लेषानुप्राणितो रूपकालंकारो वोपमालंकार इति वदन्ति । वस्तुतस्तु पूर्वोक्तालंकार एवाऽत्र युक्तः सर्पनराधिपयोरुभयोरपि वक्तव्यत्वेनाहितुण्डिकछद्मधारिविराधगुप्तवक्तुरभिमतत्वात् ।सर्प इव नराधिपो नराधिप इव सर्पो वेत्येकस्य वक्तव्यत्वेनाऽनभिमतत्वाद्रूपकाद्यलंका-

( आकाशे ) (१) अज्ज ! किं भणासि को तुमं त्ति ? अज्ज ! अहं क्खु आहितुण्डिओ जिरणविसो णाम । ( पुनराकाशे ) किं भणासि अहंपि अहिणा खेलिदुं इच्छामि त्ति ? अथ कदरं उण अज्जो वित्तिं उवजीवदि ? ( पुनराकाशे । ) किं भणासि राअउलसेवओ त्ति ? णं खेलदि ज्जेव अज्जो अहिणा । किं भणासि कधं त्ति ? अमन्तोसहि-कुशलो वालग्गाही, अगिहीदङ्कुसो मत्तगअवरारोही, लद्धाहिआरो

( १ ) आर्य्य ! किं भणसि कस्त्वमिति ? आर्य्य ! अहं खलु आहितु-ण्डिको जीर्णविषो नाम । किं भणसि अहमप्यहिना खेलितुमिच्छामीति ? अथ कतरां पुनरार्य्यो वृत्तिमुपजीवति ? किं भणसि राजकुलसेवक इति ? ननु खेलत्येव आर्य्योऽहिना । किं भणसि कथमिति ? अमन्त्रौषधिकुशलो व्यालग्राही, अगृहीताङ्कुशो मत्तगजवरारोही, लब्धाधिकारो जितकाशी राज-

राऽसंभवादिति तत्त्वम् । अत्र वैदर्भी रीतिः । प्रसादगुणः । आर्याछन्दः ॥ १ ॥

किं ब्रवीषीति यन्नाट्ये विना पात्रं प्रयुज्यते ।
श्रुत्वेवाऽनुक्तमप्यर्थं तत्स्यादाकाशभाषितम् ॥ इति ॥
अप्रविष्टैः सहालापो भवेदाकाशभाषणम् ।

इति चाकाशभाषितस्य लक्षणादाह—आकाशे इति । आर्य ! मान्य किं भ-णसि कथयसि त्वं कः किं नामधेयः । आर्य, मान्य ! अहं ( खलुशब्दो निश्चये वा-क्यालङ्कारे वा ) आहितुण्डिकः सर्पक्रीडनोपजीवी जीर्णविषो नाम जीर्णविषनाम्ना प्रसिद्धोऽस्मीत्यर्थः । किं भणसि कथयसि अहमपि अहिना सर्पेण खेलितुं क्रीडितु-मिच्छामि अभिलषामि, अथाऽनन्तरं पुनः आर्यः पूज्यो भवान् कतरां कां वृत्तिं जीविकामुपजीवति समवलम्बते, किं भणसि कथयसि राजकुलसेवकः नृपान्वयाश्रितः, ( ननुशब्दो निश्चयार्थक, उत्तरवाक्यप्रदानार्थको वा ) आर्यः पूज्यो भवान् अहिना सर्पेण ननु निश्चयेन ( ननु शब्दोपपदसद्भावात् खेलतीत्यत्र भूते लट् , 'ननौ पृष्टप्र-तिवचने' इत्यनुशासनेनेति बोध्यम् ) किं भणसि कथयसि कथमिति केन प्रकार-णेति, मन्त्राश्चौषधयश्च मन्त्रौषधयस्तेषु कुशलो निपुणो मन्त्रौषधिकुशलो न मन्त्रौ-षधिकुशलः अमन्त्रौषधिकुशलः मन्त्रेषु गारुडादिकेषु औषधिषु ईश्वरमूलकादिषु चाज्ञ इत्यर्थः, व्यालमाशीविषं गृह्णाति तच्छीलो व्यालग्राही व्यालोपजीवी, अगृ-

जिदकासी राअसेवओ त्ति, एदे तिण्णि अवस्सं विणासमणुहोन्ति। कधं, दिट्ठमत्तो अदिक्कन्तो एसो ! ( पुनराकाशे । ) अज्ज ! तुमं उण किं भणासि—किं एदेसु पेडासमुग्गकेसु त्ति ? अज्ज ! अप्पजोविआ-सम्पादआ सप्पा। ( पुनराकाशे । ) किं भणासि—पेक्खिदुमिच्छामि त्ति ? प्पसीददु प्पसीददु अज्जो । अत्थानं क्खु एदं, ता जइ दे कोदूहलं, ता एहि एदस्सिं आवासे दंसेमि । ( पुनराकाशे । ) किं भणासि एदं क्खु भट्टिणो अमच्चरक्खसस्स गेहं, णत्थि इध अह्मारिसाणं प्पवेसोत्ति ? तेण हि गच्छदु अज्जो । जीविआए प्पसादेण अत्थि एत्थ मम प्पवेसो त्ति । कधं एसो वि अदिक्कन्तो !

---

सेवक इति, एते त्रयोऽवश्यं विनाशमनुभवन्ति । कथं दृष्टमात्रोऽतिक्रान्त एषः ! आर्य्य ! त्वं पुनः किं भणसि—किमेतेषु पेटकसमुद्गकेषु इति ? आर्य्य ! आत्मजीविकासम्पादकाः सर्पाः । किं भणसि—प्रेक्षितुमिच्छामीति ? प्रसीदतु प्रसीदतु आर्य्यः । अस्थाने—खलु एतत्, तद्यदि ते कौतूहलं, तदेहि एतस्मिन्नावासे दर्शयामि । किं भणसि—इदं खलु भर्त्तुरमात्यराक्षसस्य गृहं, नास्तीह अस्मादृशानां प्रवेश इति ? तेन हि गच्छत्वार्य्यः-जीविकायाः प्रसादेनास्त्यत्र मम प्रवेश इति । कथमेषोऽप्यतिक्रान्तः ?

---

हीतोऽधृतोऽङ्कुशः शासनदण्डो येन सोऽगृहीताङ्कुशः मत्तश्चासौ गजवरश्चेति मत्तगजवरस्तमारोहतीति मत्तगजवरारोही उन्मत्तकरिश्रेष्ठारोहणशील इत्यर्थः, लब्धः प्राप्तोऽधिकारः कार्यप्रभुत्वं येन स लब्धाऽधिकारः जितेन जयेन काशते स्पर्द्धत इति जितकाशी अभिमानीत्यर्थः । सेवते इति सेवकः (कर्तरि ण्वुल्) राज्ञः सेवको राजसेवको नृपपरिवारकः एते त्रयोऽवश्यं निश्चितं विनाशं मरणमनुभवन्ति प्राप्नुवन्ति सर्वथैषां प्रमादसम्भवादित्यर्थः । कथं केन प्रकारेण एष आकाशस्थपुरुषः दृष्टमात्रः ( मयूरव्यंसकादयश्चेति समासः ) अतिक्रान्तोऽन्तर्हितः । आर्य ! मान्य त्वं, किं भणसि कथयसि, एतेषु प्रत्यक्षतो दृश्यमानेषु पेटकानां समुद्गक इति पेटकसमुद्गकास्तेषु पेटकसमुद्गकेषु मञ्जूषासम्पुटेषु किं वस्तु वर्तत इति शेषः । आर्य निजवृत्तिसाधका आत्मजीविकासम्पादकाः सर्पाः फणिनः । किं भणसि कथयसि प्रेक्षितुं

( दिशोऽवलोक्य संस्कृतमाश्रित्य स्वगतम् । ) अहो ! आश्चर्य्यम् । चाणक्यमतिपरिगृहीतं चन्द्रगुप्तमवलोक्य, विफलमिव राक्षसप्रयत्नमवगच्छामि । राक्षसमतिपरिगृहीतञ्च मलयकेतुमवलोक्य, चलितमिवाधिराज्याच्चन्द्रगुप्तमवगच्छामि । तथाहि—

कौटिल्यधीरज्जुनिबद्धमूर्तिं
मन्ये स्थिरां मौर्य्यकुलस्य लक्ष्मीम् ।

---

द्रष्टुमिच्छामि वाञ्छामि । आर्यः पूज्यो भवान् प्रसीदतु प्रसन्नो भवतु । खलु निश्चये एतत् प्रेक्षणमित्यर्थः । अस्थानं युक्तम् । तत्तस्मात्कारणात् यदि ते तव कौतूहलं सर्पक्रीडावलोकनोत्कण्ठा वर्तते इति शेषः । तर्हि आगच्छ एतस्मिन्नमुष्मिन् आवासे गृहे दर्शयामि अवलोकयामि । किं भणसि वदसि, इदं साक्षाद्दृश्यमानं खलु निश्चितं भर्त्तुः स्वामिनोऽमात्यराक्षसस्य गृहं भवनम् । अस्मादृशानां मद्विधानां जनानामिति शेषः । इहाऽस्मिन् गृहे प्रवेश आगमो नाऽस्ति न विद्यते। तेन हेतुना आर्यो भवान् गच्छतु व्रजतु । जीविकाया वृत्तेः प्रसादेन उपायेनेत्यर्थः । अत्रैतस्मिन् गृहे मम प्रवेश आगमनमस्ति वर्तते । कथं कुतः एषोऽपि अयमपि अतिक्रान्तोऽन्तर्हितः ।

दिशः ककुभोऽवलोक्य दृष्ट्वा संस्कृतं देववाणीमाश्रित्य समवलम्ब्य स्वगतमनतिस्पष्टं कथयतीति शेषः । अहो ( विस्मयसूचकमव्ययमिदम् ) आश्चर्यम् चित्रमित्यर्थः । चाणक्यस्य कौटिल्यस्य मतिर्बुद्धिः परिगृहीता येन स तथोक्तस्तं तथोक्तं यद्वा चाणक्यस्य मत्या परिगृहीतं परिचालितम् चन्द्रगुप्तं वृषलमवलोक्य दृष्ट्वा राक्षसस्य प्रयत्नं प्रयासं विफलमिव वितथमिवाऽवगच्छामि सम्भावयामि जानामीति यावत् । राक्षसस्य नन्दसचिवस्य मत्या बुद्ध्या परिगृहीतं परिचालितं यद्वा राक्षसस्य मतिः परिगृहीता स्वीकृता येन तथोक्तस्तं तथोक्तं मलयकेतुं पर्वतकपुत्रमवलोक्य दृष्ट्वा अधिको राजाऽधिराजस्तस्य भावोऽधिराज्यं तस्मादधिराज्यात् चलितं च्युतं पृथग्भूतमिव चन्द्रगुप्तं मौर्यमवगच्छामि सम्भावयामीत्यर्थः । चाणक्य-राक्षसेति सचिवद्वयबुद्धिपाटवप्रदर्शनार्थमाह—तथा हीति—

कौटिल्येति । कौटिल्यस्य चाणक्यस्य धीर्बुद्धिरेव स्थैर्यसम्पादकत्वेन रज्जुर्दाम तया निबद्धा सम्बद्धा संयतेति यावत् मूर्त्तिराकृतिर्यस्याः सा तथोक्ता तां

उपायहस्तैरपि राक्षसेन
विकृष्यमाणामिव लक्षयामि ॥ २ ॥

तदेवमनयोःसुनयशालिनोः सचिवयोर्विरोधे संशयितेव नन्दकु-

---

कौटिल्यधीरज्जुनिबद्धमूर्त्तिं चाणक्यमतिदामसंयताकृतिमित्यर्थः। मौर्यश्चासौ नृपश्चेति मौर्यनृपस्तस्य मौर्यनृपस्य चन्द्रगुप्तनृपतेर्लक्ष्मीं राज्यश्रियं स्थिरां निश्चलां मन्ये उत्प्रेक्षे सम्भावयामीति यावत्। राक्षसेन नन्दसचिवेन उपायाः सामादयः

सामदानदण्डभेदमित्युपायचतुष्टयम्।

इत्यमरः। एव हस्ताः करास्तैरुपायहस्तैः साम-दान-दण्ड-भेदेत्युपायचतुष्टयात्मककरैरित्यर्थः। अपि विकृष्यमाणां बलेनाकृष्यमाणामिव मलयकेतुपक्षश्रितां विधास्यमानामिवेति यावत् लक्षयामि सम्भावयामीत्यर्थः। चाणक्यबुद्धिरूपदामसंयताकृतिमौर्यराज्यश्रियं निश्चलामपि राक्षसकर्तृकोपायचतुष्टयात्मककरकरणकाकर्षणयुक्तामिव तर्कयामीति भावः। रज्जुत्व-हस्तत्वयोश्चाणक्यबुद्ध्युपाययोरारोपान्निरङ्गरूपकालङ्कारः। मौर्यराज्यश्रियं स्थिरां मन्ये उपायहस्तैर्विकृष्यमाणामिवेति च वाच्योत्प्रेक्षालङ्कारश्चेत्यन्योन्यमेतयोः साङ्कर्यम्। उक्तञ्चैतदलङ्कारद्वयस्य लक्षणद्वयं साहित्यदर्पणे यथा—

रूपकं रूपितारोपाद्विषये निरपह्नवे।
निरङ्गं केवलस्यैव रूपणं तदपि द्विधा ॥
मालाकेवलरूपत्वात् ,,
भवेत्सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना।
वाच्या प्रतीयमाना सा प्रथमं द्विविधा मता ॥

अत्र वैदर्भी रीतिः। प्रसादगुणः। उपजातिश्छन्दः। उक्तं चैतल्लक्षणं यथा छन्दोमञ्जर्याम्—

अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः ॥ २ ॥

तदेवमिति। तत्तस्मात्कारणादेवमित्थमनयोश्चाणक्य-राक्षसयोः सुष्ठु सम्यक् नयेन नीत्या शालेते तच्छीलाविति सुनयशालिनौ (श्लाघार्थकशाडधातोर्णिनिः डलयोरैक्याल्लघटितरूपम्) तयोः सुनयशालिनोः सुनीतिविदोः सचिवयोर-

(२) एतेन चाणक्य-राक्षसयोर्बुद्धिकौशलं प्रदर्श्यते।

लक्ष्मी र्लक्ष्यते । कुतः ?—

विरुद्धयोर्भृशमिह मन्त्रिमुख्ययोः
महावने वनगजयोरिवान्तरे ।

मात्ययोर्विरोधे वैरत्वे सति नन्दकुलस्य लक्ष्मीः राज्यश्रीः संशयिता क्व मामकीना स्थितिरिति सन्देहाकुलेव लक्ष्यतेऽवगम्यते तर्क्यते इति यावत् । अत्रोत्प्रेक्षालङ्कारः।

विरुद्धयोरिति । महच्च तद्वनं चेति महावनं ( कर्मधारयसमासः आन्महतः इत्याकारः ) तस्मिन्महावने महाविपिने निविडकानने इत्यर्थः । भृशमत्यर्थं ।

अतिवेलभृशात्यर्थमतिमात्रोद्गाढनिर्भरम् इत्यमरः ।

विरुद्धयोः ( विपूर्वकाद्रुधेः क्तः ) विरोधं कुर्वतोः हस्तिन्यर्थं युध्यतोरिति यावत् वनगजयोः वन्यहस्तिनोरन्तरे मध्ये विद्यमानयेति शेषः । अनिश्चयाद्युद्धे जयपराजयनिर्णयाऽभावात् भीतया सन्त्रस्तया गजवशया करिण्या इव ।

वशा स्त्री करिणी च स्यात् इत्यमरः ।

इहाऽस्मिन्नुपस्थितविषयेऽन्यजयात्मकव्यापार इत्यर्थः । भृशमत्यर्थं विरुद्धयोः परस्परजयार्थं विरोधमाचरतोर्मन्त्रिमुख्ययोरमात्यप्रवरयोः कौटिल्य-राक्षसयोरन्तरे मध्ये अनिश्चयादन्यतरविजयानिर्धारणात् भीतया भययुक्तया श्रिया राजलक्ष्म्या गतागतैः गतानि चागतानि चेति तथोक्तानि तैर्गतागतैर्गमनागमनैः मलयकेतुतो वृषले गतिः वृषलान्मलयकेतावगतिरित्येवंरूपैरित्यर्थः । भृशं श्रमाधिक्यादत्यर्थं खिद्यते क्लिश्यत इव । यथा करिण्यर्थमन्योऽन्यं विरोधिकारिवन्यमत्तहस्तिद्वयमध्यवर्त्तिनी करिणी अन्यतरजयानवधारणाद्भीता सती खेदयुक्ता भवति तथैव कौटिल्य-राक्षसोभयान्तरालस्थिता-राज्यश्रीरतिशयं क्लेशभागिनीवेति भावः ।

अमात्यद्वयस्यारण्यकरिसाम्यप्रदर्शनाद्राजलक्ष्म्याश्च करिणीसाम्यप्रदर्शनाच्चोपमाद्वयम् राजलक्ष्म्याः क्लेशसम्भावनादुत्प्रेक्षा तथा चात्रोपमानुप्राणितोत्प्रेक्षालङ्कारः । वैदर्भी रीतिः । प्रसादगुणः । रुचिरा वृत्तम् ।

जभौ सजौ गिति रुचिरा चतुर्ग्रहैः ।

इति लक्षणात् ।

उपायाऽपायशङ्काभ्यां प्राप्तयाशाकार्यसम्भवः !

इति लक्षणादियं प्राप्त्याशा । कौटिल्यधीरज्जुनिबद्धेत्युपायशङ्का । राक्षसेन

अनिश्चयाद्गजवशयेव भीतया
गतागतैर्भृशमिव खिद्यते श्रिया ॥ ३ ॥

तद्यावत् अहममात्यराक्षसं पश्यामि । (इति परिक्रम्य स्थितः)
(ततः प्रविशत्यासनस्थः स्वभवनगतः पुरुषेणानुगम्यमानः सचिन्तो राक्षसः ।)

---

निष्कृष्यमाणेत्यपायशङ्का ताभ्यां मौर्यश्रीस्थैर्यात्मककार्यस्य सम्भवः कादाचित्कत्वेन सम्भावना ।

प्रतिपाद्य कथाङ्गं स्यात्पताका व्यापिनी कथा ।

इति लक्षणाद्विराधगुप्त—राक्षसेत्युभयोर्महती सम्बादकथा पताका । प्राप्त्याशा—पताकयोः सम्बन्धादेष गर्भसन्धिरिति बोध्यम् ॥ ३ ॥

तद्यावदिति । तत्तस्मात्कारणात् यावद्यावत्कालम् अहममात्यराक्षसं राक्षसनामममन्त्रिणं पश्यामि प्रेक्षे । प्रथमाङ्कावसाने कौटिल्येन मद्बलेन विगाहमानमिति राक्षसकृतविगाहमानस्य नीतिप्रयोगस्य द्वितीयाङ्के कथयिष्यमाणस्य सूचनादिदमङ्कास्यम् । उक्तञ्च दर्पणे तल्लक्षणं यथा—

अङ्कान्तपात्रैरङ्कास्यं छिन्नाङ्कस्यार्थसूचनात् ।

इति ।

अङ्कान्ते सूचितः पात्रैस्तदङ्कस्याऽविभागतः ।
यत्राऽङ्कोऽवतरत्येषोऽङ्कावतार इति स्मृतः ॥

इत्युक्तलक्षणात् । द्वितीयाङ्केऽभिधास्यमानक्षपणक—शकटदासादिनिग्रहस्य पूर्वाङ्कार्थानुसङ्गतत्वादाहितुण्डिकप्रवेशस्य सूचनाच्चैषोऽङ्कावतार इति । परिक्रम्य संचर्य ।

ततः प्रविशतीति । ततः स्थित्यनन्तरम् आसनस्थः आसने तिष्ठति यः स तथोक्तः स्वभवनगतः निजनिलयवर्त्ती पुरुषेणाऽनुचरेणाऽनुस्रियमाणः चिन्तया शोकेन सह वर्त्तमानः सचिन्तो राक्षसो नन्दसचिवः प्रविशति रङ्गस्थानमिति शेषः ।

---

(१) एतेन पद्यन मिथो विपक्षाश्रितराक्षसकौटिल्येति मन्त्रिद्वयस्योन्मत्तवन्यगजोपमादनाविरंकुशत्वयतिमलिष्ठत्वं सूच्यते । राजलक्ष्म्याश्च वशोपमादानादुभयाश्रितत्वादतिखेदयुक्तत्वं सूच्यते ।

राक्षसः—( ऊर्ध्वमवलोक्य सवाष्पम् । ) कष्टं भोः ! कष्टम्—
वृष्णीनामिव नीतिविक्रमगुणव्यापारशान्तद्विषां
नन्दानां विपुले कुलेऽकरुणया नीते नियत्या क्षयम् ।

---

ऊर्ध्वमवलोक्येति । ऊर्ध्वमुपरिष्टादवलोक्य दृष्ट्वा सवाष्पं साश्रुनेत्रं । ( क्रियाविशेषणमेतत् ) चिन्तावसरे ऊर्ध्वावलोकनं सुप्रसिद्धम् पूर्वघटनास्मरणाद्वाष्पपात इत्यनुसन्धेयम् ।

विवादे विस्मये हर्षे खेदे दैन्येऽवधारणे ।
सम्भ्रमे चैव शब्दानां द्विरुक्तिर्न दुष्यति ॥

इत्यभिधानप्रामाण्यात्कष्टमिति खेदे द्विरुक्तिः ।

वृष्णीनामिति । नीतिर्दण्डनीतिर्विक्रमः शौर्यं गुणाः सन्धि-विग्रहप्रभृतयः नीतिश्च विक्रमश्च गुणाश्चेत्येषामितरेतरद्वन्द्वः नीतिविक्रमगुणास्तेषां व्यापारेण यथावत्प्रयोगेण यद्वा-नीतिः षाड्गुण्यं विक्रमः--प्रभुत्वं शूरत्वमिति यावत् तावेव गुणौ तयोर्व्यापारेण यथोचितप्रयोगेण शान्ताः शमिता (अन्तर्भावितोऽत्र ण्यर्थः । वा पदान्त इति सूत्रेण पाक्षिकनिपातः ) द्विषः शत्रवो यैस्ते तथोक्तास्तेषां तथोक्तानां वृष्णीनां यदूनामिव नन्दानां नवसंख्यकानां विपुले महति कुलेऽन्वयेऽकरुणया निर्दयया अननुकूलयेति यावत् । नियत्या भाग्येन क्षयं नाशं नीते प्रापिते सति चिन्तायाः दुःखमापतितं कथं वा तदुद्धार इत्येवंरूपभावनायाः आवेशात्सद्भावात् समाकुलेन व्यग्रेण मनसा हृदयेनोपलक्षितस्येति शेषः । ( तत्र 'इत्थम्भूतलक्षणे' इति तृतीया ) रात्रिश्च दिवा चेति रात्रिन्दिवम् ( अचतुरविचतुरेति निपातः ) जाग्रतश्चिन्ताधिक्यादनिद्रितस्य निद्रामननुभवत इति यावत् । मम सैवेयं नन्दजीवनकाङ्क्षिकयेवेत्यर्थः चित्रकर्मरचना विचित्रपौरुषव्यापारः भित्तिं कुड्यमाश्रयमाधारमिति यावत् बिना वर्त्तते प्रवर्त्त इत्यर्थः । चिन्तयाऽनेकविधिविषयकः सङ्कल्पः प्रादुर्भवति किन्तु न समुचितस्थानमाप्नोतीति भावः । भित्तेराश्रयत्वेन तामन्तरा चित्रकर्मरचनायाः स्थित्यसम्भवेऽपि स्थित्यभिधानाद्विशेषालङ्कारः । उक्तञ्च लक्षणं दर्पणे यथा—

यदाधेयमनाधारमेकञ्चानेकगोचरम् ।
किञ्चित्प्रकुर्वतः कार्यमशक्यस्येतरस्य वा ।

चिन्तावेशसमाकुलेन मनसा रात्रिन्दिवं जाग्रतः
सैवेयं मम चित्रकर्म्मरचना भित्तिं विना वर्त्तते ॥ ४ ॥

---

कार्यस्य करणं दैवाद्विशेषास्त्रिविधस्ततः ।
विभावना विनापि स्यात्कारणं कार्यजन्म चेत् ।

इति कुवलयानन्दोक्तलक्षणाद्भित्तेरसद्भावे चित्रकर्मरचनासत्त्वभावाद्विभावनालङ्कारः ।

किञ्चात्र कारणासत्त्वेऽपि कार्योत्पत्तौ विभावनालंकारस्य विषयत्वाच्चित्रकर्मरचनात्मककार्यस्योत्पत्तौ भित्तिरूपकारणस्यापेक्षणादेतमन्तराऽप्युक्तरूपकार्याविर्भावनाद्विभावनालङ्कारः । उक्तञ्चैतल्लक्षणं यथा काव्यप्रकाश-दर्पण-कुवलयानन्देषु—

क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्विभावना । का० प्र०

क्रियतेऽनयेति व्युत्पत्त्या प्रसिद्धहेतुपरः । क्रियाशब्दः । विभावयति कारणान्तरं कल्पयतीति व्युत्पत्त्या विभावनाशब्दोऽप्यन्वर्थः । प्रसिद्धहेत्वसद्भावेऽपि कार्याविर्भावो हि कार्यस्य हेत्वन्तरं विभावयति तथा च प्रसिद्धहेत्वभावेऽपि तत्कार्यात्मकफलव्यक्तिः, प्रकाशनमभिधानं विभावनाऽलंकार इति कारिकार्थः ।

शाब्दिकनये-क्रियाया एव हेतुत्वात्कारिकायां क्रियापदोक्तिः । वस्तुतस्तु कारणप्रतिषेधे कार्यवचनं विभावनेति प्रदीपकृत् । शाब्दिकमताङ्गीकारे आत्मादेरपि हेतुत्वप्रसङ्ग इत्याह वस्तुतस्त्विति ।

विभावना विना हेतुं कार्योत्पत्तिर्यदुच्यते ।
उक्तानुक्तनिमित्तत्वाद्द्विधा सा परिकीर्त्तिता ॥ सा० द०
विभावना विनाऽपि स्यात्कारणं कार्यजन्म चेत् । कुवल०

यत्तु—चित्रकर्मसत्त्वेऽपि भित्तेरभाव इति विशेषोक्तिस्तन्न ।

विशेषोक्तिरखण्डेषु कारणेषु फलावचः । का. प्र. ।
सति हेतौ फलाभावे विशेषोक्तिस्तथा द्विधा । सा. द. ।

इत्यादि प्रकाशदर्पणोक्तलक्षणासंघटनात् । चित्रकर्मात्मककार्यम्प्रति भित्तेरेव कारणत्वेन भित्तिप्रति चित्रकर्मणो हेतुत्वाऽसम्भवाव यथा कथञ्चित्स्वेच्छया तथा कल्पनेनैतदलंकारकथनं सर्वथाऽनादरणीयमेवेति ध्येयम् ।

विशेषालङ्कार-विभावनालङ्कारयोः परस्परसन्देहसाङ्कर्यम् । सादृश्यार्थकेवश-

---

(४) एतेनाऽमात्यराक्षसो नियतः प्राबल्यं सूचितवान् ।

अथवा—

नेदं विस्मृतभक्तिना न विषयव्यापारमूढात्मना
प्राणप्रच्युतिभीरुणा न च मया नात्मप्रतिष्ठार्थिना ।
अत्यर्थं परदास्यमेत्य निपुणं नीतौ मनो दीयते
देवः स्वर्गगतोऽपि शात्रववधेनाराधितः स्यादिति ॥ ५ ॥

---

...सत्त्वादुपमालंकाराभिधानात् वृष्णीनामित्युपमालंकारेण पूर्वोक्तालंकारद्वयस्य मिथोऽनपेक्षया संसृष्टिः । एवं च पृथगलंकारोयं संसृष्टिर्नाम इति बोध्यम् ।

प्रसादोऽत्र गुणः । पाञ्चाली रीतिः । शार्दूलविक्रीडितं छन्दः ॥ ४ ॥

नेदमिति । परस्याऽऽत्मनो भिन्नस्य मलयकेतोरित्यर्थः । दास्यं दासस्य कर्म परायत्तत्वमिति यावत् एत्य प्राप्य स्वीकृत्येत्यर्थः । मया आत्मना नीतौ नीतिप्रयोगे यन्मनः स्वान्तं निपुणमतिशयं साभिनिवेशं साग्रहमिति यावत् दीयते विधीयते इदं तत् नीतौ मनोदानं प्रभुस्नेहस्मरणं कुर्वतैव दीयते न तु विस्मृतभक्तिना मयेत्यर्थः । विस्मृता भक्तिर्येन स तथोक्तस्तेन तथोक्तेन । अत्रेदं बोध्यम्—भक्तिशब्दस्य प्रियादिगणे पाठादप्पूरणीप्रियादिष्विति निषेधाद्विस्मृता भक्तिर्येनेति विग्रहे 'स्त्रियाः पुंवदि' ति पुंवद्भावाप्राप्त्या नोक्तप्रयोगोपपत्तिरिति चेन्न । दृढा भक्तिर्यस्य स दृढभक्तिरिति कौमुद्युक्तरीत्या स्त्रीपूर्वपदस्याऽविवक्षितत्वेन नपुंसकपूर्वपद-बहुव्रीहेर्विवक्षणात्तदुपपत्तेः । न वा विषयव्यापारे यथावत्सामदानादिप्रयोगे मूढोऽज्ञ आत्माऽन्तःकरणं यस्य तेन विषयव्यासङ्गरूढात्मनेति पाठे विषयेषु रूपादिषु व्यासङ्ग आसक्तिस्तत्र रूढः स्थिरपरिचय आत्मान्तःकरणं यस्य तेनेत्यर्थः। न वा प्राणस्य जीवस्य प्रच्युतिर्नाशः प्राणप्रच्युतिस्ततो भीरुणा भययुक्तेन शङ्कितेनेति यावत् मनो दीयते इत्यर्थः । नवा आत्मनः स्वस्य प्रतिष्ठा महत्त्वं तस्या अर्थिना अभिलाषुकेन याचकेन स्वकीर्त्तिलाभेच्छयेत्यर्थः मनो दीयते किन्तु देवो नन्दः स्वर्गगतोऽपि परलोकस्थितोऽपि शात्रववधेन रिपुविनाशेन आराधितस्तदभीष्टसम्पादनासन्तोषितः स्यादिति हेतोः मनो दीयते इत्यर्थः ।

किञ्चित्पृष्टमपृष्टं च कथितं यत्प्रकल्पते ।
तादृगन्यव्यपोहाय परिसंख्या तु सा मता ॥

---

( ५ ) एतेनाऽमात्यराक्षसः स्वामिभक्तेराधिक्यं सूचयति ।

( आकाशमवलोकयन् सास्रम् । ) भगवति कमलालये ! भृशम् अगुणज्ञाऽसि । कुतः ?—

आनन्दहेतुमपि देवमपास्य नन्दं
रक्ताऽसि किं कथय वैरिणि मौर्य्यपुत्रे ? ।

---

प्रश्नादप्रश्नतो वाऽपि कथिताद्वस्तुनो भवेत् ।
तादृगन्यव्यपोहश्चेच्छाब्द आर्थोऽथवा तदा ।
परिसंख्या,

इति प्रकाश-दर्पणोक्तलक्षणाभ्यां परलोकस्थितस्वामिनो नन्दस्य समाराधनार्थमरिविनाशात्मकवस्तुनो विस्मृतभक्तित्वादिहेतुचतुष्टयस्य निराकरणादत्र परिसंख्यालङ्कारः । प्रसादगुणः । पाञ्चाली रीतिः । शार्दूलविक्रीडितं वृत्तम् ॥ ९ ॥

**आकाशेति ।** आकाशं विष्णुपदमूर्ध्वप्रदेशमित्यर्थः । अवलोकयन् पश्यन् अस्रेण नेत्रजलेन सह वर्त्तमानं सास्रं सरोदनम् यथा स्यात्तथा मनसि ब्रवीतीति शेषः ( क्रियाविशेषणमेतत् ) भगमैश्वर्यं विद्यते यस्याः सा भगवती तत्सम्बोधने भगवति ऐश्वर्यशालिनि हे पूज्ये इति पर्यवसितोऽर्थः, कमलं पद्ममालय आश्रयो निवासस्थानं यस्याः सा कमलालया तत्सम्बोधने हे कमलालये !

लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया ।

इत्यमरः । भृशमतिशयं गुणं जानातीति गुणज्ञा न गुणज्ञा अगुणज्ञा ज्ञानशून्येत्यर्थः असि भवसि ।

लक्ष्म्यामङ्गीकृतपुरुषपरित्यागात्मकदोषस्य सदैव स्थितिः ।

उक्तञ्च—

लक्ष्मीः पुंयोगमाशंसुः कुलटेव कुतूहलात् ।
अन्तिकेऽपि स्थिता पत्युश्छलेनान्यं निरीक्षते ॥

तथा च तस्मास्तद्दोषमभिदर्शयन्नाह—

**आनन्दहेतुमिति ।** हे चपले ! हे अस्थिरस्वभावे ! आनन्दस्य सुखस्य सम्भोगादिसम्पादनस्य हेतुं कारणमपि देवं स्वामिनं नन्दमपास्य परित्यज्य वैरिणि शत्रौ प्रतिकूले मौर्य्यपुत्रे असद्वंशोद्भवचन्द्रगुप्ते किं कथं रक्ताऽनुरागवती असि इति कथय । गन्धप्रधानो गजो गन्धगजः ( शाकपार्थिवादित्वात्समासः ) तस्य गन्धगजस्य नाशे मरणे सति ( अत्र यस्य च भावेनेति सप्तमी ) दानाम्बुराजिरिव तदीयमदजल-

दानाम्बुराजिरिव गन्धगजस्य नाशे
तत्रैव किं न चपले ! प्रलयं गताऽसि ? ॥ ६ ॥

अपि च अनभिजाते !

पृथिव्यां किं दग्धाः प्रथितकुलजा भूमिपतयः
पतिं, पापे ! मौर्यं यदसि कुलहीनं वृतवती ?
प्रकृत्या वा काशप्रभवकुसुमप्रान्तचपला
पुरन्ध्रीणां प्रज्ञा पुरुषगुणविज्ञानविमुखी ॥ ७ ॥

---

धारेव तत्रैव नन्दे एव किं कथं प्रलयं तिरोधानं न गताऽसि प्राप्ताऽसि इति कथय । दुष्कुलजातपुरुषाश्रयणापेक्षया तव तिरोधानमेव समुचितमिति भावः । चपले इति सम्बोधनपदं लक्ष्म्याः कार्यमूढतामभिव्यञ्जयति । दानाम्बुराजिरिवेत्यत्रत्यसादृश्यार्थकेवशब्देन लक्ष्म्या दानाम्बुराजितुल्यत्वप्रतिपादनादत्रोपमालङ्कारः । स च—

उक्तैर्विशेषणैः साभिप्रायैः परिकरो मतः ।

इति दर्पणस्थलक्षणादानन्दहेतुमेवेत्युभयविशेषणपदस्य साऽभिप्रायत्वेनाऽभिधानात्परिकरालङ्कारेण संसृष्टः । वैदर्भी रीतिः । प्रसादगुणः । वसन्ततिलकं वृत्तम् । लक्षणं यथा—

ज्ञेयं वसन्ततिलकं तभजा जगौ गः ॥ ६ ॥

**अपि चेति** । किञ्चेत्यर्थः । अभिजाता कुलीना तद्भिन्नाऽनभिजाता तत्सम्बोधने अनभिजाते असत्कुलसम्भूते ! अकुलीनत्वादस्याः सदाचरणेऽप्रवृत्तिरिति भावः । दुःखाधिक्यादनभिजाते इति गालनम् ।

नन्दनृपानाश्रयणपूर्वकचन्द्रगुप्ताश्रयणेन लक्ष्म्याः शाठ्यमभिसूचयन्नाह —**पृथिव्यामिति** । हे पापे ! पापाचरणविशिष्टे दुष्कृतकारिणि प्रथितानि विख्यातानि कुलानि वंशाः प्रथितकुलानि तेषु जाताः दग्धाः वह्निसाद्भूता विनष्टा भाग्येनेति शेषः । यद्यस्मात्कारणात् कुलहीनं दुकुष्लजातं मौर्यं चन्द्रगुप्तं पतिं स्वामिनं वृतवती स्वीकृतवती असि सत्कुलोद्भूताऽसद्भावे दुष्कुलजाताश्रयणमुचितम् सति तु तस्मिन्स्तदाश्रयणन्तवायुक्तमिति भावः । वा अथवा काशः प्रभवो यस्य तत्काशप्रभवं तच्च तत्कुसुमं काशप्रभवकुसुमं तस्याऽग्रं तद्वच्चपला चञ्चला अचिरस्थायिनी पुरन्ध्रीणां स्त्रीणां प्रज्ञा बुद्धिः प्रकृत्या स्वभावेनैव पुरुषगुणविज्ञाने सत्पुरुषगुणविवे-

अपि च, अविनीते ! तदहमाश्रयोन्मूलनेनैव त्वामकामां करोमि । ( विचिन्त्य । ) मया तावत् सुहृत्तमस्य चन्दनदासस्य गृहे गृहजनं निक्षिप्य नगरान्निर्गच्छता न्याय्यमनुष्ठितम् । किं कारणमिति ? कुसुमपुराभियोगं प्रति अनुदासीनो राक्षस इति, तत्रस्थानामस्माभिः सह एककार्य्याणां देवपादोपजीविनां नोद्यमः शिथिलीभविष्यतीति । च-

---

चने विमुखी पराङ्मुखो भवति । भगवति ! कमलालये ! इत्यादिराक्षसस्य वितर्कप्रतिपादनरूपं नामाऽङ्कम् । प्रकृत्येत्यादिपरार्द्धात्मकसामान्येन पृथिव्यामित्यादिपूर्वार्द्धात्मकविशेषस्य समर्थनादत्राऽर्थान्तरन्यासोऽलङ्कारः ।

उक्तञ्च तल्लक्षणं दर्पणे यथा—

सामान्यं वा विशेषेण विशेषस्तेन वा यदि ।
कार्यञ्च कारणेनेदं कार्येण च समर्थ्यते ॥
साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः ।

स च प्रान्तचपलेत्यत्र प्रान्त इव चपलेत्युपमालंकारेण संसृष्टः ।

वैदर्भी रीतिः । प्रसादगुणः । प्रभवशब्दस्याधिकस्य कथनादधिकपदत्वदोषः । शिखरिणी छन्दः ॥ ७ ॥

अपि चेति । अविनीते ! दुःस्वभावे, तत्तस्मात्कारणादहमाश्रयस्य मौर्यात्मकत्वदास्पदस्योन्मूलनेन विनाशेन त्वां भवतीमकामां निष्फलाभीष्टां करोमि । करिष्यामीत्यर्थः । ( भविष्यत्सामीप्ये लट् ) । विचिन्त्य राजलक्ष्म्याश्रयोन्मूलनहेतुभूतोपायं विचार्येत्यर्थः । तमेव मया तावदित्यादिना प्रपञ्चयति तावत्—अतिशयेनसुहृदिति सुहृत्तमः ( अतिशायने तमबिष्ठनाविति तमप् ) । सुहृत्तमस्य मित्रवर्यस्य चन्दनदासस्य गृहे सद्मनि गृहजनं कलत्रं निक्षिप्य न्यासीकृत्य स्थापयित्वेत्यर्थः । नगरात्पुरात् निर्गच्छता निःसरता मया न्यायादनपेतं न्याय्यं समुचितमनुष्ठितं विहितम् । कुसुमपुरस्याऽभियोग आक्रमणं कुसुमपुराऽभियोगस्तं कुसुमपुराऽभियोगं प्रति राक्षसः तदाख्यनन्दप्रधानसचिवः अनुदासीनः सोद्यमः ( उत्पूर्वकादासेः शानचि 'ईदासः' इति ईदादेशे नञ् समासे च रूपम् ) इत्यस्माद्धेतोः एकं प्रधानं कार्यं मौर्योन्मूलनात्मकमुद्देश्यं येषां ते एककार्यास्तेषाम् तत्र तिष्ठन्तीति तत्रस्थास्तेषां तत्स्थाने वर्तमानानामित्यर्थः । ( तत्पुरुषे कृति बहुलम्

न्द्रगुप्तशरीरमभिद्रोग्धुमस्मत्प्रयुक्तानां तीक्ष्णरसदायिनामुपसंग्रहार्थं, परकृत्योपजापार्थञ्च, महता कोशसञ्चयेन स्थापितः शकटदासः। प्रतिक्षणमरातिवृत्तान्तोपलब्धये, तत्संहतिभेदाय च व्यापारिताः सुहृदो जीवसिद्धिप्रभृतयस्तत् किमत्र बहुना ?-

इष्टात्मजः सपदि सान्वय एव देवः
शार्दूलपोतमिव यं परिपुष्य नष्टः ।

---

इति सप्तम्या अलुक् ) देवस्य राज्ञो नन्दस्येत्यर्थः पादानुपजीवन्ति समाश्रयन्ते इति देवपादोपजीविनस्तेषां देवाऽनुचराणामित्यर्थः । अस्माभिः सहोद्यमश्चेष्टा व्यापार इति यावत् न शिथिलीभविष्यति मन्दः सम्पत्स्यते । चन्द्रगुप्तशरीरं मौर्यदेहमभिद्रोग्धुं जिघांसुमस्मत्प्रयुक्तानां मत्प्रेरितानां तीक्ष्णरसं विषं ददति तच्छीला इति तीक्ष्णरसदायिनस्तेषामुपसंग्रहार्थं सञ्चयार्थं परस्य शत्रोः कृत्यं कार्यं परकृत्यं तस्योपजापो भङ्गोऽर्थो यस्य तत्परकृत्योपजापार्थं यद्वा परेषां शत्रूणां कृत्यमेव कृत्यं येषां तेषां तथोक्तानां शत्रुकार्यसम्पादकानामित्यर्थः । उपजापार्थं ( अर्थेन सह नित्यसमासः ) भेदार्थं धनप्रदानादिनेति शेषः । महता प्रचुरेण कोशसञ्चयेन धनराशिना शकटदासो निजसुहृत् स्थापितो नियुक्तः । प्रतिक्षणमनवरतम् अरातेः शत्रोर्वृत्तान्तस्योदन्तस्य लब्धये प्राप्तये ज्ञानायेति यावत् ( अत्र निमित्तार्थिका चतुर्थी ) तेषामरातीनां संहतिर्मेलनं तस्य भेदनाय भङ्गाय च ( समुच्चयार्थकोऽत्र चशब्दः ) जीवसिद्धिप्रभृतयः जीवसिद्धिप्रमुखाः सुहृदो मित्राणि व्यापारिताः नियुक्ताः तत्तस्मात्कारणादत्राऽस्मिन् शत्रुभेदनरूपविषये बहुनाऽधिकेन किं न किमपीत्यर्थः ।

राक्षसेन प्रकृतकार्यस्योत्कर्षाऽभिधानात् चन्द्रगुप्तेत्यादिजीवसिद्धिप्रभृतय इत्यन्तमिदं प्रकृतोत्कर्षाऽभिधानमुदाहरणम् ।

इष्टात्मज इति । इष्टाः प्रिया आत्मजाः पुत्रा यस्य स इष्टात्मजः ( हेतुगर्भविशेषणमेतत ) अन्वयेन वंशेन सहितः सान्वयः सवंशः निजाष्टपुत्रसहित इत्यर्थ देवो नृपो नन्दः शार्दूलस्य व्याघ्रस्य पोतः सुतस्तमिव ।

पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः ।

इत्यमरः । यं मौर्यं परिपोष्य दासीक्षेत्रजमपि पुत्रत्वेन संरक्ष्य सपदि तत्क्षणं नष्टो विनाशमुपगतः हीनमपि यमुत्तमपुत्रवत् परिपाल्य मृत इति भावः । तस्यैव

तस्यैव बुद्धिविशिखेन भिनद्मि मर्म
वर्मीभवेद्यदि न दैवमदृश्यमानम् ॥ ८ ॥
( ततः प्रविशति कञ्चुकी ) ।

---

मौर्यस्यैव मर्म जीवनस्थानं बुद्धिरेव विशिखो बाणस्तेन बुद्धिविशिखेन भिनद्मि विदारयामि, यदि दैवं भाग्यम् अमृष्यमानमसहमानम् ( अदृश्यमानमिति पाठः ) अप्रत्यक्षं सत् वर्मी रक्षकं न भवेत् न स्यात् । यथा व्याघ्रो निजपुत्रं परिपाल्य तेनैव खादितो नश्यति, तथैव प्रियपुत्रो नन्दो निजकिङ्करीगर्भजत्वेन हीनमपि यं चन्द्रगुप्तमपत्यं परिपाल्य नष्टत्वं गतः । तस्यैव चन्द्रगुप्तस्य मर्मस्थानं बुद्धिबाणद्वारा विदारयामि यदि चन्द्रगुप्तस्यादृश्यमानं भाग्यं रक्षकं न स्याद्यदि च तदपि दृश्यमानं चेत्तदा तस्यापि प्रतीकारं कर्तुं शक्नुयामिति सरलार्थः । दैवस्यानुकूलत्वे सकलमभीष्टं फलति प्रतिकूलत्वे तु नेति भावः ।

शार्दूलपोतमिव यमित्यत्र सामान्यधर्मः स्वोत्पादकविनाशकत्वमौपम्यवाचक इव शब्दः उपमेयो यच्छब्दवाच्यश्चन्द्रगुप्तः उपमानं शार्दूलपोतः एतेषां वाच्यत्वादत्र पूर्णोपमालङ्कारः । उक्तं हि दर्पणे यथा—

सा पूर्णा यदि सामान्यधर्म औपम्यवाचि च ।
उपमेयं चोपमानं भवेद्वाच्यमिति,
बुद्धिविशिखेनेत्यत्र बुद्धौ विशिखत्वारोपेण रूपकालङ्कारः ।
रूपकं रूपितारोपाद्विषये निरपह्नवे ।
इति दर्पणोक्तलक्षणात् । उपमानरूपकयोः संसृष्टिः ।
विषयात्मतयारोप्ये प्रकृतार्थोपयोगिनि ।
परिणामो भवेत्तुल्यातुल्याधिकरणो द्विधा ॥

इति दर्पणलक्षणात् परकृताभिचारव्यावृत्त्युपयोगिनि वर्मणि दैवस्यारोपात्परिणामालङ्कारश्च । पाञ्चाली रीतिः । ओजो गुणः । वसन्ततिलकं वृत्तम् । मया नाशितं ... वदित्यादि दैवममृष्यमानमित्यन्तं राक्षसस्योपायाऽपायशङ्का ॥ ८ ॥

ततः प्रविशतीति । ततस्तदनन्तरं राक्षसचिन्तनानन्तरमित्यर्थः । कञ्चुकी वक्ष्यमाणलक्षणः पात्रविशेषः प्रविशति रङ्गस्थानमिति शेषः । उक्तञ्च लक्षणं दर्पणे यथा—

अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः ।

कञ्चुकी—

कामं नन्दमिव प्रमथ्य जरया चाणक्यनीत्या यथा
धर्मो मौर्य्य इव, क्रमेण, नगरे नीतः प्रतिष्ठां मयि ।
तं सम्प्रत्युपचीयमानमपि मे लब्धान्तरः सेवया
लोभो राक्षसवज्जयाय यतते, जेतुं न शक्नोति च ॥ ९ ॥

( दृष्ट्वा ) अयममात्यराक्षसः । ( परिक्रम्य उपसृत्य च । ) इदममात्यराक्षसस्य गृहम् । प्रविशामि । ( प्रविश्यावलोक्य च ) अमात्य ! स्वस्ति भवते ।

---

सर्वकार्यार्थकुशलः कञ्चुकीत्यभिधीयते ॥ इति ।

**काममिति** । चाणक्यस्य कौटिल्यस्य नीतिर्नयश्चाणक्यनीतिस्तया चाणक्यनीत्या यथा कौटिल्यनयेनेव जरया वार्द्धक्येन नन्दं तदाख्यनृपमिव कामं विषयाऽभिलाषं प्रमथ्य सम्मर्द्य परिभूयेत्यर्थः । क्रमेण ( प्रकृत्यादित्वात्तृतीया ) नगरे कुसुमपुरे मौर्ये इव चन्द्रगुप्त इव धर्मः सुकृतं मयि प्रतिष्ठां स्थितिं नीतः प्रापितः, जरायां विषयौदासीन्येन कामं परित्यज्य धर्ममेव सेवितुमुत्सहे इति भावः । सम्प्रति इदानीं सेवया मलयकेतुशुश्रूषया उपचीयमानं वर्द्धमानं तं मौर्यम् अनु लक्षीकृत्य लब्धान्तरः प्राप्तावसरः राक्षस इव लब्धान्तरः प्राप्तावकाशो मे मम लोभो विषयाऽभिलाष उपचीयमानं वर्द्धिष्णुं तं धर्मं जयाय जेतुमित्यर्थः ( तुमर्थाच्च भाववचनादिति चतुर्थी ) यतते उद्युङ्क्ते, च पुनः किन्त्वित्यर्थः । जेतुं न शक्नोति समर्थो भवति । वार्द्धके सुकृताधिक्येन सुकृतमनादृत्य मयि स्थितिं कर्तुमीहते किन्तु विषयौदासीन्येन न धर्माऽनादरणे समर्थः, एवं चन्द्रगुप्तपराभवकाङ्क्षी राक्षसस्तं पराभवितुमीहते किन्तु चाणक्यबुद्धिमाहात्म्येन न समर्थो भवतीति भावः । एतत्कञ्चुकिनिर्वेदेन चाणक्यनयेन राक्षसप्रयत्नस्य भाव्युपमर्दसूचनम् । नन्दमिव मौर्य इव राक्षसवदित्यादौ सादृश्यार्थप्रतिपादकेववच्छब्दसत्त्वादुपमालंकारः । जयेच्छादिरूपाऽप्रस्तुतभटव्यवहारस्य प्रस्तुतकञ्चुकिलोभे समारोपणात्समासोक्त्यलंकारश्च । अत्र वैदर्भी रीतिः । प्रसादगुणः । शार्दूलविक्रीडितं छन्दः ॥ ९ ॥

**परिक्रम्येति** । परिक्रम्य संचर्य उपसृत्य समीपमेत्य इदं दृश्यमानम् अमात्यराक्षसस्य मन्त्रिराक्षसस्य गृहं सद्म वर्तत इति शेषः । प्रविशामि अभ्यन्तरं

राक्षसः—आर्य्य जाजले ! अभिवादये । प्रियंवदक ! आसनम् अत्रभवत उपनय ।

पुरुषः—एदं आसणं उपविसदु अज्जो । ( १ )

कञ्चुकी—( नाट्येनोपविश्य ) । अमात्य ! कुमारो मलयकेतुरमात्यं विज्ञापयति—"चिरात्प्रभृत्यार्य्यः परित्यक्तोचितशरीरसंस्कार इति पीड्यते मे हृदयम् । यद्यपि स्वामिगुणाः सहसा न शक्यन्ते विस्मर्त्तुं तथापि मद्विज्ञापनां मानयितुमर्हत्यार्यः ।" ( इत्याभरणानि दर्शयित्वा । ) अमात्य ! इमान्याभरणानि कुमारेण स्वशरीरादवतार्य्य प्रेषितानि, धारयितुमर्हत्यार्य्यः ।

---

( १ ) इदमासनमुपविशत्वार्य्यः ।

---

गच्छामि प्रविश्यान्तर्गत्वाऽवलोक्य दृष्ट्वा च भवने तुभ्यं स्वस्ति कल्याणं भूयादिति शेषः ।

आर्येति । अभिवादये प्रणमामि त्वामिति शेषः । प्रियम्वदकः राक्षसानुचरस्य संज्ञेयम् । आसनमास्तरणमुपनय आनय उपवेष्टुमिति शेषः ।

नाट्येनेति । नाट्येन नटोचितव्यापारेण भङ्गीविशेषेणेत्यर्थः ।

ताण्डवं नटनं नाट्यमित्यमरः ।

आसन इति शेषः । कुमारः पर्वतकपुत्रो मलयकेतुः अमात्यं मन्त्रिणं विज्ञापयति चिरात्प्रभृति बहुदिवसतः आर्यो भवान् परित्यक्तो वर्जितोऽगृहीतः परिहृत इति यावत् उचितो योग्यः संस्कारः कायस्य प्रधानं वैमल्यं वा येन स परित्यक्तोचितसंस्कारः परिवर्जितयोग्यालंकरणः इति हेतोर्मे मम हृदयं चित्तं पीड्यते । यद्यपि स्वामिनो राज्ञो नन्दस्य गुणा दयादाक्षिण्यप्रभृतयः सहसा हठात् विस्मर्त्तुं न शक्यन्ते तथापि मद्विज्ञापनां प्रार्थनामार्यो भवान् मानयितुं स्वीकर्त्तुमर्हति इत्युक्त्वा आभरणान्यलङ्करणानि प्रदर्श्य दर्शयित्वा इमानि प्रत्यक्षदृश्यमानानि आभरणानि कुमारेण मलयकेतुना स्वशरीरात् निजकायादवतार्य प्रेषितानि अमात्यो भवान् धारयितुमर्हति ।

राक्षसः—आर्य ! जाजले ! विज्ञाप्यतां मद्वचनात् कुमारः, विस्मृता मया स्वामिगुणा भवद्गुणपक्षपातेन । किन्तु—

न तावन्निर्वीर्यैः परपरिभवाक्रान्तिकृपणै-
र्वहाम्यङ्गैरेभिः प्रतनुमपि संस्काररचनाम् ।
न यावन्निःशेषक्षयितरिपुचक्रस्य निहितं
सुगाङ्गे, हेमाङ्कं, नृवर ! तव सिंहासनमिदम् ॥ १० ॥

---

आर्येति । हे आर्य ! जाजले ( कञ्चुकिसम्बोधनमिदम् ) कञ्चुकिन् ! मद्वचनान्मदुक्त्येत्यर्थः । कुमारो मलयकेतुर्विज्ञाप्यतामभिधीयताम् । भवतो गुणा दयादाक्षिण्यप्रभृतयो भवद्गुणास्तेषु पक्षपात आसक्तिस्तेन ( हेतुतृतीयान्तमिदम् ) स्वामिनः प्रभोर्नन्दस्य गुणा उक्तरूपा विस्मृता अविदितप्राया एव मयेति शेषः । त्वयि ततोऽप्यधिकदयादाक्षिण्यादिसद्भावादिति भावः ।

न तावदिति । नृणां वरो नृवरस्तत्सम्बोधने हे नृवर ! राजन्, यावत् यत्कालपर्यन्तं निर्नास्ति शेषोऽवशिष्टभागो यत्र तन्निश्शेषं समग्रं तद्यथा स्यात्तथा क्षयितं विनाशितं रिपूणां शत्रूणां चक्रं साकल्यं ( समुदायो ) येन स तथोक्तस्तस्य तथोक्तस्य तव भवतः इदं बुद्धिस्थं हेमाङ्कं स्वर्णभूषितं सिंहासनं भद्रासनं सुगाङ्गे तन्नामकप्रासादे सुष्ठुशोभनं गाङ्गं गङ्गाजलं यस्मिन्तत्सुगाङ्गं तस्मिन् सुगाङ्गे नगरे न निहितं स्थापितं भवेत् । तावत् तत्कालपर्यन्तं परेषां शत्रूणां परिभवस्य तिरस्कारस्याऽऽक्रान्त्याऽऽक्रमणेन कृपणैर्दीनैः ।

कदर्ये कृपणक्षुद्रकिंपचानमितंपचाः ।
निःस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः ॥

इत्यमरः । निर्वीर्यैः पराक्रमरहितैर्दुर्बलैरित्यर्थः एभिरङ्गैरवयवैः प्रतनुमपि स्वल्पमपि संस्काररचनां भूषणादिपरिधानात्मिकां न वहामि न धारयामि । शत्रुपराभूतानां संस्काररचना नैवोचितेति भावः । निर्वीर्यादिसंस्काररचनापरित्यागोपयुक्तविशेषणाभिधानात्—

उक्तैर्विशेषणैः साऽभिप्रायैः परिकरो मतः ।

इति दर्पणस्थलक्षणादत्र परिकरालंकारः । ओजो गुणः । पाञ्चाली रीतिः । शिखरिणी छन्दः ॥ १० ॥

कञ्चुकी—अमात्य ! त्वयि नेतरि सुलभमेतत् कुमारस्य, तत् प्रतिमान्यतां कुमारस्य प्रथमः प्रणयः ।

राक्षसः—आर्य्य ! कुमार इवानतिक्रमणीयवचनो भवानपि, तदनुष्ठीयते कुमारस्याज्ञा ।

कञ्चुकी-(नाट्येन भूषणानि परिधाप्य ।) स्वस्ति भवते, साधयाम्यहम् ।

राक्षसः—आर्य्य ! अभिवादये । ( कञ्चुकी निष्क्रान्तः । ) प्रियंवदक ! ज्ञायतां कोऽयमस्मद्दर्शनार्थी द्वारि तिष्ठति ।

---

**अमात्य इति ।** अमात्ये मन्त्रिणि त्वयि भवति नेतरि नायके सति ( यस्य च भावेनेति सति सप्तमी ) कुमारस्य मलयकेतोरेतत्‌छत्राङ्काधिकरणकसिंहासनस्थापनं सुलभं सुकरम् , तत्तस्मात्कारणात् कुमारस्य पर्वतकात्मजस्य मलयकेतोः प्रथमो मुख्योऽद्वितीयः प्रणयः प्रार्थना प्रतिमान्यतां स्वीक्रियताम् ।

**आर्येति ।** आर्य ! कुमार इव मलयकेतुरिव भवानपि त्वमपि नातिक्रमणीयमुल्लंघनीयं वचनं वाक्यं यस्य सोऽनतिक्रमणीयवचनोऽनुल्लंघनीयशासन इत्यर्थः, ( अस्तीति शेषः ) । तत्तस्माद्धेतोः कुमारस्य मलयकेतोराज्ञा शासनमनुष्ठीयते क्रियते ।

**नाट्येनेति ।** नाट्येन नटोचितव्यापारविशेषेण शरीरभङ्ग्यादिनेत्यर्थः । भूषणानि अलंकरणानि परिधाप्य संनिवेश्य अङ्गेष्विति शेषः । भवते तुभ्यं स्वस्ति कल्याणं भूयादिति शेषः ( नमः स्वस्तीति चतुर्थी ) अहं साधयामि कार्यसम्पादनाय गच्छामीत्यर्थः । नाटके णिजन्तसाधिर्गमनार्थकः ।

प्रायेण ण्यन्तकः साधिर्गमः स्थाने प्रयुज्यते ।

इति दर्पणोक्तवचनात् ।

**निष्क्रान्त इति ।** प्रस्तुतराक्षसोपयोगित्वादिदं प्रस्तुतोपयोगि समाधानवचनं संग्रहः । यद्वा प्रस्तुतचाणक्योपायात्मकबीजोपयोगि इदं भूषणदानं समाधानवचनम् , अनुपदमेव राक्षसेन सिद्धार्थकाय पारितोषिकत्वेन दास्यमानैतद्भूषणनिर्वहणे कूटलेखे उपयोक्ष्यमाणत्वात् ।

**प्रियम्वदकेति ।** हे प्रियम्वदक ! अस्माकं दर्शनमस्मद्दर्शनं तदर्थयते याचते इत्यस्मद्दर्शनार्थी मद्दर्शनाभिलाषुकः कोऽयं किंनामकः द्वारि प्रतीहारभूमौ तिष्ठति

प्रियंवदकः—जं अज्जा आणवेदित्ति । ( परिक्रम्याहितुण्डिकं दृष्ट्वा । ) णं अज्ज ! को तुमं ? ( १ )

आहितुण्डिकः—भद्द ! अहं क्खु आहितुण्डिओ जिण्णबिसो णाम, इच्छामि अमच्चरक्खसस्स पुरदो सप्पेहिं खेलिदुं । ( २ )

प्रियंवदकः—चिट्ठ, जाव अमच्चस्स णिवेदेमि । ( राक्षसमुपसृत्य । ) अज्ज ! एसो क्खु सप्पोवजीवी इच्छदि सप्पेहिं अमच्चस्स पुरदो खेलिदुं ( ३ )

राक्षसः—( वामाक्षिस्पन्दनं सूचयित्वा आत्मगतम् । ) कथं प्रथममेव सर्पदर्शनम् !! ( प्रकाशम् । ) प्रियंवदक ! न नः कुतूहलमस्ति सर्पदर्शने, तत् परितोष्य विसर्जयैनम् ।

---

( १ ) यदार्य आज्ञापयतीति । ननु आर्य कस्त्वम् ?

( २ ) भद्र ! अहं खल्वाहितुण्डिको जीर्णविषो नाम, इच्छाम्यमात्यराक्षसस्य पुरतः सर्पैः खेलितुम् ।

( ३ ) तिष्ठ, यावदमात्यस्य निवेदयामि । आर्य ! एष खलु सर्पोपजीवी इच्छति सर्पैरमात्यस्य पुरतः खेलितुम् ।

---

वर्तत इति ज्ञायतां बुध्यताम् ।

जं अज्ज इति । आर्यः श्रेष्ठो भवान् यत् आज्ञापयति आदिशति इतीत्यभिधाय परिक्रम्य संचर्य आहितुण्डिकं तदाख्यसर्पक्रीडनोपजीविनं दृष्ट्वा समवलोक्य ननु सम्बोधने हे आर्य ! श्रेष्ठ त्वं भवान् कः किंनामकः इति कथयेति शेषः ।

वामाक्षिस्पन्दनमिति । वामस्य दक्षिणेतरस्य सव्यस्येत्यर्थः । अक्ष्णो नेत्रस्य स्पन्दनमीषत्कम्पनं सूचयित्वा अभिनयं कृत्वेत्यर्थः । आत्मगतमनतिस्पष्टं ( क्रियाविशेषणमेतत् ) कथयतीति शेषः । कथं कुतः कस्मात्कारणादित्यर्थः । प्रथमं पूर्वमेव सर्पस्य व्यालस्य दर्शनमवलोकनं जातमिति शेषः । शत्रुपराजयकामनया युद्धोद्योगवतो मे पूर्वमेवाशुभदर्शनं जातमिति भावः । प्रकाशं ( क्रियाविशेषणम् ) सुस्पष्टं यथा स्यात्तथा ब्रवीतीति शेषः । प्रियम्वदक ! नोऽस्माकं सर्पेषु व्यालेषु कौतूहलमौत्कण्ठ्यं न नास्तीत्यर्थः । तत्तस्मात्कारणादेनं व्यालोपजीविनं परितोष्य धनादिदानेन सन्तुष्टं कृत्वा विसर्जय इतो बहिष्कुरु ।

प्रियंवदकः--जं अज्जो आणवेदि । ( परिक्रम्याहितुण्डिकमुपसृत्य । ) भद्द ! एसो क्खु दे अमच्चो अदंसणेण प्पसादं करेदि, ण उण दंसणेण । ( १ )

आहितुण्डिकः—भद्द ! विण्णवेहि मम वअणेण अमच्चं,-"ण केवलं अहं सप्पोवजीवी, पाउअकवी क्खु अहं, ता जइ मे दंसणेण अमच्चो प्पसादं ण करेदि, ता एदं पि पत्तअं वाचेदुं प्पसीददु" त्ति ( २ ) ( पत्रमर्पयति । )

प्रियंवदकः— ( पत्रं गृहीत्वा राक्षसमुपसृत्य । ) अमच्च ! एसो क्खु आहितुण्डिओ विण्णवेदि,—"ण केवलं अहं सप्पोवजीवी, पाउअकवी क्खु अहं, ता जइ मे दंसणेण अमच्चो प्पसादं ण करेदि, ता एदं पि प-

---

( १ ) यदार्य्य आज्ञापयति । भद्र ! एष खलु ते अमात्योऽदर्शनेन प्रसादं करोति न पुनर्दर्शनेन ।

( २ ) भद्र ! विज्ञापय मम वचनेनामात्यं—"न केवलमहं सर्पोपजीवी, प्राकृतकविः खल्वहं, तस्माद् यदि मे दर्शनेनामात्यः प्रसादं न करोति, तदा एतदपि पत्रकं वाचयितुं प्रसीदतु" इति ।

---

प्रियम्वदक इति । तथा भवदीयनिदेशं करोमीत्यर्थः इतीत्यभिधाय उपसृत्य समीपं गत्वा सर्पोपजीविनमिति शेषः । भद्र ! कल्याणिन् ! एष खलु अयममात्यो राक्षसः अदर्शनेन दर्शनमन्तरेणैव सर्पक्रीडनमन्तरेणैवेत्यर्थः प्रसादमुपहारं करोति ददाति न पुनर्दर्शनेन सर्पक्रीडने दृष्ट्वेत्यर्थः ।

भद्रेति । भद्र ! कल्याणिन्, मम वचनेन मदुक्त्या अमात्यं मन्त्रिणं विज्ञापय निवेदय, अहं न केवलं सर्पोपजीवी व्यालक्रीडनवृत्तिः किन्तु अहं प्राकृतकविः स्वतःसिद्धज्ञानयुक्तः प्राकृतभाषाकोविदः, प्राकृतभाषायां काव्यप्रणेतेत्यर्थः । ( प्रकृतिपरिज्ञाने त्वया यो नियुक्तः सोऽहमिति ध्वनिः ) । तत्तस्मात्कारणाद्यदि अमात्यो राक्षसो मे मम दर्शनेन सर्पक्रीडनावलोकनेन प्रसादमुपहारं न करोति ददाति तदा एतत्पत्रमपि वाचयितुं पठितुं प्रसीदतु प्रसन्नो भवतु ।

प्रियम्वदक इति । पत्रं सर्पोपजीविप्रदत्तं दलं गृहीत्वा समादाय राक्षसं तदाख्यमन्त्रिणमुपसृत्य प्राप्य एष खलु अयमाहितुण्डिकः व्यालोपजीवी विज्ञाप-

त्तअं वाचेदुं प्पसाददु" त्ति । (१)

राक्षसः—( पत्रं गृहीत्वा वाचयति । )—

पाऊण णिरबसेसं कुसुमरसं अत्तणो कुसलदाए ।
जं उग्गिरेइ भमरो तं अण्णाणं कुणइ कज्जं (२) ॥ ११ ॥

---

(१) अमात्य ! एष खलु आहितुण्डिको विज्ञापयति—"न केवलमहं सर्पोपजीवी, प्राकृतकविः खल्वहं, तस्माद् यदि मे दर्शनेनामात्यः प्रसादं न करोति, तदा एतदपि पत्रकं वाचयितुं प्रसीदतु" इति ।

(२) पीत्वा निरवशेषं कुसुमरसमात्मनः कुशलतया ।
यदुद्गिरति भ्रमरस्तदन्येषां करोति कार्य्यम ॥

---

यति प्रार्थयति केवलमहं सर्पोपजीवी न किन्तु प्राकृतकविः खल्वहं तस्मात्कारणात यदि मे मम दर्शनेन अमात्यः सचिवः प्रसादं न करोति प्रसन्नो न भवति तदा एतत्पत्रमपि वाचयितुं प्रसीदतु प्रसन्नो भवतु ।

पीत्वेति । आत्मनः स्वस्य कुशलतया नैपुण्येन निर्नास्त्यवशेषो यत्र तन्निरव-शेषं समग्रं ( क्रियाविशेषणमिदम् ) कुसुमस्य पुष्पस्य रसं सारभागं मधु पीत्वा भ्रमरो मधुकरः यन्मधु उद्गिरति बहिर्निःसारयति तन्मधु उद्गीर्यमाणं सत् अ-न्येषां मनुष्याणां कार्यं दैवपैत्रकं कृत्यं करोति निष्पादयति ।

पक्षान्तरे—भ्रमर इवाचरति भ्रमरति ततः पचाद्यचि भ्रमरः भ्रमरसदृशाचरण-कर्ता भ्रमरशब्दस्य स्वसदृशाचरणकर्तरि शक्त्या बोक्तार्थः । दूतः आत्मनः स्वस्य कुशलतया दूतोचितचातुर्येण निरवशेषं समग्रं कुसुमस्य कुसुमपुरस्य रसं वृत्तं गुप्त-रहस्यतन्त्रं वा पीत्वा ज्ञात्वा यदुद्गिरति कथयति तदुद्गीर्यमाणं कथ्यमानं दूतव-चनमिति यावत् अन्येषां दूतप्रेषकाणां कार्यं सन्धिविग्रहादिकृत्यं करोति साधय-ति । सारग्राही भ्रमरसदृशोऽहं निजचातुर्यप्रभावात्सकलकुसुमपुरोदन्तज्ञ इति निवे-दितुस्तव तदाकर्णनेन सर्वमीप्सितकार्यं सेत्स्यतीति भावः । अप्राकरणिकभ्रमरकर्तृ-ककुसुमरसकर्मकपानानन्तरं मधूद्गिरणतः प्राकरणिकस्य स्वस्य कुसुमपुरोदन्तोद्गिर-णप्रतीत्या पद्येऽस्मिन्नलङ्कारोऽप्रस्तुतप्रशंसा नाम । उक्तञ्च लक्षणं तस्य काव्यप्रकाशे कुवलयानन्दे च—

अप्रस्तुतप्रशंसा या सा सैव प्रस्तुताश्रया । का० प्र०

राक्षसः—( आत्मगतम् । ) अये! कुसुमपुरवृत्तान्तज्ञः अहं भवत्प्रणिधिश्चेति गाथार्थः। आः कार्य्यव्यग्रत्वात् मनसः प्रभूतत्वाच्च प्रणिधीनां विस्मृतम्, इदानीं स्मृतिरुपलब्धा। व्यक्तम् आहितुण्डिकच्छद्मना कुसुमपुरादागतेन विराधगुप्तेनानेन भवितव्यम्। ( प्रकाशम्। ) प्रियंवदक! प्रवेशय एनं, सुकविः एषः, श्रोतव्यमस्मात् सुभाषितम्।

प्रियम्वदकः। जं अज्जो आणवेदित्ति। ( आहितुण्डिकमुपसृत्य। ) उपसप्पदु अज्जो (१)

आहितुण्डिकः—( नाट्येनोपसृत्यावलोक्य च संस्कृतमाश्रित्य स्वगतम् ) अये! अयममात्यराक्षसस्तिष्ठति। स एषः—

---

(१) यदार्य्य आज्ञापयति। उपसर्पत्वार्य्यः।

---

अप्रस्तुतप्रशंसा स्यात्सा यत्र प्रस्तुताश्रया।
एकः कृती शकुन्तेषु योऽन्यं शक्रान्न याचते॥ कु०
वैदर्भी रीतिः। प्रसादगुणः। आर्या वृत्तम्॥ ११॥

आत्मगतमिति। ( क्रियाविशेषणमेतत् ) अनतिस्पष्टं यथा स्यात्तथा वदतीतिस्यर्थः। अये, ( कोमलालापेऽव्ययमिदम् ) कुसुमपुरस्य वृत्तान्तं जानातीति कुसुमपुरवृत्तान्तज्ञः ( आतोऽनुपसर्गे कः, इति कः ) कुसुमपुरसम्बन्धिसकलोदन्तवेत्तेत्यर्थः। ( पूर्वं द्वारिकस्तिष्ठतीति कुसुमपुरोदन्तविद्दूतागमनस्य सञ्चिन्तितस्य प्राप्तेरियं सञ्चिन्तितार्थप्राप्तिः क्रमः )। अहं भवतः प्रणिधिर्भवत्प्रणिधिर्दूत इति गाथाया आर्याछन्दसा परिणद्धाया गीतिकाया अर्थस्तात्पर्यम्। आः इति स्मरणार्थकमव्ययम्। कार्येषु कृत्येषु व्यग्रः आकुलः कार्यव्यग्रः तस्य भावः कार्यव्यग्रत्वं तस्मात्कार्यव्यग्रत्वात्। ( इष्टजनानुसन्धानात्मकमविवलनामकमिदमङ्गम् ) मनसश्चित्तस्य कार्येषु व्यग्रत्वाद्व्याकुलत्वाद्धेतोः प्रणिधीनां चराणां प्रभूतत्वादाधिक्याच्च हेतोः स्वप्रेषितचरगमनं विस्मृतम्; इदानीं साम्प्रतं स्मृतिरुपलब्धा प्राप्ता कुसुमपुरवास्तव्यप्रकृतिचित्तपरिज्ञानाय मया नियुक्तोऽयं चर इति स्मृतमित्यर्थः व्यक्तं स्पष्टं यथार्थतः आहितुण्डिकच्छद्मना व्यालोपजीविव्याजेन विराधगुप्तेनैतदाख्येनानेन चरेण भवितव्यम्। प्रकाशं स्पष्ट' क्रियाविशेषणमिदम्। प्रियम्वदक

वामां बाहुलतां निवेश्य शिथिलं कण्ठे निवृत्तानना
स्कन्धे दक्षिणया बलान्निहितयाप्यङ्के पतन्त्या मुहुः ।

---

एनं प्रतीहारभूमिवर्त्तिनं चरं प्रवेशय मत्सन्निधिं प्रापय । एष सुकविः सुपण्डितः, अस्मात्सुकवेः सुभाषितं सुवाक्यं श्रोतव्यम् आकर्णनीयम् ।

**वामामिति** । श्रीर्लक्ष्मीः यस्य राक्षसस्योद्यममुद्योगमाशङ्कते तच्छीला उद्यमाशङ्किनी राक्षसोद्योगभीता सती वामां दक्षिणेतरां ( पत्युर्वामपार्श्वे स्त्रीणां शयनविधानस्य प्रसिद्धत्वाद्वामबाहोरेव प्राक् पतिकण्ठाधिकरणतानिरूपिताऽऽधेयत्वस्य सम्भव इति भावः ) बाहुलतां भुजवल्लीं ( बल्लीवेष्टनधर्मस्य भुजे सत्वात्तत्र तत्त्वारोपः ) मौर्यस्य चन्द्रगुप्तस्य निवृत्तं परावृत्तमाननं मुखं यस्यास्सा तादृशी पराङ्मुखी सती बलात् हठात् स्कन्धे अंसप्रदेशे निहितया मुहुर्वारम्वारम् अङ्के क्रोडे पतन्त्या स्खलन्त्या दक्षिणया वामेतरया बाहुलतयेति शेषः । ( हेतुतृतीयान्तमिदम् ) यद्वा तयोपलक्षिता सतीति शेषः । गाढालिङ्गस्य दृढपरिष्वङ्गस्य सङ्गेन संश्लेषेण पीडितं उरसि वक्षसि चन्द्रगुप्तस्येति शेषः । अधुनापि सम्प्रत्यपि न कुरुते न स्थापयति । भुजद्वयेन गाढमालिङ्ग्य न शेते भययुक्तायास्तथाऽऽलिङ्गनपूर्वकशयनाऽसम्भवात् । ( लक्ष्म्याश्चन्द्रगुप्तेऽनुरागाभावे राक्षसकर्तृकाकर्षणभीतेरेव हेतुत्वमिति ध्वनिः ) । यथा पतिसमालिङ्गिता भयविह्वलाऽकामा स्त्री न पतिमालिङ्गति तथैव श्रीः मौर्य नालिङ्गतीति भावः । पतिसमालिङ्गिताऽप्यनुरागशून्यहृदया कामिनी पतिमिव श्रीर्न चन्द्रगुप्तमालिङ्गतीत्यर्थावधारणेन श्रियः प्राकरणिकत्वेन तत्राऽप्राकरणिकाऽननुरक्तनायिकाकर्तृकभीतिप्राचुर्यहेतुकदृढालिङ्गात्मककार्याभावसमारोपणादत्र श्लोके समासोक्तिर्नामालङ्कारः । उक्तञ्च तल्लक्षणं काव्यप्रकाश–साहित्यदर्पण–कुवलयानन्देषु यथा—

परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः । का० प्र० ।

प्राकरणिकाऽप्राकरणिकार्थद्वयसम्बलितविशेषणवाचिमात्रशब्दद्वारा अप्राकरणिकगतव्यवहारात्मकार्थस्योक्तिर्बोधनं प्राकरणिकोदन्ते आरोपो व्यञ्जनया प्रतिपादनमिति यावत् समासोक्तिरिति तदर्थः ।

समासोक्तिः समैर्यत्र कार्यलिङ्गविशेषणैः ।
व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः ॥ सा० द०

गाढालिङ्गनसंगपीडितमुखं यस्योद्यमाशङ्किनी
मौर्य्यस्योरसि नाधुनाऽपि कुरुते वामेतरं श्रीः स्तनम् ॥१२॥

( प्रकाशम् । ) जअदु जअदु, अमच्चो । ( १ )

राक्षसः—( विलोक्य । ) "अये विराधः !–" ( इत्यर्द्धोक्ते विरुद्धस्मृतिः ) प्रियंवदक ! भुजंगैः इदानीं विनोदयामः, तद् विश्रम्यतां परिजनेन, त्वमपि स्वमधिकारमशून्यं कुरु ।

प्रियम्वदकः—जं अमच्चो आणवेदित्ति । ( २ )

( सपरिवारो निष्क्रान्तः ) ।

---

( १ ) जयति जयत्यमात्यः ।

( २ ) यदमात्य आज्ञापयतीति ।

---

प्रस्तुताप्रस्तुतसाधारणैः कार्यलिङ्गविशेषणैः प्रस्तुतेऽन्यस्याऽप्रस्तुतस्य वस्तुनो व्यवहारसमारोपः समसोक्तिरिति तदर्थः ।

समासोक्तिः परिस्फूर्त्तिः प्रस्तुतेऽप्रस्तुतस्य चेव ।
अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः । कु०

स च समासोक्तिरलङ्कारः उद्यमाशङ्किनीति पदार्थहेतुककाव्यलिङ्गेन सङ्कीर्णः पाञ्चाली रीतिः । प्रसादगुणः । शार्दूलविक्रीडितं वृत्तम् ॥ १२ ॥

**प्रकाशमिति** । ( क्रियाविशेषणमेतत् ) सुस्पष्टं यथा स्यात्तथा ब्रवीतीत्यर्थः । आर्यः श्रेष्ठो भवान् जयति जयति जययुक्तो भवत्वित्यर्थः ।

**विलोक्येति** । दृष्ट्वेत्यर्थः, अये विराध परिजनं प्रति रहस्यगोपनार्थमद्धोक्तिः । विकृतो राधो वेष आकार इति यावत् यस्य स विराध एतदाख्यः । विरुद्धा जाता स्मृतिः स्मरणं यस्य सः । स्वस्यात्मन अधिकारो नियोगः स्वाधिकारस्तमशून्यं कुरु प्रतिपालयेत्यर्थः, अन्यप्रवेशनिषेधं कुर्वन् द्वारि सावधानस्तिष्ठेत्यर्थः सर्पक्रीडनोपजीविच्छलेन दौत्येन प्रेरितविराधगुप्तस्य प्रियम्वदकनिकटे नामोच्चारणान्मन्त्रप्रकाशनभीत्या अर्द्धोक्ते तद्रक्षणाय प्रियम्वदकं प्रति छलेन ततोऽपसारणमिति बोध्यम् ।

सपरिवारः सपरिजनो निष्क्रान्तो निर्गत इत्यर्थः ।

राक्षसः—सखे ! विराधगुप्त ! इदमासनमास्यताम् ।

विराधगुप्तः—यदाज्ञापयत्यमात्य इति । ( नाट्येनोपविष्टः )

राक्षसः—( सखेदं निर्वर्ण्य ) अहो! देवपादपद्मोपजीविनो जनस्येयमवस्था । ( इति रोदिति ) ।

विराधगुप्तः—अमात्य ! अलं शोकेन, नातिचिरादमात्योऽस्मान् नूनं पुरातनीमवस्थामारोपयिष्यति ।

राक्षसः—सखे ! विराधगुप्त ! वर्णय इदानीं कुसुमपुरवृत्तान्तम् ।

विराधगुप्तः—अमात्य ! विस्तीर्णः कुसुमपुरवृत्तान्तः तदाज्ञापय कुतः प्रभृति कथयामि ?

---

सखे इति । हे सखे ! सुहृद् इदं सम्बोधनमतिशयादरसूचनार्थम् । इदं प्रत्यक्षदृश्यमानं आसनमास्तरणमस्तीति शेषः, तत्र आस्यतामुपविश्यताम् ।

नाट्येन नटोचितव्यापारविशेषेण शरीरभङ्गयात्मकेनेत्यर्थः ।

सखेदमिति । इदं क्रियाविशेषणम् । खेदेन शोकेन सहितं सखेदं यथा स्यात्तथा निर्वर्ण्य दृष्ट्वा ।

निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम् । इत्यमरः ।

अहो आश्चर्यम् , देवस्य राज्ञो नन्दस्य पादपद्मं चरणकमलमुपजीवतीति देवपादपद्मोपजीवी तस्य तथोक्तस्य इयमेतादृशी अवस्था दशा अस्ति वा जातेति शेषः । इत्युक्त्वा रोदिति क्रन्दति ।

अमात्येति । अमात्य ! मन्त्रिन् शोकेन खेदेन अलं व्यर्थम् शोको न विधेयः । नातिचिरात् अतिशीघ्रमेवेत्यर्थः, अमात्यो मन्त्री भवान् नूनं निश्चितमस्मान् पुरातनीं पूर्वसदृशीमवस्थां दशामारोपयिष्यति प्रापयिष्यति पुरा यादृशी दशा आसीत् पुनश्च तादृश्येव त्वत्कृपया भविष्यतीत्यर्थः ।

सखे इति । हे सखे ! मित्र, इदानीं सम्प्रति कुसुमपुरवृत्तान्तं वर्णय कथय, ( इयं व्यापिनी कथा पताका । )

अमात्येति । हे अमात्य ! मन्त्रिन् कुसुमपुरस्य वृत्तान्तः कुसुमपुरवृत्तान्तः कुसुमपुरोदन्तमित्यर्थः । विस्तीर्णः दीर्घः प्रचुरमित्यर्थः । तत्तस्मात्कारणात् आज्ञापय नियोगं कुरु कुतः प्रभृति कस्मादारभ्य कथयामि ब्रवीमि, वर्णयामीति पाठेऽपि स एवार्थः ( अत्र लोडर्थलक्षणे चेति लट् ) ।

राक्षसः—सखे! चन्द्रगुप्तस्य तावत् नगरप्रवेशात्प्रभृति, अस्मत्प्रयुक्तैस्तीक्ष्णरसदायिभिः किमनुष्ठितमित्यादितः श्रोतुमिच्छामि।

विराधगुप्तः—एष कथयामि। अस्ति तावत् शक-यवन-किरात-काम्बोज-पारसीक-बाह्लीकप्रभृतिभिश्चाणक्यमतिपरिगृहीतैश्चन्द्रगुप्तपर्वतेश्वरबलैरुदधिभिरिव, प्रलयकालचलितसलिलैः समन्तादुपरुद्धं कुसुमपुरम्।

राक्षसः—( शस्त्रमाकृष्य ससम्भ्रमम्। ) मयि स्थिते, कः कुसुमपुरमुपरोत्स्यति? प्रवीरक! प्रवीरक! क्षिप्रमिदानीम्—

---

सख इति। हे सखे! तावत् प्रथमम् वाक्यालंकारार्थकोऽत्र वा तावच्छब्दः, चन्द्रगुप्तस्य मौर्यस्य नगरे प्रवेश आगमनं नगरप्रवेशस्तस्मान्नगरप्रवेशात् प्रभृति नगरप्रवेशमारभ्येत्यर्थः ( अत्र प्रभृतिशब्दयोगे पञ्चमी ) अस्माभिः प्रयुक्ता अस्मत्प्रयुक्तास्तैरस्मत्प्रयुक्तैः मन्नियुक्तैरित्यर्थः। तीक्ष्णरसं दातुं शीलं येषां ते तीक्ष्णरसं ददति तच्छीला वा तीक्ष्णरसदायिनस्तैस्तीक्ष्णरसदायिभिः विषप्रदानशीलैरित्यर्थः। किमनुष्ठितं किं कृतम् इति एतत् वृत्तमित्यर्थः। आदिः प्रथमं यस्य स इत्यादिस्तस्मादित्यादितः श्रोतुमाकर्णितुमिच्छामि वाञ्छामि।

एष कथयामीति। एतच्छब्देन सन्निकृष्टत्वाद्वक्तुः परामर्शादेषोऽहं भवदाज्ञामधिगम्य कुसुमपुरोदन्तं वर्णयामीत्यर्थः। तथा हि, चाणक्यमतिपरिगृहीतैः कौटिल्यबुद्धिसंचालितैः शक-यवन-किरात-काम्बोज--पारसीक--बाह्लीकाः प्रभृतिरादिर्येषां ते तथोक्तास्तैस्तथोक्तैः चन्द्रगुप्त--पर्वतेश्वरबलैः मौर्य--पर्वतेश्वरसैन्यैः प्रलये प्रलयकाले चलितं परिवर्द्धितं सलिलं तोयं येषां ते प्रलयकालचलितसलिलास्तैस्तथोक्तैः उदकानि धीयन्ते एषु इति उदधयः 'उदकस्योदः संज्ञायाम्' इति सूत्रेणोदकस्योदादेशः तैरुदधिभिः समुद्रैरिव समन्तात्सर्वतः चतुर्दिक्ष्वित्यर्थः। कुसुमपुरं तदाख्यं नगरं उपरुद्धं वेष्टितमस्ति ( अत्रास्तीति क्रियायाः वाक्यार्थः कल्प्यनुसन्धेयम्। )

शस्त्रमाकृष्येति। शस्त्रमसिमाकृष्य तूणीराद्बहिष्कृत्य ससम्भ्रमं ससन्देहमित्यर्थः ( क्रियाविशेषणमिदम् ) अयि सम्बोधनमिदं कोमलालापे, मयि स्थिते विद्यमाने कः किंनामकः पुरुषः कुसुमपुरम् उपरोत्स्यति उक्तविधसैन्यैः वेष्टयिष्यतीत्यर्थः। ( अत्र अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि इति सूत्रेण भूते लट् ) प्रवीर

प्राकारान् परितः शरासनधरैः क्षिप्रं परिक्षिप्यतां,
द्वारेषु द्विरदैः परद्विपघटाभेदक्षमैः स्थीयताम् ।
मुक्त्वा मृत्युभयं प्रहर्त्तुमनसः शत्रोर्बले दुर्बले,
ते निर्यान्तु, मया सहैकमनसो, येषामभीष्टं यशः ॥ १३ ॥

विराधगुप्तः—अमात्य ! अलमावेगेन ? वृत्तमिदं वर्ण्यते ।

राक्षसः—( निःश्वस्य ) कष्टं वृत्तमिदम् ? मया पुनर्ज्ञातं स एव

---

तत्काले सन्निहितानुचरसंज्ञेयम् । क्षिप्रं शीघ्रं इदानीं सम्प्रति ।

**प्राकारानिति** । शरा बाणा अस्यन्ते क्षिप्यन्ते यैस्तानि शरासनानि धनूंषि धरन्तीति धरास्तेषां धराः शरासनधरा धानुष्को धनुर्द्धारिणो योद्धार इति यावत् । तैः शरासनधरैः धानुष्कैः प्राकारान् प्राचीरान् परितः समन्तात् क्षिप्रं शीघ्रं परिक्रम्यताम् सञ्चर्यताम् (क्षिप्यतामिति पाठे क्षिप्रं शीघ्रम् परिक्षिप्यताम् क्षेपणीयम् अस्त्रमिति शेषः) परेषां शत्रूणां द्विपा हस्तिनः परद्विपास्तेषां घटा समूहः परद्विपघटा तस्या भेदे विदारणे क्षमैः समर्थैः द्वौ रदौ दन्तौ येषां ते द्विरदास्तैः द्विरदैः गजैः द्वारेषु स्थीयताम् द्वारसंरक्षणायेति शेषः । येषामस्मद्वीराणां यशः कीर्त्तिमभीष्टमीप्सितं ते वीरा एकमनसः अभिन्नहृदयाः मृत्युभयं मरणभीतिं त्यक्त्वा परित्यज्य दुर्बले निर्बले बलहीने शत्रौ रिपोर्बले सैन्ये प्रहर्तुं मनो येषां ते प्रहर्तुमनसः विनाशकामुकाः सन्तः मया सह निर्यान्तु निर्गच्छन्तु नगरादिति शेषः । ये वीराः कीर्त्तिकांक्षिणस्ते पुरद्वारसंरक्षणार्थं भटान् प्रबलहस्तिनश्च यथास्थानं संस्थाप्य अमरमात्मानमन्यमानाः सन्तः शत्रुसैन्यविजयप्रयोजनसम्पादनाय नगरान्निर्गच्छन्त्विति भावः । युद्धावसरे शत्रुबलाक्रमणशङ्कया स्वपुररक्षणाय यथास्थानं सैन्यसन्निवेशस्य योद्धुःस्वभावसिद्धत्वात् ( स्वाभाविकत्वात् ) अत्र स्वभावोक्तिनामाऽलङ्कारः यशोलाभहेतुकमत्कर्तृकगमने हेतुभूतयोः शरासनधरकर्तृकप्राकारकर्मकपरिक्रमणद्वाराधिकरणकद्विरदकर्तृकस्थित्योः पदार्थत्वेनाभिधानात्काव्यलिङ्गालङ्कारश्च, एतयोः संसृष्टिः अत्र वीरो रसः स्थायिभावः । गाडी रीतिः । ओजोगुणः । शार्दूलविक्रीडितं छन्दः ॥ १३ ॥

**अमात्येति** । हे अमात्य ! मन्त्रिन् आवेगेन क्रोधेन अलं व्यर्थम् इदं वृत्तं वृत्तान्तं वर्ण्यतेऽभिधीयते । न तु कुसुमपुरावरोधकाल इति न क्रोधः साम्प्रतमिति भावः ।

**कष्टमिति** । स एव कालः कुसुमपुरावरोधनसमयो वर्ततेऽस्ति । शस्त्रमसिमु-

कालो वर्त्तत इति। ( शस्त्रमुत्सृज्य सास्रम्। ) हा देव नन्द! स्मरामि ते राक्षसम्प्रति प्रसादातिशयं यस्तु एवंविधकाले—

यत्रैषा मेघनीला चलति गजघटा, राक्षसस्तत्र याया-
देतत् पारिप्लवाम्भःप्लुति तुरगबलं वार्य्यतां राक्षसेन।
पत्तीनां राक्षसोऽन्तं नयतु बलमिति प्रेषयन्मह्यमाज्ञाम्
अज्ञासीः स्नेहयोगात् स्थितमिह नगरे राक्षसानां सहस्रम्॥१४

---

त्सृज्य सास्रम् अस्रेण नेत्रजलेन सहितं ( क्रियाविशेषणमिदम् ) अश्रुपूर्णनेत्रं यथा स्यात्तथेत्यर्थः। अश्रुपूर्णनेत्रो भूत्वा वक्ष्यमाणवचनं ब्रवीतीति भावः। हा कष्टं दुःखमित्यर्थः। हे देव! राजन् नन्द! राक्षसं प्रति स्वप्रधानसचिवं प्रति ते तव प्रसादस्य प्रसन्नताया अनुकम्पाया अतिशयः आधिक्यं प्रसादातिशयस्तं तथोक्तम् अनुग्रहात्यर्थमित्यर्थः। स्मरामि चिन्तयामि। स्मरामि ते राक्षसः प्रसादानामिति पा ( अधीगर्थदयेशां कर्मणि' इति कर्मणि षष्ठी ) राक्षसस्तदाख्योऽहं ते तव प्रसादाः प्रसन्नताः स्मरामीत्यर्थः।

यत्रेति। यत्र यस्मिन् संग्रामप्रदेशे एषा बुद्धिस्था मेघ इव नीला मेघनील ( उपमानानि सामान्यवचनैरिति समासः ) जलपरिपूरितमेघसदृशश्यामवर्णा, गजानां हस्तिनां घटा समूहः गजघटा हस्तिवृन्दमित्यर्थः। चरति सङ्ग्रामार्थः तत्र प्रदेशे राक्षसः तदाख्यस्तव मन्त्रिवर्यः यायात तत्प्रतीकाराय गच्छेत (न हि राक्षस्य हस्तिसमूहावलोकनाद्भयमिति ध्वनिः), पारिप्लवस्यातिचञ्चलस्याम्भसो तिर्गतिविशेषो यस्य तत्तथोक्तं एतत् बुद्धिस्थं तुरगबलं विपक्षपक्षीयाश्वसैन्यं राक्षन वार्यताम् निवर्त्यताम्। ( न हि तस्मादपि राक्षसस्य त्रास इति ध्वनिः ) राक्षसः पत्तीनां पदातीनाम्।

पदातिपत्तिपदगेत्यमरः।

बलं सैन्यं पराक्रमं वा अन्तं नाशं नयतु प्रापयतु ( राक्षसोऽन्त इति पदातीनां रिपुसैन्यानामन्तर्मध्ये बलं स्वसैन्यं नयत्वित्यर्थः ) इति एवं री मह्यं (क्रियया यमभिप्रैति सोऽपि सम्प्रदानमित्यनेन चतुर्थी) मां प्रतीत्यर्थः अ नियोगं प्रेषयन् कुर्वन्निति यावत्। प्रेरयन् स्नेहयोगात्प्रेमसम्पर्कात् नगरे कुसुमपुरे क्षसानां सहस्रं सहस्रराक्षसकृत्यसम्पादनशीलत्वाद्राक्षससहस्रमिव मां स्थितमत्र अमंस्थाः। सामान्यधर्मोपमानोपमेयौपम्यवाचिनां मध्ये एकस्य वा द्वयोर्वा

ततस्ततः ?

विराधगुप्तः—ततः समन्तादुपरुद्धं पुष्पपुरमवलोक्य, बहुदिवसप्रभृति महदुपरोधवैशसमुपरि पौराणां परिवर्त्तमानमसहमाने, तस्यामवस्थायां, पौरजनापेक्षया, सुरंगामुपेत्यापक्रान्ते तपोवनाय देवे सर्व्वार्थसिद्धौ, स्वामिविरहात् सुशिथिलीकृतप्रयत्नेषु युष्मद्बलेषु जयघोषणाव्याघातादिसाहसानुमितान्तर्नगरवासिषु पुनरपि नन्दराज्यप्रत्यानयनाय सुरङ्गया बहिरपगतेषु युष्मासु, चन्द्रगुप्तनिधनाय युष्मत्प्रयुक्तया विषकन्यया घातिते तपस्विनि पर्व्वतेश्वरे"

---

णामनुपादाने लुप्तोपमा भवतीत्यर्थकात्—

लुप्ता सामान्यधर्मादेरेकस्य यदि वा द्वयोः ।
त्रयाणां वाऽनुपादाने श्रौत्यार्थी सापि पूर्ववत् ॥

इति दर्पणोक्तलक्षणात् मेघनीलेत्यत्र पारिप्लवाम्भःप्लुतीत्यत्र चौपम्यवाचकवशब्दलोपाल्लुप्तोपमालङ्कारः तस्य च ।

भवेत्सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना ।
वाच्या प्रतीयमाना सा प्रथमं द्विविधा मता ॥
वाच्येवादिप्रयोगे स्यादप्रयोगे परा पुनः ।

इति दर्पणधृतवचनात् राक्षसानां सहस्रमिवेति वाच्योत्प्रेक्षालङ्कारेण संसृष्टिः ; यत्तु प्रतीयमानोत्प्रेक्षया संसृष्टिरिति तन्न वाच्येवादिप्रयोगे स्यादिति लक्षणविरोधात् ।

यदाधेयमनाधारमेकञ्चानेकगोचरम् ।

इति दर्पणोक्तलक्षणेनैकस्य राक्षसस्य बहुजनसम्पादनशीलत्वेनानेकगोचरत्वाद्विशेषालङ्कारयुक्तश्च । लाटी रीतिः । ओजोगुणः । यायात नयतु इति कर्तृवाच्यप्रयोगप्रक्रमे वार्यतामित्यकर्तृवाच्यप्रयोगकरणादत्र दोषो भग्नप्रक्रमो नाम । वृत्तञ्चैतत्स्रग्धरा नाम ॥ १४ ॥

तत इति । समन्ताच्चतुर्दिक्षु सर्वत इत्यर्थः । उपरुद्धं सैन्याक्रान्तं कुसुमपुरं तदाख्यनगरमवलोक्य दृष्ट्वा बहुदिवसप्रभृति अनेकवासरान् यावत् पौराणां पुरवासिनां नागरिकाणामुपरि महद्बहुलम् परिवर्तमानं प्रतिदिननूतनम् उपरोधेनाऽवरोधेन वैशसं अत्याचाररूपघातुककर्म असहमाने सोढुमसमर्थे तस्यामप्यवस्थायामस-

राक्षसः—सखे ! पश्याश्चर्यम्,—

कर्णेनेव विषांगनैकपुरुषव्यापादिनी रक्षिता,
हन्तुं शक्तिरिवार्ज्जनं बलवती, या चन्द्रगुप्तं मया ।
सा विष्णोरिव विष्णुगुप्तहतकस्यात्यन्तिकश्रेयसे
हैडिम्बेयमिवेत्य पर्व्वतनृपं तद्वध्यमेवावधीत् ॥ १५ ॥

---

हनदशायाम् पौरजनापेक्षया नगरवासिजनानुमत्या सुरङ्गां गुप्तवर्त्म एत्य प्राप्य तपोवनाय तपोवनं गन्तुं देवे राज्ञि सर्वार्थसिद्धौ अपक्रान्ते गते सति स्वामिविरहात् प्रभुविच्छेदात् प्रशिथिलीकृतप्रयत्नेषु मन्दीकृतोद्योगेषु जयस्य घोषणा डिण्डिमाघातपूर्वकजयविज्ञापनं चन्द्रगुप्तस्येति शेषः । तस्या व्याघातोऽकरणं स आदिर्येषां तैः साहसैः सैन्यकृतकार्यैः नृपानुमतिव्याघातात्मकैरित्यर्थः । अनुमितेषु शत्रुप्रजापदूषिता इत्येवमुन्नीतेषु अन्तर्नगरवासिषु युष्मद्दलेषु भवत्सन्येषु सत्सु पुनरपि नन्दराज्यप्रत्यानयनाय नन्दनृपतिराज्यायत्तीकरणाय सुरङ्गया गुप्तवर्त्मना बहिरपगतेषु बाह्यप्रदेशं गच्छत्सु युष्मासु भवत्सु चन्द्रगुप्तनिधनाय मौर्यविनाशाय युष्मत्प्रयुक्तया भवत्प्रेरितया विषकन्यया विषनिर्मितकन्यया तपस्विनि तपश्चरणशीले पर्वतेश्वरे घातिते विनाशिते सति ।

कर्णेनेति । कर्णेन सूर्यतनयेनेव मया अर्जुनं गाण्डीविनमिव चन्द्रगुप्तं मौर्यं हन्तुं व्यापादयितुं बलवती सामर्थ्ययुक्ता ( एकपुरुषं व्यापादयति तच्छीलेति विग्रहे णिनिः ) एकपुरुषव्यापादिनी अद्वितीयपुरुषविनाशकारिणीत्यर्थः । शक्तिः शक्रप्रदत्तशक्तिनामास्त्रविशेष इव या विषाङ्गना विषकन्या रक्षिता स्थापिता, सा विषाङ्गना विष्णोर्भगवत इव विष्णुगुप्तहतकस्य चाणक्यस्य आत्यन्तिकश्रेयसे अधिककल्याणाय हैडिम्बेयं हिडिम्बासुतं घटोत्कचमिव तद्वध्यं तस्य विष्णोर्वध्यं पक्षान्तरे तस्य परिपणित( प्रतिश्रुत )राज्यार्द्धदानभीरोश्चन्द्रगुप्तस्य वध्यं घात्यं पर्वतनृपं पर्वतेश्वरनृपतिमवेत्य प्राप्य अवधीत् घातितवान् । सूर्यतनयः कर्णः अर्जुनविनाशाय शक्रप्रदत्तशक्तिमिव मौर्यवधाय विषाङ्गनामहं स्थापितवान् सा शक्तिरिव विषाङ्गना विष्णुवध्यं हिडिम्बापुत्रमिव मौर्यवध्यं पर्वतेश्वरं विनाशितवतीति भावः । शक्रश्चैकदा कवचकुण्डलादिकं कर्णं याचितवान् ततो याचितवस्तुप्राप्त्या प्रसन्नभूताच्छक्रादेकां शक्तिं कर्णः समासादितवान् , सा प्रयत्नतोऽर्जुनवधाय रक्षिता समरे हिडिम्बातनयवधाय प्रहितेति भारतीयकथात्रानुसन्धातव्या ।

विराधगुप्तः--अमात्य ! दैवस्यात्र कामचारः, किमत्र क्रियते ?

राक्षसः--ततस्ततः ?

विराधगुप्तः-ततः पितृवधपरित्रासादपक्रान्ते कुसुमपुरात् कुमारे मलयकेतौ, विश्वासिते च पर्वतकभ्रातरि वैरोचके, प्रकाशिते च चन्द्रगुप्तस्य नन्दभवनप्रवेशे, चाणक्यहतकेनाहूयाभिहिताः कुसुमपुरनिवासिनः सर्व्वे एव सूत्रधाराः "यथा सांवत्सरिकवचनादद्यैवार्द्धरात्रसमये एवाभिमतः चन्द्रगुप्तस्य नन्दभवनप्रवेशो भविष्यतीति, ततः प्रथमद्वारात्प्रभृति संस्क्रियतां राजभवनम्" इति । ततः सूत्रधारैरभिहितम्,—"आर्य्य ! प्रथममेव देवस्य चन्द्रगुप्तस्य नन्दभवनप्रवेशमुपलभ्य सूत्रधारेण दारुवर्मणा कनकतोरणन्यासादिभिः संस्कारविशेषैः संस्कृतं

---

गुणौ क्रिये वा चेत्स्यातां विरुद्धे हेतुकार्य्ययोः ।
यद्वाऽऽरब्धस्य वैफल्यमनर्थस्य च सम्भवः ॥
विरूपयोः संघटना या च तद्विषमं मतम् ॥

इति दर्पणोक्तलक्षणादारब्धवैफल्यपूर्वकाऽनर्थसम्भवरूपोऽत्र विषमालङ्कारः । स च कर्णेनेत्यादिषु सादृश्यार्थकेवशब्दसत्त्वात्पूर्णोपमालङ्कारसंकीर्णः । एतल्लक्षणं प्रागुक्तत्वान्नेहोक्तम् । वैदर्भी रीतिः । माधुर्यगुणः । शार्दूलविक्रीडितं वृत्तम् ॥ १९ ॥

अमात्येति । अमात्य मन्त्रिन् ! अत्र पर्वतेश्वरवधे दैवस्य भाग्यस्य कामचारः इच्छा, कारणमिति शेषः । अत्राऽस्मिन्विषये किं क्रियते मयेति शेषः न किमपीत्यर्थः।

ततस्तत इति । तदनन्तरं किं वृत्तं जातं तत्कथयेत्यर्थः ।

तत इति । पितुर्वधो नाशः पितृवधः पितृवधात्त्रासः पितृवधत्रासस्तस्मात्पितृवधत्रासात् तातविनाशभयात् कुसुमपुरात् तन्नामनगरात् कुमारे शिशौ मलयकेतौ पर्वतराजसुते अपक्रान्ते पलायिते सति पर्वतकस्य भ्राता सोदरः पर्वतकभ्राता तस्मिन् पर्वतकभ्रातरि पर्वतकसोदरे वैरोचके तन्नाम्नि विश्वासिते विश्वासं प्रापिते सति विष्णुगुप्तकर्तृकतत्सम्प्रदानकराज्यार्द्धप्रदानसूचकवचनेन आश्वासित इत्यर्थः । चन्द्रगुप्तस्य मौर्य्यस्य नन्दस्य भवनं नन्दभवनं तत्र प्रवेशः सन्निवेशो नन्दभवनप्रवेशस्तस्मिन्नन्दभवनप्रवेशे नन्दनृपतिगृहसन्निवेशे प्रकाशिते प्रख्यापिते च सति, चाणक्यो हतकः चाणक्यहतकः ( कुत्सितानि कुत्सनैरिति समासः ) तेन चाणक्यहतकेन विष्णुगुप्त

**प्रथमराजद्वारम् । इदानीमस्माभिरभ्यन्तरे संस्कारो विधेयः" इति ततश्चाणक्यवटुना, अनादिष्टेनैव दारुवर्म्मणा संस्कृतं राजभवनद्वारमिति परितुष्टेन, दारुवर्म्मणः सुचिरं दाक्ष्यमभिनन्द्याभिहितम् "आचिरादस्य दाक्ष्यस्यानुरूपं फलमधिगमिष्यसि दारुवर्म्मन्!"**

---

विद्वेषिणा आहूय आकार्य सर्वे एव निखिला एव कुसुमपुरे निवसन्ति तच्छीलाः कुसुमपुरनिवासिनः ( 'सुप्यजातावि' ति णिनिः ) कुसुमपुरवास्तव्याः सूत्रधाराः शिल्पज्ञाः अभिहिताः कथिताः, यथा साम्वत्सरिकस्य दैवज्ञस्य वचनं वाक्यं साम्वत्सारिकवचनं तस्मात्साम्वत्सरिकवचनात् दैवज्ञकथनादित्यर्थः । अद्यैव अस्मिन्नेव अर्द्धरात्रसमये निशीथार्द्धसमये एव चन्द्रगुप्तस्य मौर्यस्य नन्दभवनप्रवेशः नन्दगृहसन्निवेशः अभिमतः इष्टो भविष्यति । ततस्तदनन्तरं प्रथमद्वारात् प्रभृति पूर्वद्वारमारभ्य राज्ञो भवनं राजभवनं नृपसद्मेत्यर्थः । संस्क्रियताम् संस्कारयुक्तं विधीयताम् इतीत्येतदुक्तम् अस्य चाणक्येनाहूयाऽभिहिताः सूत्राधारा इत्यनेनान्वयः । ततस्तदन्तरं चाणक्याभिधानानन्तरमित्यर्थः । सूत्रधारैः शिल्पिभिः अभिहितं कथितम् । आर्य ! श्रीमन् देवस्य राज्ञः चन्द्रगुप्तस्य मौर्यस्य प्रथममेव प्रागेव नन्दभवनप्रवेशं नन्दनृपगृहसन्निवेशनमुपलभ्य ज्ञात्वा सूत्रधारेण शिल्पिना दारुवर्मणा तन्नाम्ना कनकस्य सुवर्णस्य बहिर्द्वारं ।

तोरणं तु बहिर्द्वारमित्यमरः ।

कनकतोरणं तस्य न्यासः सन्निवेश आदिर्येषां ते कनकतोरणन्यासादयस्तैः कनकतोरणन्यासादिभिः संस्कारविशेषैः मौर्योपदिष्ट बहिर्द्वारपातनोद्योगात्मकैरित्यर्थः । राज्ञो द्वारं राजद्वारं प्रथमं च तद्राजद्वारञ्च प्रथमराजद्वारं संस्कृतं संस्कारास्पदं कृतम् । इदानीं साम्प्रतं अस्माभिःशिल्पिभिः अभ्यन्तरे अन्तराले संस्कारः ( तीक्ष्णरसदानशयनगृहशयितहननादिरूपः इति गूढोऽभिसन्धिः ) विधेयः । सम्पादनीयः कार्य्य इति यावत् । क्वचित्पुस्तके आधेय इति पाठस्तस्याप्युक्त एवार्थः । ततस्तदनन्तरं अनादिष्टेनैव आदेशमप्राप्यवतैव सूत्रधारेण शिल्पिना दारुवर्म्मणा तन्नाम्ना राजभवनद्वारं नृपगृहद्वारं संस्कृतं संस्कारयुक्तं कृतं इत्यस्माद्धेतोः परितुष्टेन सन्तुष्टेन संतोषवतेत्यर्थः । इव चाणक्येन विष्णुगुप्तेन सुचिरं बहुकालं दारुवर्मणस्तन्नाम्नः शिल्पिनः दक्षस्य भावो दाक्ष्यं नैपुण्यं प्रशस्य संस्तुत्य अभिहितमु-

राक्षसः—( सोद्वेगम् ) सखे ! कुतश्चाणक्यवटोः परितोषः । अफलमनिष्टफलं वा दारुवर्म्मणः प्रयत्नमवगच्छामि । यदनेन बुद्धिमोहादथवा राजभक्तिप्रकर्षान्नियोगकालमप्रतीक्षमाणेन, सञ्जनितश्चाणक्यवटोश्चेतसि बलवान् विकल्पः । ततस्ततः ?

विराधगुप्तः—ततश्चाणक्यहतकेनानुकूललग्नवशादद्यार्द्धरात्रसमये चन्द्रभवनप्रवेशो भविष्यतीति, शिल्पिनः पौरांश्च गृहीतार्थान् कृत्वा,

---

कम् दारुवर्मन् अस्य त्वदीयस्येति शेषः दाक्ष्यस्य नैपुण्यस्य रूपस्य योग्यमनुरूपं सदृशं फलं ( वधरूपं फलमिति गूढभावः ) अचिरात् शीघ्रमधिगमिष्यसि प्राप्स्यसीति भावः ।

सोद्वेगमिति । उद्वेगेनोत्कण्ठया सहितं सोद्वेगं ( क्रियाविशेषणमिदम् ) सोत्कण्ठं यथा स्यात्तथा कथयतीत्यर्थः । सखे ! मित्र, चाणक्यश्चासौ वटुश्चेति चाणक्यवटुस्तस्य चाणक्यवटोः अल्पबुद्धिमतो विष्णुगुप्तस्येत्यर्थः । परितोषः सन्तोषः कुतः कस्मात् तादृशस्य तस्य नैव सन्तोषः सम्भवतीत्यर्थः । दारुवर्म्मणः तदाख्यस्य शिल्पविद्यावतः प्रयत्नं प्रयासं अविद्यमानं फलं यस्य तदफलं निष्फलमित्यर्थः । वा अथवा अनिष्टमशुभं फलं यस्य तदनिष्टफलमशुभफलमित्यर्थः । अवगच्छामि जानामि । यद्यस्मात्कारणात् अनेन दारुवर्मणा बुद्धेर्मतेर्मोहो भ्रमो बुद्धिमोहस्तस्माद्बुद्धिमोहात् मतिभ्रमात् । अथवा राज्ञो भक्तिः राजभक्तिः राजभक्तेः प्रकर्षो राजभक्तिप्रकर्षस्तस्माद्राजभक्तिप्रकर्षात् राज्ञः सर्वार्थसिद्धौ शत्रुवधेन भक्त्याधिक्यप्रदर्शनादित्यर्थः । नियोगस्य प्रेरणस्य कालः समयः नियोगकालस्तं नियोगकालं प्रेरणसमयमित्यर्थः । प्रतीक्षमाणः ( प्रतिपूर्वकादीक्षतेः शानचि रूपम् ) न प्रतीक्षमाणोऽप्रतीक्षमाणस्तेनाऽप्रतीक्षमाणेन असहिष्णुना अनेन दारुवर्मणा चाणक्यवटोः विष्णुगुप्तात्मकान्तेवासिनः चेतसि हृदये बलवान् सुदृढः विकल्पः सन्देहः सञ्जनितः समुत्पादितः । ततस्ततः ( वीप्सायां द्विरुक्तिः ) तदनन्तरं किं वृत्तं जातं तत्कथयेत्यर्थः ।

तत इति । तदनन्तरं चाणक्यहतकेन कुत्सितेन चाणक्येनेत्यर्थः । अनुकूलं च तल्लग्नमनुकूललग्नं तस्य वशस्तस्मात् अनुकूललग्नवशात् अद्य अस्मिन् अर्द्धरात्रसमये निशीथार्द्धक्षणे ( अर्द्धरजनीकाले ) चन्द्रगुप्तस्य मौर्यस्य नन्दस्य भवनं नन्दभवनं नन्दभवने प्रवेशो नन्दभवनप्रवेशः नन्दगृहसन्निवेश इत्यर्थः । भविष्यति इति

तस्मिन्नेव क्षणे पर्वतेश्वरभ्रातरं वैरोचकमेकासने चन्द्रगुप्तेन सहो पवेश्य, कृतः पृथ्वीराज्यार्द्धभागः!

राक्षसः—किंचातिसृष्टं पर्वतेश्वरभ्रात्रे वैरोचकाय पूर्वप्रतिश्रुतं राज्यार्द्धम्?

विराधगुप्तः—अथ किम्।

राक्षसः—( आत्मगतम्। ) नियतमतिधूर्त्तवटुना तस्यापि तपस्विनः कमप्युपांशुवधमाकलय्य पर्वतेश्वरविनाशजनितस्यायशसः परिहारार्थमेषा लोकप्रतिपत्तिरुपचरिता ( प्रकाशम् ) ततस्ततः?

---

इत्येतद्वृत्तं शिल्पिनः शिल्पविद्यावतः पुरि भवाः पौरास्तान् पौरान् पुरवासिनश्च गृहीतोऽवगतोऽर्थस्तात्पर्यं यैस्ते गृहीतार्थास्तान् गृहीतार्थान् अवगताऽभिप्रायान् वा अवगतसंकेतान् कृत्वा विधाय तस्मिन्नेव क्षणे नन्दभवनप्रवेशसमय एवेत्यर्थः। पर्वतेश्वरभ्रातरं पर्वतेश्वरसोदरं वैरोचकं तन्नामानम् एकासने एकोपवेशने चन्द्रगुप्तेन वृषलेन सह सार्द्धं उपवेश्य संस्थाप्य पृथ्वी राज्यं तस्यार्द्धभागः पृथ्वीराज्यार्द्धभागः मौर्यायार्द्धं दत्तं, परिशिष्टार्द्धञ्च वैरोचकाय प्रदत्तमित्येवंरूपो विभाग इत्यर्थः। कृतः सम्पादितः। ( विष्णुगुप्तेष्टार्थोपायानुसरणमिदमाक्षेपो नामाऽन्त्यमङ्गम्। )

**किञ्चेति।** किन्तु पर्वतेश्वरस्य भ्राता पर्वतेश्वरभ्राता तस्मै पर्वतेश्वरभ्रात्रे पर्वतेश्वरसोदराय पूर्वप्रतिश्रुतं प्राक्प्रतिज्ञातं राज्यार्द्धम् अतिसृष्टं दत्तम्, ( अतिपूर्वकः सृजिर्दानार्थकः दिश अतिसर्जन इत्यत्र दिशधात्वर्थबोधकातिसर्जनपदेन तथा प्रतीतेः)।

**अथ किमिति।** स्वीकारार्थकोऽत्राऽथशब्दः उक्तनाम्ने राज्यार्द्धं दत्तमित्यर्थः।

**आत्मगतमिति।** अनतिस्पष्टमित्यर्थः। ( क्रियाविशेषणमिदम् ) अन्यजनाश्राव्यं यथा स्यात्तथा ब्रवीतीति भावः। अतिधूर्त्तवटुना अतिशठेन चाणक्येनेति शेषः। तपस्विनः तपश्चरणशीलस्य तस्यापि पर्वतेश्वरस्यापि कमपि यत्किञ्चिदनिर्दिष्टमपि उपांशुवधं रहस्यहननम् आकलय्य अवधार्य निश्चित्य पर्वतेश्वरस्य विनाशः पर्वतेश्वरविनाशस्तेन जनितः पर्वतेश्वरविनाशजनितस्तस्य पर्वतेश्वरविनाशजनितस्य पर्वतेश्वरवधोत्पन्नस्य अयशसोऽकीर्त्तेः परिहारार्थं प्रक्षालनार्थं अतिधूर्त्तवटुना अतिशठेन नियतं निश्चितं एषा लोकानां जनानां प्रतिपत्तिर्निश्चयो लोकप्रतिपत्तिः उपचरिता परिकल्पिता ( लोकप्रसिद्धिरिति पाठे तु ) लोकेषु जनेषु प्रसिद्धिः प्रख्यापनेति तदर्थः। प्रकाशं सुव्यक्तं यथा तथा ब्रवीतीत्यर्थः। ततस्ततः तदनन्तरं किं जातमित्यर्थः।

विराधगुप्तः—ततः प्रथममेव प्रकाशिते चन्द्रगुप्तस्यार्द्धरात्रे नन्दभवनप्रवेशे, कृताभिषेके च वैरोचके, विमलमुक्तागुणपरिक्षेपोपरचितपटवारवाणप्रच्छादितशरीरे, मणिमयमुकुटनिविडनियतरुचिरतरमौलौ, सुरभिकुसुमदामवैकक्षिकावभासितविपुलवक्षःस्थले, परिचिततमैरप्यनभिज्ञायमानाकृता चाणक्यहतकादेशाच्चन्द्रगुप्तोपवाह्यां चन्द्रलेखाभिधानां गजवशामारुह्य, चन्द्रगुप्तानुयायिना राजलोकेन अनुगम्यमाने, जवेन देवस्य नन्दस्य भवनं प्रविशति वैरोचके, युष्मत्प्रयु-

---

( वीप्सायां द्विरुक्तिः ) ।

तत इति । ततस्तदनन्तरं प्रथममेव पूर्वमेव चन्द्रगुप्तस्य मौर्यस्य अर्द्धरात्रे निशीथे नन्दभवनप्रवेशे नन्दगृहसन्निवेशे प्रकाशिते विख्याते सति वैरोचके पर्वतेश्वरभ्रातरि कृतोऽभिषेको यस्यासौ कृताऽभिषेकस्तस्मिन् कृताऽभिषेके कृतराज्यप्राप्तिप्राक्कालिकस्नपने च सति, विमलश्चासौ मुक्तागुणो विमलमुक्तागुणः निर्मलमुक्ताहारः विमलमुक्तागुणस्य परिक्षेपः शोभार्थं परितो वेष्टनं विमलमुक्तागुणपरिक्षेपस्तेनोपरचितः कल्पितो यश्चित्रोऽनेकविधवर्णः पटस्तन्मयस्तन्निर्मितो यो वारवाणः कञ्चुकः वारयति बाणानिति व्युत्पत्तिः ।

कञ्चुको वारबाणोऽस्त्री इत्यमरः ।

तेन प्रच्छादितमाच्छादितं शरीरं यस्य स तथोक्तस्तस्मिन् विमलमुक्तागुणपरिक्षेपोपरचितपटवारबाणप्रच्छादितशरीरे निर्मलमुक्ताहारप्रदानोपकल्पितपटमयकञ्चुकाच्छादितविग्रहे ( वैरोचकोऽयमित्यवगतिर्न भविष्यतीत्यनेन सूचितम् ), मणिमयश्चासौ मुकुटश्चेति मणिमयमुकुटस्तेन निविडमतिशयदृढं नियमितः संयतो बद्धः रुचिरतरो मनोज्ञो मौलिः कचो यस्य स तथोक्तस्तस्मिन् मणिमयमुकुटनिविडनियमितरुचिरमौलौ मणिनिर्मितकिरीटदृढबद्धमनोज्ञकचे ।

मौलयः संयताः कचाः इत्यमरः ।

सुरभीणि सुगन्धीनि च तानि कुसुमानि चेति सुरभिकुसुमानि तेषां दाम माल्यं सुरभिकुसुमदाम तदेव वैकक्षिकं यज्ञोपवीतवत्तिर्यग्लम्बि स्रगिति सुरभिकुसुमदामवैकक्षिकं तेनाऽवभासितं सुशोभितं विपुलं महत् वक्षःस्थलमुरःस्थलं यस्यासौ तथोक्तस्तस्मिन् सुरभिकुसुमदामवैकक्षिकाऽवभासितविपुलवक्षःस्थले, अतिशयेन परिचिताः परिचिततमास्तैः परिचिततमैरपि अतिशयेन संस्तुतैरपि न अभिज्ञायमाना अवग-

केन सूत्रधारेण दारुवर्मणा, चन्द्रगुप्तोऽयमिति मन्यमानेन, वैरोचकस्योपरि निपातनाय सज्जीकृतं यन्त्रतोरणम् । अत्रान्तरे बहिर्निगृहीतवाहनेषु स्थितेषु चन्द्रगुप्तानुयायिषु भूमिपालेषु युष्मत्प्रयुक्तेनैव चन्द्रगुप्तनिषादिना वर्वरकेण, कनकदण्डान्तर्निहितामसिपुत्रिकामाक्रष्टुकामेन अवलम्बिता करेण, कनकशृङ्खलावलम्बिनी कनकदण्डिका ।

---

न्यमाना आकृतिः आकारः शरीरं यस्य स तथोक्तस्तस्मिन् अनभिज्ञायमानाऽऽकृतौ अनवगम्यमानशरीरे, चाणक्यश्चासौ हतकश्चाणक्यहतकस्तस्याऽऽदेश आज्ञा तस्मात् चाणक्यहतकादेशात् निन्दितविष्णुगुप्तनिदेशात् चन्द्रगुप्त उपवाह्य आरोहको यस्याः सा तथोक्ता तां चन्द्रगुप्तोपवाह्यां मौर्याऽऽरोहिकाम् मौर्यवाहिनीमिति यावत् । चन्द्रलेखेत्यभिधानं नाम यस्याः सा तथोक्ता तां चन्द्रलेखानाम्नीं गजवशां गजस्त्रीम् करेणुमित्यर्थः ।

वशा स्त्री करिणी च स्यात् । इत्यमरः ।

आरुह्य तदुपरि स्थित्वा चन्द्रगुप्तमनुयातुं शीलं यस्य स चन्द्रगुप्तानुयायी तेन चन्द्रगुप्तानुयायिना मौर्यानुगामिना ( मौर्यभ्रान्तिसम्भवस्यार्थमित्युक्तिः ) राजलोकेन नृपजनेन अनुगम्यमाने अनुयायमाने वैरोचके पर्वतेश्वरभ्रातरि देवस्य राज्ञो नन्दस्य तदाख्यस्य सदनं गृहं प्रविशति अभ्यन्तरं गच्छति सति युष्मत्प्रयुक्तेन त्वत्प्रेरितेन दारुवर्मणा तन्नाम्ना सूत्रधारेण शिल्पिना अयमेव चन्द्रगुप्तो मौर्य इति मत्वा अवगत्य तस्य वैरोचकस्योपरि निपातनाय प्रक्षेपणाय यन्त्रस्य तोरणं यन्त्रतोरणम् तोरणरूपेण निर्मितं यन्त्रमित्यर्थः । बहिर्द्वारमिति यावत् ।

तोरणं तु बहिर्द्वारम् इत्यमरः ।

बहिः सज्जीकृतं समुद्यतं बाह्ये निगृहीतानि अवरुद्धानि वाहनानि अश्वादयो यैस्ते तथोक्तास्तेषु बहिर्निगृहीतवाहनेषु बाह्यावरुद्धाश्वादिष्वित्यर्थः, चन्द्रगुप्तनिषादिना मौर्यहस्तिपकेन ।

आधोरणा हस्तिपका हस्त्यारोहा निषादिनः ।

वर्वरकेण तन्नाम्ना ( नृपलोपांशुवधनिमित्तमयं वर्वरको राक्षसेन तस्य हस्तिपकत्वेन नियोजितः ) कनकस्य सुवर्णस्य दण्डो यष्टी कनकदण्डस्तस्यान्तरभ्यन्तरं निहिता स्थापिता कनकदण्डान्तर्निहिता तां कनकदण्डान्तर्निहितां सुवर्णयष्ट्यभ्यन्तरस्थापितां असिपुत्रिकां शस्त्रीं छुरिकामित्यर्थः ।

राक्षसः—उभयोरप्यस्थाने यत्नः । ततस्ततः ?

विराधगुप्तः—अथ जघनाभिघातमुत्प्रेक्षमाणा गजवधूरतिजवनतया गत्यन्तरमारूढवती । ततः प्रथमगत्यनुरोधप्रत्याकलितमुक्तेन प्रभ्रष्टलक्ष्यं पतता यन्त्रतोरणेन आकृष्टकृपाणीव्यग्रपाणिरनासादयन्नेव चन्द्रगुप्तप्रत्याशया वैरोचकं, दारुवर्म्मणा हतस्तपस्वी वर्व्वरकः ततो दारुवर्मणा, यन्त्रतोरणनिपातनादात्मवधमाकलय्य शीघ्रमेवोत्तुङ्गतोर-

---

स्याच्छुरी चासिपुत्री च छुरिका इत्यमरः ।

आकष्टुं कामयते इत्याकष्टुकामस्तेनाऽऽकष्टुकामेन बहिर्निःसारणेच्छुना करेण हस्तेन कनकस्य स्वर्णस्य शृङ्खला बन्धनरज्जुः कनकशृङ्खला तामवलम्बते तच्छीलेति कनकशृङ्खलावलम्बिनी ( कनकशृङ्खलामुखावलम्बिनीति पाठे ) कनकशृङ्खला स्वर्णहारो मुखावलम्बिनी मुखे लम्बमाना यस्याः सा तथोक्ता आस्यावलम्बमानस्वर्णहारेत्यर्थः । कनकदण्डिका स्वर्णयष्टिः अवलम्बिता धृता ।

उभयोरपीति—उभयोर्द्वयोः विष्णुगुप्तराक्षसयोरित्यर्थः । अस्थाने असमये यत्न उद्योगः । ततस्ततः तदनन्तरं किम्वृत्तं सम्वृत्तं तद्वदेत्यर्थः ।

अथेति । अथानन्तरं जघने नितम्बे अभिघातं आघातमुत्प्रेक्षमाणा सम्भावयन्ती गजवधूः करिणी अतिजवनतया अतिशयवेगेन गत्यन्तरं शीघ्रगतिम् आरूढवती समाश्रितवती । ततस्तदनन्तरं प्रथमा चासौ गतिः प्रथमगतिः मन्दगमनमित्यर्थः । तस्या अनुरोधः प्रथमगत्यनुरोधस्तेन प्रथमगत्यनुरोधेन मन्दगमनाऽपेक्षयेत्यर्थः । प्रत्याकलितं धृतं मुक्तञ्चेति प्रथमगत्यनुरोधप्रत्याकलितमुक्तं तेन तथोक्तेन मन्दगत्यपेक्षया धृतत्यक्तेनेत्यर्थः । प्रभ्रष्टं च्युतं लक्ष्यं शरव्यं यत्र तद्यथा स्यात्तथा ( क्रियाविशेषणमिदम् ) पतता यन्त्रतोरणेन तोरणरूपेण निर्मितयन्त्रविशेषेण, आकृष्टा कोषाद्बहिर्निःसारिता या कृपाणी सा आकृष्टकृपाणी तया व्यग्रः समुद्यतः । सञ्जातभूतः व्याप्त इति यावत् । पाणिः करो यस्य स तथोक्तः कोषोन्मुक्तछुरिकाव्याप्तपाणिः प्रहाराय समुद्यतहस्त इत्यर्थः । वैरोचकं पर्वतेश्वरभ्रातरमनासादयन्नेव हननार्थमप्राप्नुवन्नेव तपस्वी तपश्चरणशीलो दीन इत्यर्थः । बर्बरकः दारुवर्मणा तन्नाम्ना सूत्रधारेण चन्द्रगुप्तप्रत्याशया मौर्यबुद्ध्या हतो विनाशितः । ततस्तदनन्तरं यन्त्रतोरणनिपातनात् यन्त्रतोरणप्रहरणात् आत्मवधं स्वविनाशमाकलय्य निश्चित्येति यावत् । शीघ्रमेव द्रुतमेव उत्तुङ्गतोरणस्थानम् अतिशयोच्चबहिर्द्वारस्थानम् आरूढेन प्राप्तवता

णस्थानमारूढेन, यन्त्रघट्टनबीजलोहकीलकमादाय हस्तिनीगत एव हतस्तपस्वी वैरोचकः ।

राक्षसः—कष्टम् ! अनर्थद्वयमापतितम्; न हतश्चन्द्रगुप्तोऽसौ हतौ वैरोचकवर्व्वरकौ !! ( सावेगमात्मगतम् । ) नैतावुभौ हतौ, दैवेन वयमेव हताः ( प्रकाशम् । ) अथ स सूत्रधारो दारुवर्मा क ?

विराधगुप्तः—वैरोचकपुरःसरेण पदातिलोकेन लोष्टघातं हतः ।

राक्षसः—( सास्रम् । ) कष्टम् ! अहो ! वत्सलेन सुहृदा दारुवर्मणा वियुक्ताः स्मः । अथ तत्रत्येन भिषजाऽभयदत्तेन किमनुष्ठितम् ?

---

दारुवर्मणा तदाख्यसूत्रधारेण यन्त्रघट्टनवीजं यन्त्रसञ्चालनकारणं लोहकीलकं अयःशङ्कुमादाय गृहीत्वा हस्तिनीगत एव करिणीपृष्ठसमारूढ एव तपस्वी दीनो वैरोचकः पर्वतेश्वरभ्राता हतो नाशितः ।

कष्टमिति । कष्टम् दुःखम् अनर्थद्वयम् अनिष्टद्वयम् आपतितं सम्प्राप्तम् । असावेष चन्द्रगुप्तो मौर्यो न हतो न विनाशितः किन्तु वैरोचक-वर्व्वरकौ एतन्नामकौ द्वौ हतौ विनाशितौ दैवेनेति शेषः । सावेगं आवेगसहितमित्यर्थः । आत्मगतमव्यक्तं ब्रवीतीति शेषः । एतौ इमौ उभौ द्वौ वैरोचकवर्व्वरकाविति शेषः । न हतौ न विनाशितौ किन्तु दैवेन भाग्येन वयमेव हता विनाशिता इत्यर्थः । प्रकाशं स्पष्टं ब्रवीतीति शेषः । अथानन्तरम् सूत्रधारः शिल्पी दारुवर्मा तन्नामकः क कुत्र वर्त्तत इति शेषः ( कथमिति पाठे ) केन प्रकारेणास्तीत्यर्थः ।

वैरोचकेति—पुरोऽग्रे सरतीति पुरस्सरः वैरोचकः पुरस्सरोऽग्रगामी यस्य स तथोक्तस्तेन वैरोचकपुरस्सरेण पर्वतेश्वरसोदराग्रगामिना पद्भ्यामङ्घ्रिभ्यामतति गच्छतीति पदातिः पदातिश्चासौ लोकश्चेति पदातिलोकस्तेन पदातिलोकेन चरणगेन लोष्टकेनेत्यर्थः । लोष्टैरेवेति लोष्टघातं ( करणे हनः इति सूत्रेण हन्तेर्णमुलि रूपम् ) हतो विनाशितः ।

सास्रमिति—अस्रेण नेत्रजलेन सहितं यथा तथा वदतीत्यर्थः । ( क्रियाविशेषणम् ) कष्टं दुःखम् सम्प्राप्तमिति शेषः । वत्सलेन प्रीतिमता सुहृदा मित्रेण दारुवर्मणा तन्नामकसूत्रधारेणेत्यर्थः । वियुक्ता विरहिताः स्मो भवामो वयमिति शेषः । अथानन्तरम् तत्रत्येन तद्ग्रामवास्तव्येन भिषजा वैद्येन अभयदत्तेन तन्नाम्ना किमनुष्ठितं किं कार्यं कृतमित्यर्थः ।

विराधगुप्तः—अमात्य ! सर्व्वमनुष्ठितम् ।

राक्षसः—( सहर्षम् । ) किं हतो दुरात्मा चन्द्रगुप्तः ।

विराधगुप्तः—अमात्य ! दैवान्न हतः ।

राक्षसः—( सविषादम् । ) ततः किमिदानीं कथयसि परितुष्टः "सर्व्वमनुष्ठितम्" इति ?

विराधगुप्तः—अमात्य! कल्पितमनेन विषचूर्णमिश्रमौषधं चन्द्रगुप्ताय । तच्च प्रत्यक्षीकुर्व्वता चाणक्यहतकेन कनकभाजने वर्णान्तरमुपगतमुपलभ्याभिहितश्चन्द्रगुप्तः—"वृषल ! सविषमिदमौषधं, न पातव्यम्" इति ।

राक्षसः—शठः खल्वसौ वटुः । अथ स वैद्यः कथम् ?

विराधगुप्तः—स खलु वैद्यस्तदेवौषधं पायित उपरतश्च ।

---

अमात्येति—हे अमात्य ! मन्त्रिन् , सर्वमनुष्ठितम् उक्तनाम्ना वैद्येन भवदुपदिष्टं सकलं कार्यं सम्पादितमित्यर्थः ।

सहर्षमिति—( इदं क्रियाविशेषणम् ) हर्षेणानन्देन सहितं यथा तथा ब्रवीतीत्यर्थः । दुरात्मा दुःस्वभावः चन्द्रगुप्तो मौर्यः किं हतो नाशितः ।

अमात्येति । मन्त्रिन् ! दैवात् भाग्यात् न हतो नाशितः ।

सविषादमिति । सविषादं सखेदं यथा तथेत्यर्थः ( क्रियाविशेषणमिदम् ) कथयसीति क्रियाऽध्याहारः । ततस्तस्मात् इदानीं साम्प्रतं परितुष्टः सन्तुष्टः सन् त्वमिति शेषः । सर्वं कार्यं सम्पादितमिति किं कथयसि ब्रवीषि ।

अमात्येति । मन्त्रिन् ! अनेन वैद्येन विषचूर्णमिश्रं विषचूर्णेन संयुक्तं औषधं भेषजं चन्द्रगुप्ताय मौर्याय कल्पितम् प्रयुक्तम् । तदौषधं प्रत्यक्षीकुर्वता परिशोधयता चाणक्यहतकेन विष्णुगुप्तदुष्टेन कनकभाजने स्वर्णपात्रे वर्णान्तरमन्यवर्णमुपलभ्य ज्ञात्वा वृषल ! मौर्य, इदं पुरःस्थितमौषधं भेषजं सविषं विषमिश्रितमतस्त्वया न पातव्यमिति चन्द्रगुप्तो वृषलोऽभिहित उक्तः ।

शठ इति । असौ अयम् वटुः ईषद्विद्यः चाणक्य इति शेषः । खलु निश्चयेन शठः क्रूरः अस्तीति शेषः । अथाऽनन्तरं स उक्तनामा वैद्यो भिषजः कथं केन प्रकारेणास्तीत्यर्थः ।

तदेवेति । स वैद्यः तदेव विषमिश्रितमेव औषधं भेषजं पायितः राज्ञेति शेषः । उपरतो मृतश्च ।

राक्षसः—( सविषादम् । ) अहह ! महान् विज्ञानराशिरुपरतः । भद्र ! अथ तस्य शयनाधिकृतस्य प्रमोदकस्य किं वृत्तम् ?

विराधगुप्तः—आत्मविनाशः ।

राक्षसः— ( सोद्वेगम् । ) कथमिव ?

विराधगुप्तः—स खलु मूर्खस्तं युष्माभिरतिसृष्टं महान्तमर्थराशिमवाप्य, महतो व्ययेनोपभोक्तुमारब्धवान् । ततः "कुतोऽयं भूयान् ध-

---

सविषादमिति । सखेदं यथा तथेत्यर्थः । अहह खेदसूचकमव्ययम् । महान् श्रेष्ठो विज्ञानराशिः चिकित्साविषयकज्ञानाऽऽकरः उपरतो मृतः अथानन्तरं शयने शय्यायामधिकृतस्य नियुक्तस्य शयनगृहसंस्कारादिना राजप्रलोभने नियुक्तस्येत्यर्थः। प्रमोदकस्य राक्षसप्रेषितगुप्तचरस्य किं वृत्तं वृत्तान्तमस्तीति शेषः ।

आत्मेति—आत्मनः प्राणस्य विनाशो विघातो जात इति शेषः, अयमपि हतस्तेनेत्येवं वृत्तमस्तीत्यर्थः । (यदितरेषामिति) पाठेऽपि इतरेषामन्येषां वैरोचकवर्बरकाऽभयदत्तानां यद्वृत्तमात्मविनाशरूपन्तदेवाऽस्य प्रमोदकस्याऽपि वृत्तमित्यर्थः । उभयविधपाठेऽप्यर्थस्यैक्याद्युक्तमेव पाठद्वयम् ।

सोद्वेगमिति । ससम्भ्रमं यथा स्यात्तथेत्यर्थः । कथमिव केन प्रकारेण हत इत्यर्थः ।

स खल्विति । खलुशब्दोऽत्र वाक्यालङ्कारे मूर्खो ! ज्ञानशून्यः स प्रमोदको युष्माभिर्भवद्भिः अतिसृष्टं दत्तं महान्तं प्रचुरम् अर्थराशिं धनसमूहम् अवाप्य प्राप्य महता प्रभूतेन व्ययेन अर्थस्याऽपगमेन उपभोक्तुं निर्वेष्टुम् ।

निर्वेश उपभोगः स्यात् इत्यमरः ।

आरब्धवान् । ततस्तदनन्तरं तव अयमेष धनागमः अर्थाऽधिगमः कुतः कस्मात् इति इत्येतद्वृत्तं पृच्छ्यमानः जिज्ञास्यमानः चाणक्येनेति शेषः । अयं प्रमोदकः, यदा बहून् अनेकान् वाक्यभेदान् अन्योऽन्यविरुद्धवचनानि अकथयत् अब्रवीत् तदा चाणक्य!तकादेशात् कुत्सितविष्णुगुप्तनिर्देशात् विचित्रेण अनेकविधेन विस्मयोत्पादकेनेति यावत् वधेन वधोपायेन व्यापादितो मारितः ।

सोद्वेगमिति । ससम्भ्रममित्यर्थः । अत्राऽपि प्रमोदकवधेऽपि दैवेन भाग्येन वयमेव हता विनाशिताः निष्फलोद्योगाः कृता इति यावत् अथाऽनन्तरं शयितस्य निद्रितस्य चन्द्रगुप्तस्य मौर्यस्य वृषलस्य शरीरे काये प्रहर्तुम् शस्त्रप्रहारं कर्तुम्

नागमस्तव" इति पृच्छ्यमानोऽयं यदा वाक्यभेदान्, बहूनकथयत् तदा चाणक्यहतकादेशाद् विचित्रेण वधेन व्यापादितः ।

राक्षसः—( सोद्वेगम् । ) कथमत्रापि वयमेवोपहता दैवेन ? अथ शयितस्य चन्द्रगुप्तस्य शरीरे प्रहर्त्तुमस्मत्प्रयुक्तानां नरपतिशयनगृहस्यान्तःसुरङ्गायां निवसतां, बीभत्सकादीनां को वृत्तान्तः ?

विराधगुप्तः—अमात्य ! दारुणो वृत्तान्तः ।

राक्षसः—( सावेगम् । ) कथं दारुणो वृत्तान्तः न खलु विदिताः ते तत्र निवसन्तः चाणक्यहतकेन ?

विराधगुप्तः—अथ किम् ।

राक्षसः—कथमिव ?

विराधगुप्तः—प्राक् चन्द्रगुप्तप्रवेशात्, प्रविष्टमात्रेणैव शयनगृहे चाणक्येन दुरात्मना समन्तादवलोकितः, ततस्तु एकस्माद् भित्तिच्छिद्रा-

---

अस्मत्प्रयुक्तानामस्मत्प्रेषितानाम् नरपतिशयनगृहस्य राजशयनभवनस्य अन्तःसुरङ्गायां अभ्यन्तरवर्त्तिबिले निवसतां तिष्ठतां बीभत्सकादीनां बीभत्सकप्रभृतीनाम् को वृत्तान्तः किंवृत्तान्तमस्तीति शेषः ।

अमात्येति । मन्त्रिन् ! दारुणः कठिनः श्रवणात्क्लेशप्रद इत्यर्थः । वृत्तान्तः प्रवृत्तिरस्ति तेषामिति शेषः ।

सावेगमिति । सक्लेशं यथा स्यात्तथा कथयतीत्यर्थः । कथं कुतः दारुणः दुःखप्रदो वृत्तान्त उदन्तस्तेषामित्यर्थः । तत्रोक्तस्थाने निवसन्तः वासं कुर्वन्तस्ते बीभत्सकादयः चाणक्यहतकेन चाणक्यदुष्टेन न विदिताः खलु ज्ञाताः किमित्यर्थः । प्रश्नार्थकोऽत्र न खलुशब्दः ।

अथ किमिति । ते बीभत्सकादयश्चाणक्येन विदिता एवेत्यर्थः ।

कथमिवेति । कथं केन प्रकारेण तेन विदितास्ते तत्कथय ।

प्रागिति । चन्द्रगुप्तप्रवेशात् मौर्यसन्निवेशात्प्राक् पूर्वं प्रविष्टमात्रेणैव सन्निवेशमात्रेणैव दुरात्मना दुष्टेन चाणक्येन विष्णुगुप्तेन समन्तात् सर्वतः शयनगृहे निद्राभवने अवलोकिते निरीक्षिते सति ततस्तदनन्तरमेकस्मात् कुतोऽपि भित्तिछिद्रात् कुड्यरन्ध्रात् गृहीताः प्राप्ताः भक्तस्याऽन्नस्याऽवयवाः कणा यया सा गृहीतभक्तावयवा

द्गृहीतभक्तावयवां निष्क्रामन्तीं पिपीलिकापङ्क्तिमवलोक्य, पुरुषगर्भमेतद्गृहमिति गृहीतार्थेन दाहितं तदन्तःशयनगृहम्। तस्मिंश्च दह्यमाने धूमावरुद्धदृष्टयः प्रथममपिहितनिर्गमनमार्गमनधिगम्य सर्व्वे एव बीभत्सकादयस्तत्रैव ज्वलनमुपगता उपरताश्च।

राक्षसः—( सास्रम्। ) सखे! पश्य, चन्द्रगुप्तस्य दैवसम्पदा सर्वे एव उपरताः। ( सचिन्तम् ) सखे! दैवसम्पदं पश्य दुरात्मनश्चन्द्रगुप्तहतकस्य!! कुतः?—

कन्या तस्य वधाय या विषमयी गूढं प्रयुक्ता मया
दैवात् पर्व्वतकस्तया विनिहतो, यस्तस्य राज्यार्द्धभाक्।
ये तन्त्रेषु रसेषु च प्रणिहितास्तैरेव ते घातिताः
मौर्यस्यैव फलन्ति, पश्य, विविधश्रेयांसि मे नीतयः॥१६॥

---

तां कुतोऽपि आत्तान्नकणां निष्क्रामन्तीं निर्गच्छन्तीं पिपीलिकापंक्तिम् पिपीलिकाश्रेणीम् अवलोक्य दृष्ट्वा एतत् गृहं भवनं पुरुषो गर्भेऽभ्यन्तरे यस्य तत्पुरुषगर्भम् -रुषयुक्तमित्यर्थः। अस्तीति शेषः। इत्यस्माद्धेतोः गृहीतः निश्चितः अर्थस्तात्पर्यं येन स गृहीतार्थस्तेन चाणक्येनेति शेषः। तत्पूर्वोक्तमन्तःशयनगृहमन्तर्निद्राभवनं दाहितं भस्मसात्कृतम्। तस्मिन् शयनगृहे दह्यमाने भस्मसात्कृते सति धूमेनाऽवरुद्धा दृष्टिश्चक्षुर्येषां ते धूमावरुद्धदृष्टयस्ते बीभत्सकादयः सर्वे एव प्रथमं पूर्वं यम् अपिहितनिर्गमनमार्गं निरुद्धबहिर्निस्सरणपथम् अनधिगम्य अप्राप्य तत्रैव शयनगृह एव ज्वलनं वह्निमुपगताः प्राप्ताः ( सन्तः ) उपरता मृताश्च।

सास्रमिति। सरोदनं यथा स्यात्तथा कथयतीत्यर्थः ( इदं क्रियाविशेषणम् )। सखे, मित्र! चन्द्रगुप्तस्य मौर्यस्य दैवसम्पदा भाग्यसम्पदा सर्वे एव वैरोचकादयो बीभत्सकादयश्चोपरता मृता पश्यावलोकय। सचिन्तम् ( इदमपि क्रियाविशेषणम् ) सखेदं यथा स्यात्तथा पुनः कथयतीत्यर्थः। सखे! दुरात्मनो दुष्टस्य चन्द्रगुप्तहतकस्य मौर्याऽधमस्य दैवसम्पदं भाग्यसम्पत्तिं पश्य अवलोकय।

कन्येति। मया तस्य चन्द्रगुप्तस्य वधाय हननाय या विषमयी विषनिर्मिता कन्या गूढं गुप्तं यथा स्यात्तथा प्रयुक्ता प्रेषिता तया विषनिर्मितकन्यया दैवात् पूर्वप्रतिश्रुतार्द्धराज्यग्रहीता परिपणितार्द्धराज्याधिकारीति यावत्। स विनिहतो विनाशितः यन्त्रेषु प्राणविघातसाधनपदार्थेषु रसेषु विषेषु च

विराधगुप्तः—अमात्य ! तथापि प्रारब्धमपरित्याज्यमेव । पश्यतु—

प्रारभ्यते न खलु विघ्नभयेन नीचैः,
प्रारभ्य विघ्नविहता विरमन्ति मध्याः ।
विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः,
प्रारब्धमुत्तमगुणास्त्वमिवोद्वहन्ति ॥ १७ ॥

---

शृङ्गारादौ विषे वीर्ये गुणे रागे समुज्ज्वले

इत्यमरोक्त्या रसशब्दोऽत्र विषवाचकः । ये दारुवर्मादयः प्रणिहिताः प्रेषितास्ते तैरेव यन्त्रैर्विषैरेव च घातिता नाशिता ये मम नीतयः शत्रुविनाशोपाया मौर्यस्यैव चन्द्रगुप्तस्यैव विविधानि च तानि श्रेयांसि चेति विविधश्रेयांसि बहुविधकल्याणानि फलन्ति समुत्पादयन्तीति त्वं पश्य । विषकन्याप्रेषणात्मकर्नातिप्रयोगेण मामकीनेन मौर्यवधाजननात्फलाऽप्राप्त्या किन्तु तस्यैव कल्याणसम्पादनाद्विजेष्टाऽनुत्पत्त्या च पद्येऽस्मिन् विषमाऽलङ्कारः । उक्तञ्च लक्षणं तस्य दर्पणे, यथा—

गुणौ क्रिये वा चेत्स्यातां विरुद्धे हेतुकार्ययोः ।
यद्वारब्धस्य वैफल्यमनर्थस्य च सम्भवः ।
विरूपयोः संघटना या च तद्विषमं मतम् ॥

इति । राज्याद्भेभाव विविधश्रेयांसीति पदद्वयव्यतिरिक्तपदानामसमस्तत्वादत्र वैदर्भी रीतिः । माधुर्यगुणः । उक्तञ्चैतल्लक्षणं दर्पणे—

चित्तद्रवीभावमयो ह्लादो माधुर्यमुच्यते ।
सम्भोगे करुणे विप्रलम्भे शान्तेऽधिकं क्रमात् ॥

इति । शार्दूलविक्रीडितं छन्दः ॥ १६ ॥

अमात्येति । मन्त्रिन् ! तथापि नीतिवैफल्येऽपि प्रारब्धं पक्रान्तं प्रस्तुतमिति यावत् । कार्यम् अपरित्याज्यमेव परित्यागयोग्यं नेत्यर्थः (निपातनादत्र कृत्वाभावः ) तदेव दर्शयति पश्येति अवलोकयेत्यर्थः ।

प्रारभ्यत इति । न्यञ्चन्तीति नीचास्तै नीचैः क्षुद्रैरल्पबुद्धिभिरिति यावत् । जनैः विघ्नस्य भयं विघ्नभयं विघ्नभयेन प्रत्यूहभीत्या न खलु प्रारभ्यते नैव कार्यं प्रस्तूयते, मध्या मध्यमा जनाः प्रारभ्य कार्यं प्रस्तुत्य विघ्नविहताः अन्तरायप्रतिरुद्धवेगाः सन्तः विरमन्ति निवर्तन्ते कार्यादिति शेषः । प्रस्तुतं कार्यं न कुर्वन्तीत्यर्थः ।

अपि च—

> किं शेषस्य भरव्यथा न वपुषि ? क्ष्मां न क्षिपत्येष यत्,
> किं वा नास्ति परिश्रमो दिनपतेः ? आस्ते न यन्निश्चलः।
> किं त्वङ्गीकृतमुत्सृजन् कृपणवत् श्लाघ्यो जनो लज्जते,
> निर्व्यूढिः प्रतिपन्नवस्तुषु सतामेतद्धि गोत्रव्रतम् ॥१८॥

(व्याङ्परिभ्यो रम इति परस्मैपदम्)। उत्तमा उत्कृष्टा गुणाः दयादाक्षिण्यादयो येषां ते उत्तमगुणा उत्कृष्टगुणवन्तो महान्त इत्यर्थः। त्वमिव विघ्नैः प्रत्यूहैः पुनः पुनः भूयो भूयः प्रतिहन्यमाना अवरुध्यमानाः सन्तः प्रारब्धं प्रस्तुतं कार्यम् उद्वहन्ति सम्पादयन्ति। त्वमित्युपमानवाचकपदस्योत्तमगुणा इत्युपमेयवाचकपदस्यौपम्यवाचकेवशब्दस्योत्कृष्टगुणवत्त्वरूपोपमानोपमेयगतसाधारणधर्मस्य च सत्त्वादत्र पूर्णोपमालङ्कारः। तदुक्तं दर्पणे—

> सा पूर्णा यदि सामान्यधर्म औपम्यवाचि च।
> उपमेयं चोपमानं भवेद्वाच्यमिति ॥

किञ्च उत्तमगुणा इव नीचा मध्याश्च कार्यं न कुर्वन्तीत्यर्थप्रतीतावुपमानभूतोत्तमगुणवदपेक्षयोपमेययोर्नीच-मध्ययोर्न्यूनत्वप्रतिपादनाद्व्यतिरेकाऽलङ्कारश्च।

> आधिक्यमुपमेयस्योपमानान्न्यूनताऽथवा।
> व्यतिरेकः

इत्यादि दर्पणोक्तलक्षणात्। अत्रैव श्लोके चतुर्थचरणे प्रारब्धमुत्तमगुणा न परित्यजन्तीति पाठे उत्कृष्टगुणवन्तः प्रस्तुतकार्यं न परित्यजन्ति इत्यप्रस्तुतार्थेन त्वयापि प्रस्तुतं कार्यं न परित्याज्यमिति प्रस्तुतार्थव्यञ्जनादप्रस्तुतप्रशंसाऽलङ्कारः।

> अप्रस्तुतात्प्रस्तुतञ्चेद्गम्यते पञ्चधा ततः।
> अप्रस्तुतप्रशंसा स्यात् ॥

इति दर्पणोक्तलक्षणात्। वैदर्भी रीतिः। प्रसादो गुणः। वसन्ततिलकं वृत्तम् ॥ १७ ॥

किं शेषस्येति। शेषस्य सर्पराजस्य वपुषि शरीरे भरव्यथा वसुधाधारणोत्पन्नदुःखं किं न भवति, अपि तु भवत्येव, तथापि एष शेषः क्ष्मां पृथिवीं न क्षिपति परित्यजति इति यत्। दिनपतेः सूर्यस्य परिश्रमः अहोरात्रभ्रमणोत्पन्नक्लेशो वा किं नास्ति अपि तु अस्त्येव तथापि निश्चलः स्थिरः न आस्ते न तिष्ठति इति यत्।

राक्षसः—सखे ! प्रारब्धमपरित्याज्यमिति प्रत्यक्षमेवैतद्भवताम् । ततस्ततः ?

विराधगुप्तः—ततः प्रभृति चाणक्यहतकश्चन्द्रगुप्तस्य शरीरे सहस्रगुणमप्रमत्तः, एभ्य एव ईदृशं भवतीत्यन्विष्य निगृहीतवान् कुसुमपुरनिवासिनो युष्मदीयानाप्तपुरुषान् ।

---

किन्तु श्लाघ्यः प्रशंसनीयचरितो जनः कृपणेन तुल्यं कृपणवत् नीच इव अङ्गीकृतं कार्यम् उत्सृजन् परित्यजन् किं न लज्जते न त्रपते अपि तु लज्जत एव इति यत् यतः प्रतिपन्नवस्तुषु स्वीकृतविषयेषु निर्वाहः यथावत्स्वीकृतप्रतिपालनम् एतत् सतां महतां कुलव्रतम् कुलाचारः । भूधारणजन्यक्लेशसत्त्वेऽपि क्ष्माऽपरित्यागी शेष इव अनवरतगमनजन्यदुःखसत्त्वेऽपि अस्थिरो दिनपतिरिव अङ्गीकृतप्रतिपालकः श्लाघ्य इव कार्यसाधकाऽनेकाप्तजनविनाशेऽपि त्वमपि स्वीकृतं परिपालयेति भावः ।

सतामेतद्धि गोत्रव्रतमिति सामान्येन किं शेषस्येत्यादि प्रतिपाद्यविशेषार्थस्य समर्थनादत्र श्लोकेऽर्थान्तरन्यासः । स च अङ्गीकृतक्ष्माधारी शेष इव अनवरतगमनशीलो दिनपतिरिवेत्यर्थं गम्यमाने पूर्वार्द्धगतप्रतिवस्तूपमया कृपणवदित्यत्र तुल्यार्थकवतिप्रत्ययस्य सत्त्वेन नीच इवेत्यर्थे उत्तरार्द्धगतोपमया च सङ्कीर्णः । अत्राऽपि वैदर्भी रीतिः । प्रसादश्च गुणः । शार्दूलविक्रीडितं छन्दः ॥ १८ ॥

सख इति । हे मित्र ! प्रारब्धं प्रस्तुतं कार्यम् अपरित्याज्यम् परित्यागाऽयोग्यम् इत्येतद्भवतां युष्माकं प्रत्यक्षमेव समक्षमेव । ततस्ततः तदनन्तरं किं जातं तत्कथयेत्यर्थः ।

तत इति । ततः प्रभृति तस्माद्दिवसादारभ्य चन्द्रगुप्तस्य मौर्यस्य शरीरे विग्रहे तद्रक्षणे इत्यर्थः । सहस्रम् अधिका गुणा यस्मिन् कर्मणि तत्सहस्रगुणम् (क्रियाविशेषणमिदम्) सहस्रगुणं यथा स्यात्तथा चाणक्यहतकः दुरात्मा विष्णुगुप्तः अप्रमत्तः सावधानः सन् एभ्य एव कुसुमपुरवासिराक्षसाप्तजनेभ्य एव ईदृशम् विषकन्यादिप्रयोगरूपम् अनिष्टं भवति जायते इत्यस्माद्धेतोः अन्विष्य संमृग्य कुसुमपुरवासिनः कुसुमपुरवास्तव्यान् तदार्भो तत्र विद्यमानानित्यर्थः। युष्माकमिमे युष्मदीयास्तान् युष्मदीयान् आप्तपुरुषान् विश्वासिनो लोकान् निगृहीतवान् आयत्तीकृतवान् ।

राक्षसः—( सोद्वेगम् । ) वयस्य ! कथय कथय के के निगृहीताः ?

विराधगुप्तः—अमात्य ! आदावेव तावत् क्षपणको जीवसिद्धिः सनिकारं नगरान्निर्वासितः ।

राक्षसः—( आत्मगतम् ) एतावत् सह्यं, न निष्परिग्रहं स्थानपरिभ्रंशः पीडयिष्यति । (प्रकाशम् ।) सखे ! कमपराधमुद्दिश्य निर्वासित एषः ?

विराधगुप्तः—एष दुरात्मा राक्षसप्रयुक्तया विषकन्यया पर्वतेश्वरं घातितवानिति ।

राक्षसः—( स्वगतम् । ) साधु कौटिल्य ! साधु ।

स्वस्मिन् परिहृतमयशः पातितमस्मासु घातितोऽर्द्धराज्यहरः ।
एकमपि नीतिबीजं बहुफलतामेति यस्य तव ॥ १९ ॥

---

सोद्वेगमिति । सत्रासं यथा स्यात्तथा कथयतीत्यर्थः । वयस्य मित्र ! कथय कथय ( वीप्सायां द्विरुक्तिः ) ब्रूहि के के किंनामका मदीयात्मजना निगृहीता दण्डिताः ।

अमात्येति । मन्त्रिन् ! आदौ पूर्वमेव तावच्छब्दो वाक्यालङ्कारे । जीवसिद्धिस्तन्नामकः क्षपणको बौद्धसन्न्यासिचिह्नधारी सनिकारं सतिरस्कारं यथा तथा नगरात्पुरो निर्वासितो निष्कासितः ।

आत्मगतमिति । स्वगतम् अव्यक्तं यथा तथा वदतीत्यर्थः । एतावत् जीवसिद्धिनिष्कासनम् सह्यम् सहनयोग्यम् , निर्नास्ति परिग्रहो विषयासक्तिर्यस्य तन्निष्परिग्रहं विषयासक्तिशून्यं स्थानभ्रंशः । वासस्थानपरित्यागः न पीडयिष्यति न व्यथां करिष्यति । प्रकाशं सुस्पष्टम् , सखे ! मित्र कम् किमभिधेयम् दोषम् उद्दिश्य निश्चित्य प्रख्याप्येत्यर्थः । एष क्षपणको निर्वासितो निष्कासितः ।

एष इति । एषः असौ दुरात्मा दुष्टो जीवसिद्धिः विषकन्यया विषनिर्मितकन्यया पर्वतेश्वरं तन्नामकराजानं घातितवान् विनाशितवान् ।

स्वगतमिति । अस्पष्टं वदतीत्यर्थः । भो कौटिल्य विष्णुगुप्त ! साधु साधु त्वया सम्यक् कृतमित्यर्थः ।

स्वस्मिन्निति । स्वस्मिन् आत्मनि अयशोऽकीर्त्तिः पर्वतेश्वरवधोद्भूतमित्यर्थः । परिहृतम् दूरीकृतम् जीवसिद्धिनिष्कासनादात्मनोऽपवादं दूरीकृतमिति भावः,

( प्रकाशम् । ) ततस्ततः ?

विराधगुप्तः—ततश्चन्द्रगुप्तशरीरमभिद्रोग्धुमनेन व्यापारिता दारुवर्मादय इति नगरे प्रख्याप्य शकटदासः शूलमारोपितः ।

राक्षसः—( सास्रम् । ) हा सखे ! शकटदास ! अयुक्तस्तवायमीदृशो मृत्युः !! अथवा, स्वाम्यर्थमुपरतो न शोच्यस्त्वमसि; वयमेवात्र शोच्याः,—ये नन्दकुलविनाशेऽपि जीवितुमिच्छामः ।

विराधगुप्तः—अमात्य ! स्वाम्यर्थ एव साधयितव्यः इति प्रयतस्व ।

---

तव अयशः जीवसिद्धिना राक्षसप्रणयया पर्वतेश्वरो हत इत्येतद्रूपम् अस्मासु मयि पातितं स्थापितम्, तथा अर्द्धराज्यहरः प्रतिश्रुतार्द्धराज्याऽधिकारी घातितो विनाशितः त्वयेति शेषः । यस्य तव एकमपि अद्वितीयमपि नीतिबीजं जीवसिद्धिनिष्कासनात्मको नीतिहेतुः बहूनि अनेकानि फलानि यस्य स बहुफलस्तस्य भावो बहुफलता तां बहुफलताम् एति प्राप्नोति नीतिबीजस्यानेकफलोत्पादकत्वे हेतुभूतस्य परिहृतमयश इत्यादेः पदार्थत्वेनाभिधानादस्मिन्पद्ये काव्यलिङ्गमलङ्कारः । उक्तञ्च दर्पणे तल्लक्षणं यथा—

हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम् ।

इति । अत्रापि वैदर्भी रीतिः । प्रसादश्च गुणः । आर्य्यावृत्तम् ॥ ११ ॥

प्रकाशं ततस्ततः। तदनन्तरं किं वृत्तान्तन्तत्कथयेति राक्षस एव स्पष्टं ब्रवीतीत्यर्थः ।

ततश्चन्द्रगुप्तेति । ततस्तदनन्तरम् अनेन शकटदासेन चन्द्रगुप्तशरीरं मौर्यकायम् अभिद्रोग्धुम् अभिजिघांसितुं दारुवर्मादयो दारुवर्म्मप्रभृतयो व्यापारिता नियोजिता इति इत्येतद्वृत्तं नगरे पत्तने प्रख्याप्य उद्घोष्य शकटदासस्तन्नामको राक्षससुहृत् शूलं लौहदण्डमारोपितः स्थापितः ।

हा सख इति । हा कष्टं, हे सखे ! हे मित्र, शकटदास ! तव अयम् एष ईदृशः एतद्विधो मृत्युर्मरणम् अयुक्तोऽयोग्यः । अथवा स्वामी प्रभुः आर्यः कारणं यस्मिन्तद्यथा तथा उपरतो मृतः अतस्त्वं न शोच्यः शोचितुं योग्योऽसि अत्रास्मिन्विषये वयमेव शोच्याः शोकयोग्याः स्मः, ये वयं नन्दकुलविनाशेऽपि नन्दवंशक्षयेऽपि ( भावे सप्तमी ) जीवितुं प्राणितुम् इच्छामः अभिलषामः ।

अमात्येति । मन्त्रिन् ! स्वामिनोऽर्थः स्वाम्यर्थः प्रभुकार्य्यमित्यर्थः । साध-

राक्षसः—सखे !—

अस्माभिरमुमेवार्थमालम्ब्य न जिजीविषाम् ।
परलोकगतो देवः कृतघ्नैर्नानुगम्यते ॥ २० ॥

विराधगुप्तः—अमात्य ! नैतदेवम् । ( अस्माकममुमेवार्थमित्यादि पुनः पठति ) ।

राक्षसः—सखे ! कथ्यतामपरस्यापि सुहृद्व्यसनस्य श्रवणे सज्जोऽस्मि ।

---

यितव्यः सम्पादयितव्य इत्यस्माद्धेतोः प्रयतसे चेष्टसे ।

अस्माभिरिति । कृतं घ्नन्तीति कृतघ्नास्तैः कृतघ्नैः कृतोपकाराऽभिज्ञैः अस्माभिः अमुमुक्तरूपम् अर्थम् प्रयोजनं स्वामिकार्यमेवेत्यर्थः । आलम्ब्य न जिजीविषाम् जीवनेच्छामाश्रित्येत्यर्थः । परलोकं गतः परलोकगतः लोकान्तरप्राप्तो देवो राजा नन्द इत्यर्थः। नानुगम्यते नानुम्रियते । परलोकवासिनः प्रभोरनुगमनमकृत्वा शत्रुविनाशरूपकार्यसम्पादनार्थमेव मम स्थितिर्न तु जीवनेच्छयेत्यर्थः । परलोकगतदेवस्यानुगमने हेतुभूतस्य कृतघ्नत्वस्य स्वामिकार्यसाधनस्य च पदार्थत्वेनाऽभिधानात्काव्यलिङ्गमलङ्कारः । अप्रश्नपूर्वकोक्तस्वामिकार्यसम्पादनात्मकवस्तुनः परलोकगतदेवानुगमननिराकरणात्परिसंख्यालंकारो वा ।

प्रश्नादप्रश्नतो वाऽपि कथिताद्वस्तुनो भवेत् ।
तादृगन्यव्यपोहश्चेच्छाब्द आर्थोऽथ वा भवेत् ॥

परिसंख्या,,

इत्युक्तलक्षणात् उभयालंकारसमावेशात्संसृष्टिनामालंकारः । रीतिरत्र वैदर्भी । माधुर्यश्च गुणः । करुणारसः । अनुष्टुप् छन्दः ॥ २० ॥

अमात्येति । मन्त्रिन् ! एतत् अमुमेवार्थमित्यादि भवदुक्तं वाक्यं नैतत् न एतदर्थकं किन्त्वन्यार्थकमेवेत्यर्थः । अतस्तदेव पद्यमन्यार्थपरत्वेन पुनः पठति । अस्माभिरित्यादि । उपकारशालिस्वामिप्रयोजनसम्पादनानुगमनशीला जना कृतघ्ना उच्यन्ते भवान् तु तत्कार्यसम्पादनार्थं तिष्ठतीति न कृतघ्नपदवाच्य इति तदर्थः ।

कथ्यतामिति । हे सखे ! मित्र, अपरस्यापि सुहृद्व्यसनस्य मित्रदुःखस्य श्रवणे आकर्णने सज्जोऽस्मि तत्परोऽस्मि त्वया कथ्यताममिधीयताम् ।

विराधगुप्तः—तत एतदुपलभ्य, चन्दनदासेनोपारूढसाध्वसेनापवाहितममात्यकलत्रम् ।

राक्षसः—सखे ! क्रूरस्य चाणक्यबटोः विरुद्धमयुक्तमनुष्ठितं चन्दनदासेन ?

विराधगुप्तः—अमात्य ! ननु अयुक्ततरः सुहृद्द्रोहः ।

राक्षसः—ततस्ततः ?

विराधगुप्तः—ततो याच्यमानेनापि यदा न समर्पितमनेनाऽमात्यकलत्रं, ततः कुपितेन चाणक्यबटुना—।

राक्षसः—( सोद्वेगं । ) स खलु व्यापादितः ?

विराधगुप्तः—"—अमात्य ! न खलु व्यापादितः,—किन्तु गृहीतगृहसारः सपुत्रकलत्रः संयम्य बन्धनागारे निक्षिप्तः ।

राक्षसः—ततः किं परितुष्टः कथयसि—"अपवाहितमनेन राक्षसकलत्रम्" इति ? ननु वक्तव्यं 'संयतः सकलत्रो राक्षसः" इति ।

( प्रविश्य पटाक्षेपेण पुरुषः । ) जअदु अज्जो । अज्ज ! एसो क्खु सअडदासो पडिहारभूमिमुवत्थिदो ( १ )

( १ ) जयत्वार्यः। आर्य! एष खलु शकटदासः प्रतिहारभूमिमुपस्थितः ।

तत इति । तदनन्तरं शकटदासस्य शूलारोपणानन्तरमित्यर्थः । एतदुपलभ्य इदं ज्ञात्वा उपारूढं समुत्पन्नं साध्वसं भयं यस्य स उपारूढसाध्वसस्तेन समुत्पन्नभयेनेत्यर्थः । चन्दनदासेन राक्षससुहृदा अमात्यकलत्रं राक्षसगृहजनः अपवाहितं स्थानान्तरं प्रापितम् ।

अमात्येति । मन्त्रिन् ! न खलु व्यापादितः हतः किन्तु गृहीतगृहसारः आदत्तगृहस्थितसकलधनः सपुत्रकलत्रः स्त्रीपुत्रसहितः चन्दनदासः संयम्य बद्ध्वा बन्धनागारे कारागृहे निक्षिप्तः स्थापितः ।

तत इति । तदा परितुष्टः सन्तुष्टः सन् किं कथयसि ब्रवीषि त्वमिति शेषः, अनेन चन्दनदासेन राक्षसकलत्रम् अपवाहितं स्थानान्तरं प्रापितमिति, किन्तु सकलत्रः स्त्रीसहितो राक्षसोऽमात्यः संयतः सम्बद्ध इत्येव वक्तव्यम् । आवयोर्मित्रयोर्भिन्नत्वाभावात सपुत्रकलत्रस्य बन्धनेनैव सकलत्रोऽहं बद्धोऽस्मीत्यर्थः ।

प्रविश्य पटाक्षेपेणेति । पटस्य तिरस्करिण्या अक्षेपेण क्षेपणमन्तरेण अन-

राक्षसः—प्रियंवदक ! अपि सत्यम् ?

प्रियम्वदकः—किं अलिअं अमच्चपादेसु विणिवेदेमि । ( १ )

राक्षसः—सखे ! विराधगुप्त ! कथमेतत् ।

विराधगुप्तः—अमात्य ! स्यादेतदेवं यतो भव्यं रक्षति भवितव्यता ।

राक्षसः—प्रियंवदक ! यद्येवं, तत् किं चिरयसि ? क्षिप्रं प्रवेशय तम् ।

प्रियंवदकः—जं अमच्चो आणवेदि त्ति । ( २ ) ( निष्क्रान्तः । ) ( ततः प्रविशति सिद्धार्थकेनानुगम्यमानः शकटदासः )

शकटदासः—( दृष्ट्वा आत्मगतम् ) ।—

दृष्ट्वा मौर्य्यमिव प्रतिष्ठितपदं शूलं धरित्र्यास्तले
तल्लक्ष्मीमिव चेतसः प्रमथिनीमुन्मुच्य वध्यस्रजम् ।
श्रुत्वा स्वाम्युपरोधरौद्रविषमानाध्माततूर्य्यस्वनान्
न ध्वस्तं प्रथमाभिघातकठिनं मन्ये मदीयं मनः ॥ २१ ॥

( १ ) किमलीकममात्यपादेपु विनिवेदयामि ।

( २ ) यदमात्य आज्ञापयति इति ।

पसारणेनेत्यर्थः पटापसारमकृत्वैवेति यावत् । पुरुषः प्रविश्य रङ्गस्थानाभ्यन्तरमागत्य ब्रवीति ।

जयत्वार्य इति । आर्यो भवान् जयतु सर्वोत्कर्षेण वर्तताम् । आर्य श्रीमन् ! एषः, असौ शकटदासः तन्नामा कायस्थो भवत्सुहृत् प्रतिहारभूमिं द्वारदेशम् उपस्थित आगतः ।

किमिति । अमात्यपादेपु भवच्चरणसमीपेपु किम् अलीकं मिथ्यां विनिवेदयामि, कथयामि । नैवाऽसत्यं वक्तुं शक्नोमीत्यर्थः ।

अमात्येति । मन्त्रिन् ! एतत् शकटदासस्याऽऽगमनम् एवं सत्यं स्यात्भवेत्, यतः यस्मात् भव्यमस्यास्तीति भव्यः ( अर्शादित्वादच् ) तं भव्यं कल्याणिनं भवितव्यता भाग्यं रक्षति पालयति ।

यद्येवमिति । यदि एवम् शकटदासागमनं सत्यं तत् तदा किं किमर्थं चिरयसि विलम्बसे । क्षिप्रं शीघ्रं तं शकटदासकायस्थं प्रवेशय आनय ।

दृष्ट्वेति । धरित्र्यास्तले भूमौ मौर्यमिव चन्द्रगुप्तमिव प्रतिष्ठितं पदं यस्य स

( नाट्येनावलोक्य सहर्षम् । ) अयममात्यराक्षसस्तिष्ठति । य एषः,—

अक्षीणभक्तिः क्षीणेऽपि नन्दे स्वाम्यर्थमुद्वहन् ।
पृथिव्यां स्वामिभक्तानां प्रमाणे परमे स्थितः ॥ २२ ॥

प्रतिष्ठितपदस्तं प्रतिष्ठितपदं प्राप्तप्रतिष्ठं दृढस्थापितमूलञ्च शूलं मारणार्थलोहदण्डं दृष्ट्वा अवलोक्य । तल्लक्ष्मीमिव चन्द्रगुप्तश्रियमिव चेतःप्रमथिनीं हृदयविदारिणीं वध्यस्रजं वध्यचिह्नभूतां रक्तकुसुममालाम् उन्मुच्य परिधाय स्वामिनः प्रभोः उपरोधेन हिंसनेन रौद्राः घोराः विषमा अश्राव्या इति स्वाम्युपरोधरौद्रविषमास्तान् तथोक्तान् आध्माततूर्यस्वनान् ताडितडिण्डिमशब्दान् श्रुत्वा आकर्ण्य मदीयं मनश्चित्तं प्रथमाऽभिघातकठिनं प्राक्ताडनेन कठिनं दृढं न ध्वस्तं न विशीर्णम्, इत्यहं मन्ये जाने । मनसोऽध्वंसने प्रथमाभिघातकठिनमिति हेत्वभिधानात् काव्यलिङ्गालङ्काराऽनुप्राणितमन्येशब्दप्रयोगनिबन्धनोत्प्रेक्षालङ्कारः, स च मौर्य-शूलयोः लक्ष्मी-वध्यस्रजोश्चोपमानोपमेयभावेन प्रतिष्ठितपदमिति श्लिष्टपदोत्थापितत्वेन च श्लेषानुप्राणितोपमालङ्कारेण संसृष्टः । शूलवध्यस्रगुपमानाभ्यां मौर्य-लक्ष्म्योःसाम्यप्रतिपादनं शकटदासस्यासूयातिशयद्योतकमित्यलङ्कारेण वस्तुध्वनिः । शार्दूलविक्रीडितं छन्दः ॥ २१ ॥

नाट्येनेति । नटस्येदं नाट्यं तेन नाट्येन नटोचितव्यापारविशेषेणेत्यर्थः । अवलोक्य दृष्ट्वा सहर्षं सानन्दं यथा तथा ब्रवीतीत्यर्थः । अयम् एषः अमात्यराक्षसः राक्षसनामा मन्त्री तिष्ठति आस्ते ।

अक्षीणभक्तिरिति । नन्दे तन्नाम्नि राज्ञि क्षीणेऽपि अधिगतनाशेऽपि विनष्टेऽपीत्यर्थः । अक्षीणा अनधिगतह्रासा भक्तिरनुरागो यस्य स अक्षीणभक्तिः अक्षुण्णानुरागः भवानिति शेषः । स्वामिनोऽर्थः स्वाम्यर्थस्तं स्वाम्यर्थं प्रभुकार्यम् उद्वहन् साधयन् पृथिव्यां भूमौ स्वामिभक्तानां प्रभुसेवकानां मध्ये परमे उत्कृष्टे प्रमाणे दृष्टान्ते स्थितो विद्यमानः अस्तीति क्रियाविशेषः । नन्दान्वयविनाशेऽपि राक्षसानुरागस्याक्षीणत्वे कारणाऽभावात्तमन्तराक्षीणभक्तिरूपकार्योत्पत्त्या विभावनानामाऽत्राऽलङ्कारः । तदुक्तं—

विभावना विना हेतुं कार्योत्पत्तिर्यदुच्यते ।

इति । जीवति नन्दान्वये शत्रुनिर्यातनरूपस्वामिकार्याऽसम्पादनात् नष्टे तस्मिन् भक्तेः क्षीणत्वे तत्कार्यसम्पादनासम्भवात् क्षीणेऽपि नन्दे राक्षसस्य भक्तिर-

( उपसृत्य ) जयत्यमात्यः

राक्षसः—( विलोक्य सहर्षम् । ) सखे शकटदास ! दिष्ट्या कौटिल्य गोचरगतोऽपि दृष्टोऽसि, तत् परिष्वजस्व माम् ।

( शकटदासस्तथा करोति ) ।

राक्षसः—( तं परिष्वज्य । ) इदमत्रासनमास्यताम् ।

शकटदासः—यदाज्ञापयत्यमात्यः ।

( इति नाट्येनोपविष्टः ) ।

राक्षसः—सखे ! शकटदास ! अथ कोऽयमीदृशस्य मे हृदयानन्दस्य हेतुः ?

शकटदासः—( सिद्धार्थकं निर्दिश्य । ) अमात्य ! प्रियसुहृदा सिद्धार्थ

क्षीणेति राक्षसनिष्ठनन्दान्वयविषयकानुरागस्याक्षीणत्वे स्वाम्यर्थसाधनस्य हेतुत्वम् पपन्नम् तथा च राक्षसस्याक्षीणभक्तित्वे हेतुभूतस्य स्वाम्यर्थसाधनस्य पदार्थत्वेनो क्तत्वादिह काव्यलिङ्गमलङ्कार इति केचित अनुष्टुपवृत्तम् ॥ २२ ॥

उपसृत्येति । उपसृत्य समीपमेत्य अमात्यो मन्त्री भवानिति शेषः जयति सर्वोत्कर्षेण वर्तताम् ।

विलोक्येति । विलोक्य दृष्ट्वा सहर्षं सानन्दं यथा तथा ब्रवीति । सखे मित्र शकटदास ! दिष्ट्या भाग्येन कौटिल्यस्य गोचरः कौटिल्यगोचरस्तं गतः कौटिल्य गोचरगतः चाणक्यसमीपं प्राप्तोऽपि दृष्टोऽसि त्वमित्यादिः मयेति शेषः, तत्तस्मा त्कारणात् मां परिष्वजस्व आलिङ्ग ( परिपूर्वकात् ष्वञ्ज आसङ्गे इत्यस्माद्धातोर्लो मध्यमपुरुषैकवचने "उपसर्गात्सुनोती"ति षत्वे रूपम् ) ।

शकटदासः तन्नामा राक्षसप्रणयी तथा करोति राक्षसमालिङ्गतीत्यर्थः ।

तमिति । राक्षसोऽपि तं शकटदासं परिष्वज्य आलिङ्ग्य । इदम् एतत् प्रत्य क्षदृश्यमानम् आसनम् उपवेशनार्थं कुशादिनिर्मितमास्तरणम् अस्तीति शेषः । आ स्यतामुपविश्यताम् त्वयेत्यादिः ।

सखे इति । सखे मित्र शकटदास, अथ, वाक्यालङ्कारेऽत्र प्रयुक्तोऽयमथशब्दः मे मम ईदृशस्य अनुपमस्येत्यर्थः । हृदयानन्दस्य मानसप्रसादस्य कोऽयं हेतुः कारणम् ।

सिद्धार्थकमिति । सिद्धार्थकं चाणक्यप्रणिधिं निर्दिश्य ब्रवीति इति शेषः

केन घातकान् विद्राव्य वध्यस्थानादपवाहितोऽस्मि ।

राक्षसः—( सहर्षम् । ) भद्र सिद्धार्थक ! काममपर्याप्तमिदमस्य प्रियस्य, तथापि गृह्यताम् । ( इति स्वगात्रादवतार्य भूषणानि प्रयच्छति । )

सिद्धार्थकः—( गृहीत्वा पादयोर्निपत्य स्वगतम् । ) अअं क्खु अज्जोवदेसो होदु तथा करिस्सं । ( प्रकाशम् । ) अमच्च ! एत्थ मे पढमप्पविट्टस्स णत्थि कोवि परिचिदो, जहिं एदं अमच्चस्स प्पसादं णिक्खिविअ णिव्वुदो भविस्सं; ता इच्छामि अहं इमाए मुद्दिआए मुद्दिदं अमच्चस्स ज्जेव भाण्डागारे णिक्खिविदुं, जदा मे एदिणा प्पओअणं भवि·

अमात्य मन्त्रिन् ! प्रियसुहृदा प्रियमित्रेण अनेन साक्षाद्दृश्यमानेन सिद्धार्थकेन तन्नाम्ना चाणक्यप्रणिधिना घातकान् हिंसकान् विद्राव्य संताड्य दण्डयित्वेति यावत् । वध्यस्थानात् अपवाहितः समानीतः अस्मि भवामि ।

सहर्षमिति । सानन्दं यथा तथा ब्रवीतीत्यर्थः । भद्र कल्याणिन् सिद्धार्थक ! अस्य त्वत्कृतस्य प्रियस्य अतिशयानन्दप्रदस्य वध्यस्थानाच्चन्दनदासानयनरूपकार्यस्येत्यर्थः । इदं मया दीयमानं वस्त्विति शेषः । कामं यथेच्छम् अपर्याप्तम् अननुरूपम् तथापि तस्याऽपर्याप्तत्वेऽपि गृह्यताम् आदीयताम् । इति इत्यभिधाय स्वगात्रात् निजशरीरात् अवतार्य उन्मुच्य प्रयच्छति ददाति ।

गृहीत्वेति । गृहीत्वा आदाय अलङ्करणमित्यादिः पादयोश्चरणयोः निपत्य शिरस्संयोज्य स्वगतम् अव्यक्तं यथा तथा ब्रवीति । अयं खलु आर्योपदेशः चाणक्यशिक्षा भवतु अस्तु तथा करिष्यामि पारितोषिकग्रहणार्थं । कौटिल्येन यथा शिक्षितोऽस्मि तथाऽनुष्ठास्यामीत्यर्थः । प्रकाशं सुस्पष्टं यथा तथाऽभिदधाति । अमात्य मन्त्रिन् ! अत्रास्मिन् स्थाने प्रथमप्रविष्टस्याऽभूतपूर्वागमनस्य मे मम कोऽपि परिचितः सुहृत् नाऽस्ति न वर्तते, यत्र यस्मिन् जने इमम् भवता दीयमानं प्रसादम् अनुग्रहं निक्षिप्य न्यासीकृत्य संस्थाप्येत्यर्थः । निर्वृतः सुखी भविष्यामि; तत्तस्माद्धेतोः अहम् एतया भवदीयया मुद्रया अङ्गुलिमुद्रया मुद्रितं चिह्नितं प्रसादमिति शेषः । अमात्यस्यैव सचिवस्यैव भाण्डागारे कोषगृहे निक्षेप्तुं स्थापयितुम् इच्छामि अभिलषामि, यदा यस्मिन्काले एतेन भवद्दत्तालङ्करणात्मकवस्तुना मम प्रयोजनं कार्यं भविष्यति तदा ग्रहीष्यामि आदास्यामि, यद्वा भवदन्वेषणार्थं कटकान्निर्गमिष्यामि तदा आदास्यामीति भावः ।

स्सदि तदा गेह्णिस्सं। (१)

राक्षसः--भद्र ! भवतु, को दोषः ? शकटदास ! एवं क्रियताम्।

शकटदासः--यदाज्ञापयतीति। ( मुद्रां विलोक्य जनान्तिकम् ) अमात्य ! भवन्नामाङ्कितेयं मुद्रा।

राक्षसः--(विलोक्य सविषादं सवितर्कमात्मगतम्। ) सत्यं नगरात् निष्क्रामतो मम हस्ताद् ब्राह्मण्या उत्कण्ठाविनोदार्थं गृहीता तत् कथमस्य हस्तमुपगता ?( प्रकाशम् ) भद्र ! सिद्धार्थक ! कुतस्त्वयेयमधिगता ?

---

( १ ) इदं खलु आर्य्योपदेशा भवतु। तथा करिष्यामि। अमात्य ! अत्र मे प्रथमप्रविष्टस्य नास्ति कोऽपि परिचितः, यत्रेममात्यस्य प्रसादं निक्षिप्य निर्वृतो भविष्यामि; तदिच्छाम्यहमेतया मुद्रया मुद्रितममात्यस्यैव भाण्डागारे निक्षेप्तुम। यदा मे एतेन प्रयोजनं भविष्यति, तदा ग्रहीष्यामि।

---

भद्रेति। भद्र साधो सिद्धार्थक ! भवतु अस्तु को दोषः मत्कोषागारे अलङ्करणस्थापने का हानिः, शकटदास एवं क्रियताम् सिद्धार्थको यदभिदधाति तद्विधीयतामित्यर्थः। सिद्धार्थकस्याऽलङ्करणं स्वकोशागारे स्थाप्यतामिति भावः।

यदिति। अमात्यः सचिवो भवानिति शेषः। यद् आज्ञापयति निर्दिशति तत्करोमीत्यर्थः। मुद्राम् अङ्गुलिमुद्राम् अवलोक्य दृष्ट्वा जनान्तिकम् अस्पष्टं कर्णे कथनमिति यावत्–यदुक्तम्—

जनान्तिकं तु तत्प्रोक्तं यत्तृतीयाद्यगोचरम्—

साहित्यदर्पणे च—

त्रिपताककरेणान्यानपवार्यान्तरा कथाम्।

अन्योऽन्यामन्त्रणं यत्स्यात्तज्जनान्ते जनान्तिकम्।

जनान्तिकमप्रकाश इति त्रिकाण्डशेषे च।

अमात्य मन्त्रिन् ! इयं मुद्रा अङ्गुलिमुद्रा भवन्नामाङ्किता भवन्नामचिह्निता अस्तीति शेषः।

विलोक्येति। विलोक्य दृष्ट्वा सविषादं सचिन्तं सवितर्कं सविचारम्-आत्मगतम् अनतिस्पष्टं–( क्रियाविशेषणमिदम्पदत्रयम् )। सत्यं यथार्थमेव नगरात्पुरः निष्क्रामतो बहिर्निस्सरतः मम हस्तात् करात् ब्राह्मण्या मम स्त्रिया उत्क-

सिद्धार्थकः--अमच्च ! अत्थि कुसुमपुरणिवासो मणिआरसेट्ठी चन्दणदासो णाम तस्स गेहदुआरे भूमिए पड़िदा, मए समासादिदा (१)

राक्षसः--युज्यते ।

सिद्धार्थकः--अमच्च ! किं एत्थ जुज्जदि ? ( २ )

राक्षसः--भद्र ! यतो महाधनानां गृहे पतितस्यैवंविधस्योपलब्धिरिति ।

शकटदासः--सखे सिद्धार्थक ! अमात्यनामाङ्कितेयं मुद्रा, तदितो बहुतरेणार्थेन भवन्तममात्यस्तोषयिष्यति, तद् दीयतामेषा मुद्रा।

---

( १ ) अमात्य ! अस्ति कुसुमपुरनिवासी मणिकारश्रेष्ठी चन्दनदासो नाम, तस्य गेहद्वारे भूमौ पतिता, मया समासादिता । ( "समासादिदा" इत्यत्र "लद्धा" इति पाठे—"लब्धा" इति सं० ) ।

( २ ) अमात्य ! किमत्र युज्यते ?

---

ण्ठाविनोदनार्थम् उन्मनस्कत्वप्रशमनार्थं गृहीता आदत्ता, तत् तस्मात्कारणात् कथं केन प्रकारेण अस्य सिद्धार्थकस्य हस्तं करम् अधिगता प्राप्ता, प्रकाशं सुस्पष्टम् भद्र साधो सिद्धार्थक, त्वया भवता इयं मुद्रा कुतः कस्मात् अधिगता प्राप्ता ।

अमात्येति । अमात्य मन्त्रिन्! कुसुमपुरे निवसति तच्छीलः कुसुमपुरनिवासी कुसुमपुरवास्तव्यः चन्दनदासो नाम मणिकारश्रेष्ठी वैश्यजातीयः अस्ति वर्तते । तस्य चन्दनदासस्य गेहद्वारे भवनप्रतीहारे भूमौ पृथिव्यां पतिता स्खस्ता, इयं मुद्रेति शेषः, मया समासादिता प्राप्ता लब्धेति यावत् ।

राक्षसस्य मुद्राधीशत्वगोपनमवगच्छन्नपि सिद्धार्थकोऽनवगच्छन्निव राक्षसं पृच्छति–अमात्य किमत्र युज्यत इति ।

भद्रेति । भद्र कल्याणिन् ! यतो यस्मात् महत् प्रचुरं धनम् अर्थो येषां ते महाधनास्तेषां महाधनानां प्रचुरविभवशालिनां पुरुषाणामिति शेषः । गृहे सद्मनि पतितस्य स्रस्तस्य एवंविधस्य महामूल्यस्य वस्तुनः उपलब्धिः प्राप्तिः भवितुमर्हतीति शेषः ।

सखे इति । सखे सिद्धार्थक, इयं प्रत्यक्षदृश्यमाना मुद्रा अङ्गुलिमुद्रा अमात्यनामाङ्किता मन्त्रिराक्षसनामचिह्निता अस्तीति शेषः, तत्तस्मात् इतो मुद्रामूल्यात्

सिद्धार्थकः—अज्ज ! एसो मे परितोसो, जं अमच्चो इमाए मुद्दाए परिग्गहप्पसादं करेदित्ति । ( १ ) ( इति मुद्रां समर्पयति । )

राक्षसः—सखे शकटदास ! अनयैव मुद्रया स्वाधिकारे व्यवहर्तव्यं भवता ।

शकटदासः—यदाज्ञापयत्यमात्यः ।

सिद्धार्थकः—अमच्च ! विण्णवेमि किं पि । ( २ )

राक्षसः—भद्र ! विश्रब्धं ब्रूहि ।

सिद्धार्थकः—जाणादि ज्जेव अमच्चो जधा चाणक्कहदअस्स विप्पिअं कदुअ, णत्थि मे पुणो पाडलिउत्ते प्पवेसो त्ति, ता इच्छामि अहं अज्जस्स ज्जेव सुप्पसण्णे पादे सेविदुं । ( ३ )

---

( १ ) आर्य ! एष मे परितोषो, यदमात्योऽस्या मुद्रायाः परिग्रहप्रसादं करोतीति ।

( २ ) अमात्य ! विज्ञापयामि किमपि ।

( ३ ) जानात्येवामात्यो, यथा चाणक्यहतकस्य विप्रियं कृत्वा, नास्ति मे पुनः पाटलिपुत्रे प्रवेश इति, तदिच्छाम्यहममात्यस्यैव सुप्रसन्नौ पादौ सेवितुम् ।

---

बहुतरेण प्रचुरेण अर्थेन धनेन भवन्तं त्वाम् अमात्यो राक्षसः तोषयिष्यति आनन्दयिष्यति, तत्तस्मात् एषा भवदीया मुद्रा अङ्गुलिमुद्रा दीयतां वितीर्यताम् ।

आर्येति । आर्य, बुद्धिमन् ! मे मम एषः परितोषः सन्तोषः, अस्तीति शेषः । यत् यस्मात् अमात्यो राक्षसः अस्याः विद्यमानायाः मुद्राया अङ्गुलिमुद्रायाः परिग्रहेण ग्रहणेन स्वीकारेणेति यावत् प्रसादं प्रसन्नतां करोति जनयति ।

अनयेति । भवता त्वयाऽनयैव मुद्रया राक्षसाङ्गुलिमुद्रया स्वनियोगे आत्मनिदेशे व्यवहर्तव्यं व्यवहारः कर्तव्य इत्यर्थः ।

जानातीति । अमात्यो भवान् जानात्येवावगच्छत्येव यथा यत् चाणक्यहतकस्य दुष्टकौटिल्यस्य विप्रियं कृत्वा विरोधं विधाय मे मम पाटलिपुत्रे तदाख्यनगरे नास्ति प्रवेशः स्थितिः तत्तस्मात् अहमामात्यस्यैव भवत एव सुप्रसन्नौ सुन्दरौ पादौ चरणौ सेवितुमवलम्बितुमिच्छामि कामये ।

राक्षसः—भद्र ! प्रियं नः, किन्तु त्वदभिप्रायपरिज्ञानेनाऽन्तरितोऽस्माकमनुनयः । तदेवं क्रियताम् ।

सिद्धार्थकः—( सहर्षम् । ) अणुग्गहिदोह्मि । ( १ )

राक्षसः—सखे शकटदास ! विश्रामय सिद्धार्थकम् ।

शकटदासः—यदाज्ञापयत्यमात्यः ।

( इति सिद्धार्थकेन सह निष्क्रान्तः । )

राक्षसः—सखे विराधगुप्त ! वर्णयेदानीं कुसुमपुरवृत्तान्तशेषम् । अपि क्षमन्ते कुसुमपुरनिवासिनोऽस्मदुपजापं चन्द्रगुप्तप्रकृतयः ?

विराधगुप्तः—अमात्य ! बाढं क्षमन्ते, ननु यथाप्रधानमनुगच्छन्त्येव ।

राक्षसः—सखे ! किं तत्र कारणम् ?

---

( १ ) अनुगृहीतोऽस्मि ।

---

भद्रेति । भद्र सिद्धार्थक ! प्रियं नः अस्माकं प्रियम् इष्टम् मत्रिकटे त्वत्स्थितिरिष्टेत्यर्थः, त्वदभिप्रायपरिज्ञानेन त्वदाशयबोधेन अस्माकम् अनुनयः अनुवर्तनम् अनुरोध इति यावत् । अन्तर्हितः तिरोहितः । तव तात्पर्यज्ञानात्प्राक् नाऽभिमत इह वास इदानीन्तु तज्ज्ञात्वा अभिमत एवेति भावः ।

वर्णयेति । मित्र विराधगुप्त ! इदानीं साम्प्रतं कुसुमपुरस्य वृत्तान्तं कुसुमपुरवृत्तान्तं तस्य शेषस्तं तथोक्तम् कुसुमपुरोदन्ताऽवशिष्टभागमित्यर्थः वर्णय कथय । कुसुमपुरनिवासिनः कुसुमपुरवास्तव्याः चन्द्रगुप्तप्रकृतयः मौर्यप्रजाः अस्मदुपजापम् अस्मत्कृताऽन्योऽन्यभेदम् अपि क्षमन्ते सहन्ते किम् मौर्ये नाऽप्रणयिन्य इत्यर्थः ? ( प्रश्नार्थकोऽत्राऽपिशब्दः ) ।

बाढमिति । (स्वीकारार्थकमव्ययमिदम् ) क्षमन्ते त्वत्कृतोपजापमित्यादिः । मौर्यप्रजानां न केवलं मौर्यप्रजानामेवापि तु मौर्यामात्यादीनां भद्रभटादीनामपि, यथाप्रधानमिति प्रधानं राजानं चन्द्रगुप्तं मन्त्रिणं कौटिल्यञ्चाऽनतिक्रम्येत्यर्थः, राजामन्त्रिणावप्यन्योऽन्यभेदं प्राप्तुतः किमितरे तदनुवर्त्तिन इति भावः । अनुगच्छन्ति अन्योऽन्यभेदात्मकं कार्यमनुसरन्ति । प्राक्परिगृहीतोपजापैरित्यादिपद्यमाद्वक्ष्यमाणं तत ।

किं तत्रेति । हेसखे मित्र ! तत्र राजसचिवयोर्भेदे किं कारणम् को हेतुरित्यर्थः ।

विराधगुप्तः--अमात्य ! इदं तत्र कारणम्;--मलयकेतोरपक्रमणात् प्रभृति पीडितश्चन्द्रगुप्तेन चाणक्य इति चाणक्योऽपि जितकाशितयाऽसहमानस्तैस्तैराज्ञाभङ्गैश्चन्द्रगुप्तस्य चेतसः पीडामुपचिनोति, अयमपि ममानुभवः ।

राक्षसः--( सहर्षम् ) सखे विराधगुप्त ! तद्गच्छ त्वम् अनेन आहितुण्डकच्छद्मना पुनः कुसुमपुरमेव । तत्र हि मे सुहृत् वैतालिकव्यञ्जनः स्तनकलशो नाम प्रतिवसति । स त्वया मद्वचनात् वाच्यः, यथा चाणक्येन क्रियमाणेष्वाज्ञाभङ्गेषु चन्द्रगुप्तस्त्वया समुत्तेजनसमर्थैः श्लोकैरुपश्लोकयितव्य इति । कार्य्यञ्चातिनिभृतं करभकहस्तेन सन्देष्टव्यम् इति ।

विराधगुप्तः—यदाज्ञापयत्यमात्यः ।

( इति निष्क्रान्तः )

---

अमात्येति । मन्त्रिन्! मलयकेतोः पर्वतकपुत्रस्यापक्रमणात्प्रभृति पलायनमारभ्य चन्द्रगुप्तेन मौर्येण चाणक्यः कौटिल्यः पीडितो नितरां व्यथितः, चाणक्योऽपि कौटिल्योऽपि जितेन जयेन शत्रुपराजयेन काशते स्पर्द्धते इति जितकाशी तस्य भावो जितकाशिता तया जितकाशितया अतिगर्विततयेत्यर्थः । असहमानोऽक्षाम्यन् चन्द्रगुप्तमित्यादिः तैस्तैः चन्द्रगुप्तक्लेशजनकैः आज्ञाभङ्गैर्निदेशापालनैः चन्द्रगुप्तस्य वृषलस्य चेतसो हृदयस्य पीडां व्यथामुपचिनोति उत्पादयति इति तयोरन्योऽन्यभेदे कारणम् । अयमपि ममाऽनुभवः इत्थं तत्रत्योदन्तमवगत्यैवागतमित्यर्थः (इदमपि बीजान्वेषणम् ) ।

सहर्षमिति । सानन्दं यथा स्यात्तथा ब्रवीतीत्यर्थः। सखे विराधगुप्त ! तत्तस्मात् त्वम् अनेन पूर्वाङ्गीकृतेन आहितुण्डिकच्छद्मना व्यालोपजीविव्याजेन पुनर्भूयः कुसुमपुरमेव चन्द्रगुप्ताधिवासस्थानमेव गच्छ याहि । तत्र कुसुमपुरे मे मम सुहृत् सखा वैतालिकव्यञ्जनः स्तुतिपाठकस्य मागधस्य लिङ्गधारीत्यर्थः। स्तनकलशो नाम स्तनकलशाख्यः प्रतिवसति तिष्ठति । स स्तनकलशः त्वया भवता वाच्योऽभिधातव्यः किन्तदाह यथेति । यथा येन प्रकारेण चाणक्येन कौटिल्येन आज्ञाभङ्गेषु निदेशव्याघातेषु क्रियमाणेषु विधीयमानेषु चन्द्रगुप्तो मौर्यः समुत्तेजनसमर्थैः मन्युदीपनयोग्यैः श्लोकैः स्तुत्यर्थकपद्यैः उपश्लोकयितव्यः स्तोतव्यः, इति कार्यञ्च स्वकीय-

पुरुषः—( प्रविश्य । ) जेदु अमच्चो । अमच्च ! सअडदासो विण्णवेदि, एदे क्खु तिण्णि अलङ्कारविसेसा विक्कीअन्ति, ता पच्चक्खीकरेदु अमच्चो । ( १ )

राक्षसः—( विलोक्यात्मगतम् । ) अहो ! महार्हाण्याभरणानि । ( प्रकाशम् ) । भद्र ! उच्यतां शकटदासः, परितोष्य विक्रेतारं गृह्यन्तामिति ।

पुरुषः—जं अमच्चो आणवेदि । ( २ )

( इति निष्क्रान्तः )

राक्षसः—( स्वगतम् । ) यावदहमपि कुसुमपुराय करभकं प्रेषयामि । ( उत्थाय । ) अपि नाम दुरात्मनश्चाणक्याच्चन्द्रगुप्तो भिद्येत,

( १ ) जयति जयत्यमात्यः । अमात्य ! शकटदासो विज्ञापयति, एते खलु त्रयोऽलङ्कारविशेषा विक्रीयन्ते, तत् प्रत्यक्षीकरोत्वमात्यः ।

( २ ) यदमात्य आज्ञापयति ।

---

कृत्यमपि करभकहस्तेन करभकद्वारा सन्देष्टव्यं प्रेषयितव्यम् ।

प्रविश्येति । रङ्गस्थानमित्यादिः, ब्रवीतीति शेषः । अमात्यः सचिवो जयति सर्वोत्कर्षेण वर्त्तताम् । अमात्य मन्त्रिन् ! शकटदासः एतदाख्यः कायस्थः भवत्सुहृत् विज्ञापयति निवेदयति, एते खलु त्रयोऽलंकारविशेषा महार्हास्त्रयोऽलंकाराः विक्रीयंते तत् अलंकारत्रयमित्यर्थः । अमात्यो भवान् प्रत्यक्षीकरोतु पश्यतु ( इदमपि बीजान्वेषणम् ) ।

विलोक्येति । विलोक्य सम्यगालोच्य आत्मगतं सर्वैरश्राव्यं यथा स्यात्तथा कथयतीत्यर्थः । अहो आश्चर्यम् , महान् अधिकोऽर्हो मूल्यं येषां तानि महार्हाणि अधिकमूल्यानि आभरणानि अलङ्करणानि सन्तीति शेषः । प्रकाशं सुस्पष्टं वदति, भद्र कल्याणिन् शकटदासः उच्यताम् अभिधीयताम् विक्रेतारम् अलङ्करणविक्रयणकारिणं सन्तोष्य प्रसाद्य गृह्यन्ताम् आदीयन्ताम् आभरणानीत्यादिः ।

यावदिति । यावत् कालम् अहमपि कुसुमपुरं गन्तुमित्यर्थः । करभकं तन्नामानं चरं प्रेषयामि प्रहिणोमि । दुरात्मनः दुःस्वभावात् चाणक्यात् कौटिल्यात् चन्द्रगुप्तो मौर्यो भिद्येत् वैमनस्यं प्राप्नुयात्। आकर्णितः। ततः प्रभृतीत्यादिविराध-

अथवा सिद्धमेव समीहितं पश्यामि । कुतः ?—

मौर्य्यस्तेजसि सर्वभूतलभुजामाज्ञापको वर्त्तते
चाणक्योऽपि मदाश्रयादयमभूद्राजेति जातस्मयः ।
राज्यप्राप्तिकृतार्थमेकमपरं तीर्णप्रतिज्ञार्णवं
सौहार्दात् कृतकृत्यतैव नियतं लब्धान्तरा भेत्स्यति ॥ २३ ॥

( इति निष्क्रान्ताः सर्वे । )

इति द्वितीयोऽङ्कः ॥ २ ॥

---

गुप्तोक्तवचनो राक्षसश्चन्द्रगुप्तविनाशसम्पादकोद्यमे निरुत्साहः ।

आशा बलवती राजन् शल्यो जेष्यति पाण्डवान् ।

इति न्यायात् अतोऽग्रे स्तनकलशद्वारा मौर्य-चाणक्यान्योऽन्यवैमनस्यसम्पादनपूर्वकेप्सितनिष्पत्तिमिच्छति-अपि नामेति ।

मौर्य इति । तेजसि प्रभावे विद्यमान इति शेषः । गर्वित इत्यर्थः। मौर्यश्चन्द्रगुप्तः सर्वभूतलभुजां सकलभूपतीनाम् आज्ञापकः शासको वर्तते । अयं मौर्यो मदाश्रयात् मम साहाय्यात् राजा नृपोऽभूत् इति हेतोश्चाणक्योऽपि कौटिल्योऽपि जातस्मयो गर्वितः आभ्यां हेतुभ्यां लब्धान्तरा प्राप्ताऽवकाशा उभयोः कृतकृत्यतैव एकं राज्यप्राप्तिकृतार्थं राज्यप्राप्त्या सिद्धाभीष्टं मौर्यम् अपरं तीर्णप्रतिज्ञार्णवं सम्पादितप्रतिश्रुतकार्यं चाणक्यञ्च नियतं निश्चितं सौहार्दात् स्नेहात् भेत्स्यति पृथक् करिष्यति । चन्द्रगुप्तो राज्यप्राप्तिकृतार्थ इत्यस्य चाणक्यस्तीर्णप्रतिज्ञार्णव इत्यस्य च क्रमशो निर्देशात् अत्र यथासंख्यनामालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ २३ ॥

इत्थं पताकाप्राप्त्याशानुगुण्येन गर्भसन्धेर्द्वादशाङ्गानि निरूपितानि गर्भसन्धिश्च समाप्तः ।

इति मैथिल श्रीकनकलालठक्कुरविरचितायां मुद्राराक्षसभावबोधिनी-व्याख्यायां द्वितीयोऽङ्कः ॥

# तृतीयोऽङ्कः ।

( ततः प्रविशति कञ्चुकी । )

कञ्चुकी—

रूपादीन् विषयान् निरूप्य करणैर्यैरात्मलाभस्त्वया
लब्धस्तेष्वपि चक्षुरादिषु हताः स्वार्थावबोधक्रियाः ।
अङ्गानि प्रसभं त्यजन्ति पटुतामाज्ञाविधेयानि मे
न्यस्तं मूर्ध्नि पदं तवैव जरया, तृष्णे ! मुधा माद्यसि ॥१॥

---

अथ राक्षसेप्सितकौटिल्यमौर्यवैमनस्यमभिवातुं विमर्शसन्धिमारभते । स च तृतीयाङ्करूपश्चतुर्थोऽङ्करूपश्च । विमर्शसन्धेर्लक्षणं यथा—

गर्भसन्धौ प्रसिद्धस्य वीजार्थस्यावमर्शनम् ।
हेतुना येन केनाऽपि विमर्शः सन्धिरुच्यते ॥ इति

गर्भसन्धौ प्रसिद्धस्य मुहुरन्विष्टस्य कौटिल्यनयात्मकबीजस्य कौमुदीमहोत्सव-निवारणादिना प्रकरीनामान्यकथया चावमर्शनात् अनुसन्धानात् नियताप्ति–प्रकर्योः सम्बन्धस्य चाऽत्र सद्भावादेष विमर्शसन्धिः । अस्मिन्नङ्के नियताप्तिः । चतुर्थेऽङ्के राक्षस–चारसम्वादरूपा कथा प्रकरी नाम्नी वर्णनीया । नियताप्ति–प्रकर्योरानुगुण्ये-नास्य विमर्शसन्धेस्त्रयोदशाङ्गानि । एतल्लक्षणं यथा—

तत्रापवादसंफेटौ विद्रवद्रवशक्तयः ।
द्युतिप्रसङ्गश्छलनं व्यवसायो निरोधनम् ॥
प्ररोचना विचलनमादानञ्च त्रयोदश ।

**रूपादीनिति** । हे तृष्णे हे स्पृहे ! त्वया भवत्या यैः करणैरिन्द्रियैश्चक्षुरादि-भिः रूपादीन् रूपप्रभृतीन् रूप-रस-गन्ध-स्पर्श-शब्दान् विषयान् इन्द्रियोपादेयप-दार्थान् निरूप्य अवगत्य आत्मलाभः स्वप्रतिष्ठा लब्धः प्राप्तः, इदानीं जरायामि-त्यर्थः, तेषु आत्मलाभोपायभूतेष्वपि चक्षुरादिषु इन्द्रियेषु स्वार्थावबोधक्रियाः स्व-विषयीभूतरूपादिग्रहणात्मकव्यापारा हता नष्टाः । ते तव आज्ञाविधेयानि नियोग-पालकानि अङ्गानि कर-चरणादीनि ममेत्यादिः प्रसभं हठात् पटुतां ग्रहणासामर्थ्यं

( परिक्रम्याकाशे । ) भो भोः सुगाङ्गप्रासादाधिकृताः पुरुषाः ! सुगृहीतनामा देवश्चन्द्रगुप्तो वः समाज्ञापयति । यथा,-"प्रवृत्तकौमुदीमहोत्सवरमणीयतरं कुसुमपुरमवलोकयितुमिच्छामि, तत् संस्क्रियन्तामस्मद्दर्शनयोग्याः सुगाङ्गप्रासादस्योपरिभूमयः" इति । तत् किं चिरयन्ति भवन्तः ? ( आकाशे आकर्ण्य ) "किं ब्रूथ आर्य्य ! किमविदित एवायं देवस्य चन्द्रगुप्तस्य कौमुदीमहोत्सवप्रतिषेधः" इति ? आः दै-

---

त्यजन्ति जहति, अतस्तवैव भवत एव मूर्ध्नि शिरसि जरया पदं चरणं न्यस्तं स्थापितं तस्मात् साम्प्रतं मुधा व्यर्थं माद्यसि बर्द्धसे । हे तृष्णे ! वार्द्धके रूपादिविषयस्वरूपज्ञापकानां चक्षुरादिज्ञानेन्द्रियाणां त्वदाज्ञावर्त्तिकरचरणादिकर्मेन्द्रियाणाञ्च सामर्थ्यक्षयात् त्वदीया वाञ्छा निष्फलैवेति भावः । नाटके कञ्चुकिनिर्वेदवर्णनं सर्वमतसिद्धम् । पद्यमिदं विभावनानाम्नाऽलङ्कारेण समलंकृतम् । हेत्वसद्भावेऽपि कार्योत्पत्तेरेतदलंकारविषयत्वात्—तदुक्तं दर्पणे—

विभावना विना हेतुं कार्योत्पत्तिर्यदुच्यते ।

इति । प्रकृते तृष्णाया मादनोत्पादकहेतुत्वाभावात्तद्रूपकार्यसमुत्पत्त्योक्तालङ्कारः सिद्धः । जरा-तृष्णयोरभिन्नलिङ्गत्वाज्जराप्रस्तावेऽप्रस्तुतबलवतीनायिकाऽभ्युदयप्रस्तावकरणात् तृष्णाप्रस्तावे चाऽप्रस्तुतव्यर्थमादनव्यवहृतेः प्रस्तावकरणात्-( समारोपात् ) समासोक्तिरलङ्कारः सङ्कीर्यते चायं पूर्वोक्तया विभावनयेति केचित् । श्लोकोऽयं शार्दूलविक्रीडितेन वृत्तेन निबद्धः ॥ १ ॥

परिक्रम्येति । परिक्रम्य सञ्चर्य आकाशे वियति दत्तदृष्टिः ब्रवीतीत्यनयोः शेषः । कञ्चुकिः द्वित्रिपदानि गत्वा आकाशे सन्निधापितचक्षुः सन् वक्ष्यमाणवचनं कथयतीत्यर्थः । भो भोः, अभिप्रेतार्थबोधने त्वरासूचनार्थं भोस्शब्दस्य द्विःप्रयोगः, सुगाङ्गश्चासौ प्रासादः सुगाङ्गप्रासादः सुगाङ्गप्रासादे अधिकृता नियुक्ताः सुगाङ्गप्रासादाधिकृताः पुरुषाः अनुचराः । सुगृहीतं प्रातःस्मरणीयं नाम यस्य स सुगृहीतनामा प्रातःस्मरणीयाऽभिधानो देवो नृपः चन्द्रगुप्तो मौर्यः समाज्ञापयति आदिशति । तदेव दर्शयति यथेति । प्रवृत्तो यः कौमुदीमहोत्सवः प्रवृत्तकौमुदीमहोत्सवस्तेन रमणीयतरं प्रवृत्तकौमुदीमहोत्सवरमणीयतरम् आरब्धशारदपूर्णिमासाध्यव्रतविशेषाधिकमनोज्ञं कुसुमपुरं पुष्पपुरम् अवलोकयितुं द्रष्टुमिच्छामि वाञ्छामि, तत् तस्मा-

वोपहताः ! किमनेन वः प्राणहरेण कथोद्घातेन ? शीघ्रमिदानीम् ,—

आलिङ्गन्तु गृहीतधूपसुरभीन् स्तम्भान् पिनद्धस्रजः
सम्पूर्णेन्दुमयूखसंहतिरुचां सचामराणां श्रियः ।
सिंहाङ्कासनधारणाच्च सुचिरं सञ्जातमूर्च्छामिव
क्षिप्रं चन्दनवारिणा सकुसुमः सेकोऽनुगृह्णातु गाम् ॥ २ ॥

---

त्कारणात् अस्मद्दर्शनयोग्याः मदवलोकनीयाः सुगाङ्गप्रासादस्योपरिभूमयः उपरिष्टात्प्रदेशाः संस्क्रियन्तां कुसुमादिभिरलंक्रियन्ताम् । तत् तस्मात् भवन्तो यूयं किं किमर्थं चिरयन्ति विलम्बन्ते आकाशे वियति आकर्ण्य श्रुत्वा-आकाशोद्भूतशब्दं श्रुत्वेत्यर्थः । आर्य मान्य ! किं ब्रूथ किं कथयथ यूयमिति शेषः । अयं विष्णुगुप्तेन विधीयमान इत्यर्थः । कौमुदीमहोत्सवप्रतिषेधः शारदपूर्णेन्दुपूजनात्मकोत्सवनिषेधः, देवस्य राज्ञश्चन्द्रगुप्तस्य मौर्यस्य किम् अविदित एव अज्ञात एव अस्तीति शेषः । ( इदं विष्णुगुप्तनीत्यात्मकबीजावमर्शनम् ) आः दैवोपहताः दैवेन भाग्येन विनष्टा इत्यर्थः । उत्सवा इति शेषः । अनेन प्राणहरेण जीवविनाशकेन (चन्द्रगुप्तानभिमतत्वात्कथोद्घातस्य प्राणहरत्वं बोध्यम् ) कथोद्घातेन वार्ताप्रसङ्गेन किं न किमपि प्रयोजनमित्यर्थः, कथाप्रसङ्गस्यानवसरान्मदुक्तं शीघ्रं विधेयमिति भावः ।

आलिङ्गन्त्विति । सम्पूर्णश्चासाविन्दुश्चेति सम्पूर्णेन्दुस्तस्य मयूखाः किरणाः सम्पूर्णेन्दुमयूखास्तेषां संहतिः समुदायः तस्या रुगिव रुक् कान्तिर्येषां ते तथोक्तास्तेषां सम्पूर्णेन्दुमयूखसंहतिरुचां समग्रचन्द्रकिरणसमुदायसदृशकान्तीनां सन्तश्च ते चामराश्च सच्चामरास्तेषां सचामराणां प्रशस्तबालव्यजनानां श्रियो द्युतयः गृहीताश्च ते धूपाश्च गृहीतधूपास्तैः सुरभयस्तान् गृहीतधूपसुरभीन् धृतधूपामोदान् ( अथवाऽत्र बहुव्रीहिः ) गृहीतो धूपसुरभिर्यैस्ते गृहीतधूपसुरभयस्तान् गृहीतधूपसुरभीन्, पिनद्धाः संवेष्टिताः स्रजः पुष्पमाल्यानि येषु ते पिनद्धस्रजस्तान् पिनद्धस्रजः सम्वेष्टितपुष्पमाल्यान् स्तम्भान् स्थूणान् आलिङ्गन्तु आश्रयन्तु । सिंहोऽङ्को यस्मिन् तत्सिंहाङ्कं तच्च तदासनं सिंहाङ्कासनं तस्य धारणं तस्मात् सिंहाङ्कासनधारणात् सिंहचिह्नितनृपासनस्थापनात् ( पक्षान्तरे ) सिंहेन मृगेन्द्रेण अङ्कासने निजक्रोडरूपासने धारणात् स्थापनात् सञ्जाता समुत्पन्ना मूर्च्छा वैकल्यं यस्याः सा सञ्जातमूर्च्छा तां सञ्जातमूर्च्छाम् समुत्पन्नवैकल्यामिव गां पृथ्वीं धेनुञ्च कुसुमेन पुष्पेण सहितो युक्तः सकुसुमः पुष्पयुक्तः चन्दनेन संश्लिष्टं वारि चन्दनवारि ( मध्यमपदलोपो

( आकाशे । ) किं कथयन्ति भवन्तः "एते त्वरामह इति ? भद्राः त्वरध्वम्, अयमागत एव देवश्चन्द्रगुप्तः । य एषः,—

सुविश्रब्धैरङ्गैः पथिषु विषमेष्वप्यचलता
चिरं धुर्य्येणोढा गुरुरपि भुवो याऽस्य गुरुणा ।
धुरं तामेवोच्चैर्नववयसि वोढुं व्यवसितो
मनस्वी दम्यत्वान्न स्खलति न च दुःखं वहति च ॥ ३ ॥

समासः ) तेन चन्दनवारिणा श्रीखण्डसंश्लिष्टजलेन सेकः सेचनं क्षिप्रं द्रुतम् अनुगृह्णातु अनुकम्पताम् । यथा सिंहाङ्कपतनान्मूर्च्छिता गौर्जलसेकादिनाऽऽश्वास्यते तथैव गुरुतरनृपासनस्थापनात्परिश्रान्ता भूमिः श्रीखण्डमिश्रितजलसेकादिभिराश्वास्यतामिति भावः । अत्रालङ्कारस्तु—

समासोक्तिः समैर्यत्र कार्यलिङ्गविशेषणैः ।
व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः ॥

इति दर्पणोक्तलक्षणात् पूर्वार्द्धे अप्राकरणिकपूर्णेन्दुगभस्तिसमूहानामुपमागर्भविशेषणसादृश्यात् प्राकरणिकचामरेषु व्यवहृत्यारोपेण समासोक्तिः, उत्तरार्द्धे सञ्जातमूर्च्छामिवेत्यत्रोत्प्रेक्षाबोधकेवशब्दसत्त्वादुत्प्रेक्षा । सा च सिंहाङ्कपदगोपदयोर्द्व्यर्थत्वेन श्लेषविषयत्वाच्छ्लेषेण संसृष्टा । शार्दूलविक्रीडितं वृत्तम् ॥ २ ॥

आकाश इति । आकाशे आकाशस्थपुरुषमुद्दिश्येत्यर्थः । यद्वा आकाशोद्भवशब्दं श्रुत्वेत्यर्थः । भवन्तः किं कथयन्ति यूयं किं ब्रूथ एते वयं त्वरामहे भवदादिष्टकार्यसम्पादनाय शीघ्रतां कुर्मः । भद्राः कल्याणिनः, त्वरध्वम् शीघ्रतां कुरुत अयम् एष राजा चन्द्रगुप्तो मौर्य आगत एव सम्प्राप्त एव ।

सुविश्रब्धैरिति । विषमेषु दुर्गमेषु पथिषु सरणिषु ।

सरणिः पद्धतिः पन्था इत्यमरः ॥

विषमेषु दुरवगमेषु पथिषु राजनीतिप्रभृतिषु च अचलता धैर्यवता धैर्य्येण भारोद्वहनकुशलेन अस्य मौर्यस्य गुरुणा पित्रा नन्देनेत्यर्थः । सुविश्रब्धैः विश्वासपात्रैः सुदृढैश्च अङ्गैः मन्त्रिप्रभृतिभिः स्कन्धाद्यवयवैश्च गुरुरपि महत्यपि या धूः भारश्चिन्ता च चिरं बहुकालपर्यन्तम् ऊढा धृता । तामेव नन्दोढामेव धुरं भारं नववयसि तारुण्यावस्थायां वोढुं धारयितुम् उच्चैरतिशयितं व्यवसितः उद्यतः मनस्वी प्रशस्तमनाः असौ मौर्यो दम्यत्वादसमर्थत्वात् स्खलति खिद्यते दुःखं क्लेशं न च वहति न प्राप्नोति प्रशस्तमनस्त्वादुत्साहशालित्वाच्च न क्लेशभाग्भवतीत्यर्थः । गुरुतर-

( नेपथ्ये ) । इत इतो देवः ।

(ततः प्रविशति राजा प्रतीहारी च ) ।

राजा—( स्वगतम् । ) राज्यं हि नाम राजधर्मानुवृत्तिपरतन्त्रस्य भूपतेर्महदप्रीतिस्थानम् । यतः,—

---

भारोद्वहनोत्साहवानल्पवयस्कवृषभ इव मौर्योऽपि नन्दोढभारं वोढुमुत्सुक्ते न च क्लिश्यतीति भावः । भारोद्वहनात्मकसमानकार्येणाऽप्राकरणिकाल्पवयस्कवृषभस्य प्राकरणिकनवमहीपतौ व्यवहारारोपणात्समासोक्त्यलङ्कारः । स च सुविश्रब्धैः, अङ्गैः, पथिषु, विषमेष्वित्यादिद्व्यर्थकपदन्यासप्रतिभोत्थापितः । उपमानाऽपेक्षयोपमेयगतोत्कर्षं वापकर्षे सत्येव व्यतिरेकालङ्कार इति प्रकाशप्रदीपादिकृन्मये यथा बालवृषभोऽतिगुरुमपि भारं वोढुमुत्सहते न च क्लिश्यति तथाऽयं मौर्योऽप्यतिगुरुं भारं वोढुं व्यवसितो न च क्लिश्यति इत्यर्थे बालवृषभरूपोपमानापेक्षयोपमेयभूतमौर्ये न्यूनत्वाऽधिक्ययोरेकस्याऽप्यभावात्पद्येऽस्मिन् व्यतिरेकालङ्कारकथनं कस्यचिच्च युक्तियुक्तं प्रतिभातीति ब्रूमः वैदर्भी रीतिः । शिखरिणी वृत्तम् ॥ ३ ॥

नेपथ्य इति । नेपथ्ये वेशरचनालये स्थितः कश्चिदनुचरः (कञ्चुकी) राजानं प्रति ब्रवीति । देवो भवान् इत इतः अनेन पथा आगच्छत्वित्यर्थः ।

अन्तर्जवनिकासंस्थैः सूचनार्थस्य चूलिका ।

इति दर्पणोक्तलक्षणात् इत इतो देव इति इयं चूलिका ॥

राज्यमिति । राज्ञो धर्मो राजधर्मस्तस्याऽनुवृत्तिरनुगमनं राजधर्मानुवृत्तिस्तत्र पर आसक्तस्तस्य राजधर्मानुवृत्तिपरस्य प्रजारक्षणात्मकनृपधर्मानुसरणासक्तस्य नृपतेः राज्ञः राज्यम् आधिपत्यं नाम ( सम्भावनार्थकोऽत्र नामशब्दः ) महती चासावप्रीतिर्महदप्रीतिस्तस्याः स्थानं महदप्रीतिस्थानम् अधिकाऽतृप्त्यास्पदम्, यद्वा अप्रीतेः स्थानमप्रीतिस्थानम् महच्च तदप्रीतिस्थानञ्च महदप्रीतिस्थानम् , परमातृप्त्यास्पदम् । अधिकक्लेशजनकं राज्यमिति भावः ।

न्यायेनार्जनमर्थस्य वर्द्धनं पालनं तथा ।
सत्पात्रे प्रतिपत्तिश्च राजवृत्तं चतुर्विधम् ॥

इति कामन्दकीयनीतिसारे राजवृत्तमुक्तम् ॥

परार्थानुष्ठाने जड़यति नृपं स्वार्थपरता
परित्यक्तान्यार्थो नियतमयथार्थः क्षितिपतिः ।
परार्थश्चेत् स्वार्थादभिमततरो, हन्त परवान्
परायत्तः प्रीतेः कथमिव रसं वेत्तु पुरुषः ॥ ४ ॥

अपि च । दुराराध्या हि राजलक्ष्मीरात्मवद्भिरपि राजभिः ।
कुतः ?—

तीक्ष्णादुद्विजते, मृदौ परिभवत्रासान्न सन्तिष्ठते
मूर्खान् द्वेष्टि न गच्छति प्रणयितामत्यन्तविद्वत्स्वपि ।
शूरेभ्योऽप्यधिकं बिभेत्युपहसत्येकान्तभीरूनहो
श्रीर्लब्धप्रसरेव वेशवनिता दुःखोपचर्य्या भृशम् ॥ ५ ॥

---

परार्थेति । परेषामर्थाः परार्थास्तेषामनुष्ठानं परार्थानुष्ठानं तस्मिन् परार्थानुष्ठाने अन्यप्रयोजनसम्पादने आसक्तम् ( इदमाक्षेपलभ्यम् ) नृपं राजानं स्वस्यार्थः स्वार्थस्तत्र परः स्वार्थपरस्तस्य भावः स्वार्थपरता स्वातन्त्र्यं रहयति त्यजति ( त्यागार्थकचौरादिकरहधातोर्लटि रूपम् ) परित्यक्तः परिहृतः स्वार्थः आत्मप्रयोजनं येन स परित्यक्तस्वार्थः परिहृतात्मप्रयोजनः क्षितिपतिः नृपतिः नियतं निश्चितम् अयथार्थः असत्यभूतः अनुगतसंज्ञक इति यावत् । परार्थोऽन्यकार्यं चेद्यदि स्वार्थात् आत्मप्रयोजनात् अभिमततरः ईप्सिततरः स्यात् तदा हन्त खेदे स क्षितिपतिः परवान् पराधीनः, परायत्तः पराधीनः पुरुषः प्रीतेः सन्तोषस्य सुखस्येति यावत् । रसम् आस्वादं कथमिव केनप्रकारेण वेत्तु जानातु अनुभवत्विति यावत् । यथा पराधीनोऽनुचरादिर्न सुखानुभविता तथा प्रजाधीनो नृपोऽपीति भावः । चतुर्थपादे पादत्रयवाक्यानां कारणत्वात्काव्यलिङ्गमलङ्कारः । शिखरिणी छन्दः ॥ ४ ॥

दुराराध्येति । आत्मवद्भिः स्थिरमानसैः वश्येन्द्रियैरपीति यावत् । किम्पुनरवश्येन्द्रियैरित्यर्थः । राजभिर्नृपैः राजलक्ष्मीर्नृपश्रीः दुराराध्या क्लेशेन सेव्येत्यर्थः । तदेव दर्शयति कुतः प्रभृतिना—

तीक्ष्णादिति । अहो आश्चर्यम् श्रीर्लक्ष्मीः तीक्ष्णात् उग्रात् नृपात् ( अपादानपञ्चम्यन्तम् ) उद्विजते पृथग्भवति, परिभवत्रासात् परकृताऽनादरभयात् मृदौ सहनशीले अपराक्रमिणीति यावत् । नृपे न सन्तिष्ठते न स्थितिं लभते ( सम्पूर्वका-

अन्यच्च । कृतककलहं कृत्वा, स्वतन्त्रेण त्वया कञ्चित् कालं व्यवहर्त्तव्यमित्यार्य्योपदेशः, स च कथमपि मया पातकमिवाभ्युपगतः, अथवा शश्वदार्योपदेशसंस्क्रियमाणमतयः सदैवास्वतन्त्रा वयम् । कुतः ?—

त्तिष्ठतेरात्मनेपदविधायकानुशासनन्तु 'समवप्रविभ्यःस्थः' इति ) । मूर्खम् अज्ञम् अविचारशीलमिति यावत् । नृपं द्वेष्टि नावलम्बते, अत्यन्तविद्वत्सु भूरिविद्याशालिष्वपि प्रणयिताम् अनुरक्ततां न गच्छति नाप्नोति । शूरेभ्यः प्रबलेभ्योऽपि अधिकमतिशयं बिभेति त्रस्यति, एकान्तभीरून् अधिकभयशीलान् उपहसति तिरस्करोति। अतः लब्धप्रसरा प्राप्तावसरा वेशवनिता वाराङ्गना इव श्रीः भृशमत्यर्थं दुःखोपचर्याक्लेशेनाऽऽश्रयणीया भवतीति शेषः । श्रियस्तीक्ष्णनृपादुद्वेगे कादाचित्कतत्कर्तृकात्मकर्मविनाशसम्भावना हेतुः, क्षमाशीलनृपाधिकरणकात्मकर्तृकस्थित्यभावे परकृताऽवमानभीतिर्हेतुः, अविचारशीलनृपाश्रयणे अमत्पात्रार्पणशङ्कनं हेतुः विद्यावत्स्वनुरागे अन्यस्मिन् तदनुरागाभावो हेतुः, शूरताभये कादाचित्कारिकरप्रापणसम्भावना हेतुः, अतिभयशीलोपहासे भयहेतुककादाचित्कान्यकरार्पणशङ्कनं च हेतुः । लक्ष्मीस्थैर्यसम्पादनार्थमवश्यमेव राज्ञा यत्नो विधेय इति भावः ।

अप्रस्तुतप्रस्तुतयोर्दीपकं तु निगद्यते ।
अथ कारकमेकं स्यादनेकासु क्रियासु चेत् ॥

इति दर्पणोक्तलक्षणलक्षितद्विविधदीपकमध्ये एकश्रीकर्तृकारकस्यानेकोद्वेजनादिक्रियासम्बन्धाद्द्वितीयदीपकालङ्कारेणालंकृतं चतुर्थचरणे वेशवनितेवेत्यत्रोपमावाचकेवशब्दसद्भावादुपमालङ्कारेण चालङ्कृतं काव्यलिङ्गमित्यवसेयम् । वैदर्भी रीतिः । ओजो गुणः । शार्दूलविक्रीडितं वृत्तम् ॥ ५ ॥

कृतककलहमिति । कृतकः कृत्रिमश्चासौ कलहो विवादः कृतककलहस्तं कृतककलहं कृत्रिमविवादं कृत्वा विधाय स्व आत्मा तन्त्रं प्रधानं यस्य स स्वतन्त्रस्तेन स्वतन्त्रेण अनायत्तेन त्वया भवता किञ्चित्कालं व्यवहर्तव्यं वर्तितव्यम् इत्येषः आर्यादेशः चाणक्यनिदेशः अस्तीति शेषः । स च आर्यादेश इत्यर्थः । मया आत्मना कथमपि केनापि प्रकारेण पातकमिव निन्द्यकर्मेव अभ्युपगतः स्वीकृतः । अथवा किंवा शश्वत् सर्वदा य आर्योपदेशः स शश्वदार्योपदेशस्तेन संस्क्रियमाणा विशोध्यमाना मतिर्बुद्धिर्येषां ते शश्वदार्योपदेशसंस्क्रियमाणमतयः अनवरतचाणक्यनिदेशवि-

इह हि रचयन् साध्वीं शिष्यः क्रियां न निवार्य्यते
त्यजति तु यदा मार्गं मोहात्, तदा गुरुरङ्कुशः।
विनयरुचयस्तस्मात् सन्तः सदैव निरङ्कुशाः
परतरमतः स्वातन्त्र्येभ्यो वयं हि पराङ्मुखाः॥ ६॥

(प्रकाशम्।) आर्य्य वैहीनरे! सुगाङ्गप्रासादमार्गमादेशय।

कञ्चुकी—इत इतो देवः।

राजा—(परिक्रामति।)

कञ्चुकी—(परिक्रम्य।) अयं सुगाङ्गप्रासादः, शनैरारोढुमर्हत्यार्यः।

---

शोध्यमानबुद्धयः वयम् सदैव सर्वस्मिन्नेव काले स्वतन्त्राः स्वाधीनाः स्म इति शेषः।

इहेति। इहास्मिन् संसारे साध्वीं न्याय्याम् अविरुद्धामिति यावत् क्रियां कार्यं रचयन् विदधत् शिष्योऽन्तेवासी न निवार्यते प्रतिषिध्यते गुरुभिरिति शेषः। यदा स शिष्यो मोहादविवेकात् मार्गं सत्पथं त्यजति जहाति तदा गुरुः शिक्षकः अङ्कुशो निवारको भवतीति शेषः। तस्मात् विनये शिक्षकोपदेशे रुचिः प्रीतिर्येषां ते विनयरुचयः शिक्षकोपदेशप्रीतयः विनीता इति यावत्। सन्तः सदैव सर्वस्मिन्नेव निरङ्कुशाः अनिवार्याः स्वतन्त्रा इति यावत्। अतोऽस्माद्धेतोः वयं हि निश्चितं स्वातन्त्र्येभ्यः स्वाधीनताभ्यः (विरामार्थानामिति विहितपञ्चम्यन्तमिदम्) परतरम् अतिशयं पराक् परागतं मुखं येषां ते पराङ्मुखाः पराचीनाः।

पराङ्मुखः पराचीन इत्यमरः।

स्म, अतः परं स्वाच्छन्द्यमभिलषाम इत्यर्थः। आर्यनियोगेन किञ्चित्कार्यवशादेतत्स्वाच्छन्द्यमात्मनि संस्थाप्य स्वच्छन्दवद्व्यवहराम इति भावः। यथोन्मत्तगजनिवारकोऽङ्कुशस्तथा गुरुरप्यसन्मार्गगामिनिवारक इत्यर्थप्रतीत्या निवारणात्मककार्योपयोगीति गुरावङ्कुशत्वेन तदारोपणादत्र परिणामामालङ्कारः। वैदर्भी रीतिः। प्रसादो गुणः। हरिणीवृत्तम्। नसमरसला गः षड्वेदैर्हयैर्हरिणी मता इति तल्लक्षणम्॥ ६॥

प्रकाशमिति। प्रकाशं व्यक्तं यथा स्यात्तथा राजा कथयतीत्यर्थः। आर्य पूज्य वैहीनरे! कञ्चुकिन्! सुगाङ्गप्रसादमार्गं सुगाङ्गसंज्ञकहर्म्यपथम् आदेशय येन पथा तत्र गन्तव्यं तं पन्थानं दर्शयेत्यर्थः।

परिक्रामति—गच्छति।

परिक्रम्य सञ्चर्य अयम् एषः सुगाङ्गप्रासादः तन्नामकसौधः अस्तीति शेषः।

राजा—( नाट्येनारुह्य दिशोऽवलोक्य । ) अहो ! शरत्समयसम्भृतशोभाविभूतीनां दिशामतिरमणीयता !! कुतः ?—

शनैः शान्ता भूताः सितजलधरच्छेदपुलिनाः
समन्तादाकीर्णाःकलविरुतिभिः सारसकुलैः ।
चिताः चित्राकारैर्निशि विकचनक्षत्रकुमुदैः
नभस्तः स्यन्दन्ते सरित इव दीर्घा दश दिशः ॥ ७ ॥

आर्यः पूज्यो भवान् शनैर्मन्दं यथा तथा आरोढुमुपरिष्टाद्गन्तुमर्हति शक्नोति ।

नाट्येति । नाट्येन नटोचितव्यापारविशेषेण आरुह्य सौधोपरिप्रदेशं प्राप्य दिशः ककुभः अवलोक्य दृष्ट्वा । अहो आश्चर्यम् शरदेव समयः कालः शरत्समयस्तेन सम्भृतोपचिता शोभा विभूतयो यासां तास्तथोक्तास्तासां शरत्समयसम्भृतशोभाविभूतीनां दिशामाशानाम् अतिरमणीयता प्रभूतसौन्दर्यम् । तदेव दर्शयति कुत इत्यादिना ।

शनैरिति । सितजलधरच्छेदाः पुलिनानीव यासां ताः सितजलधरच्छेदपुलिनाः धवलजलदखण्डसिकतामयभूमयः शनैः क्रमेण शान्ताः वर्षापगमेन निर्मला भूता जाताः कला मधुरा विरुतिः शब्दो येषां ते तथोक्तास्तैः कलविरुतिभिः अव्यक्तमधुरशब्दैः सारसकुलैः सारसपक्षिसमूहैः समन्तात्सर्वतः आकीर्णा आक्रान्ता व्याप्ता इति यावत् निशि रात्रौ चित्राकारैः अनेकविधैः विकचानि विकसितानि नक्षत्राणि कुमुदानीवेति विकचनक्षत्रकुमुदानि तैर्विकचनक्षत्रकुमुदैः विकसितकुमुदसदृशनक्षत्रैः चिता व्याप्ता दीर्घा अतिविस्तृता दश दिश आशाः सरितो नद्यश्च नभस्तः आकाशात् श्रावणमासाच्च स्यन्दन्ते निस्सरन्ति । सरितामप्युक्तविशेषणानि बोध्यानि, तत्र सरित्पक्षे सितजलधरेति विशेषणस्य सितजलधरच्छेदमिव पुलिनं सैकतं यासामित्यर्थः, इतरविशेषणानान्तूक्त एवार्थः । नभश्शब्दः श्रावणमासाकाशयोर्वाचकः तदुक्तं कोशे—

नभः श्रावणिकश्च सः ।
नभोऽन्तरिक्षं गगनम् ।

वर्षासु मेघव्याप्तत्वात् निरतिशयसलिलाप्लुतत्वाच्च न दिक्सरिताम् स्फुटतया प्रतीतिः शरदि तु तथा प्रतीतिर्भवतीति भावः । एतच्छारदगुणप्रशंसया चन्द्रगुप्तेन

अपि च,—

अपामुद्वृत्तानां निजमुपदिशन्त्या स्थितिपदं
दधत्या शालीनामवनतिमुदारे सति फले।
मयूराणामुग्रं विषमिव हरन्त्या मदमहो!
कृतः कृत्स्नस्यायं विनय इव लोकस्य शरदा ॥ ८ ॥

अपि च,—

भर्त्तुस्तथा कलुषितां बहुवल्लभस्य
मार्गे कथञ्चिदवतार्य्य तनूभवन्तीम्।

---

निजजैत्रयात्रासन्नाहसमयः सूचितः। वक्ष्यति चाग्रे सोऽयं व्यायामकालो नोत्सवकाल इति।

शरदतौ दिक्सरितोभयवर्णनस्य प्रसिद्धत्वादिवशब्दावर्तनेन सरित इव दिशो दिश इव सरित इति परस्परोपमानोपमेयभावप्रतीत्या श्लोकेऽस्मिन् उपमेयोपमानामालङ्कारः। तदुक्तं साहित्यदर्पणे--

पर्यायेण द्वयोरेतदुपमेयोपमा मता।

इति। सा च नभःपदस्य श्लिष्टत्वेन श्लेषानुप्राणिता ॥ पाञ्चाली रीतिः। प्रसादो गुणः। शिखरिणी छन्दः ॥ ७ ॥

अपामिति। उद्वृत्तानामुपचितानाम् (उन्मार्गप्रवृत्तानामिति ध्वनिः) अपां जलानां निजं प्राकृतिकं स्थितिपदं स्थानं ( मर्यादामिति ध्वनिः ) उपदिशन्त्या बोधयन्त्या-शिक्षयन्त्येति यावत्। उदारे प्रभूते फले शस्यात्मके विद्याद्यात्मके च सति शालीनां धान्यानाम् अवनतिं नम्रत्वम् अधोमुखतामिति यावत्। दधत्या कुर्वन्त्या उग्रं तिग्मं विषमिव हालाहलमिव मयूराणां बर्हिणां मदम् अवलेपं हरन्त्या शरदा शरदृतुना कृत्स्नस्य सर्वस्य लोकस्य भुवनस्य अयमेष विनय उपदेशः कृत इव अहो आश्चर्यम्। शरदृतोरागमनात्सर्वेऽभिमानपरित्यागपूर्वकं शान्ता जाता इत्यर्थः। विषमिवेत्यत्र सादृश्यार्थकेवशब्दस्य विषरूपोपमानोपमेयस्य मदस्योग्रत्वरूपसाधारणधर्मस्य चाभिधानात्पूर्णोपमालङ्कारः, विनयः कृत इवेत्यत्राभेदसंसर्गकोपमानप्रकारकोपमेयविशेष्यकोत्कटैककोटिकसंशयवाचकत्वाद्वाच्योत्प्रेक्षालङ्कारः। विनये हेतुभूतस्य पादत्रयस्य वाक्यार्थत्वात्तयोः काव्यलिङ्गालंकारयोगः। वैदर्भी रीतिः। प्रसादगुणः। शिखरिणी छन्दः ॥ ८ ॥

भर्त्तुरिति! शरत् तन्नामा ऋतुः रतिकथायां सरसालापे चतुरा पट्वी रति

सर्वात्मना रतिकथाचतुरेव दूती
गङ्गां शरन्नयति सिन्धुपतिं प्रसन्नाम् ॥ ९ ॥

( समन्तान्नाट्येनावलोक्य । ) अये ! कथमप्रवृत्तकौमुदीमहोत्सवः ?

कञ्चुकी—देव ! अथ किम् । आघोषितो देवस्याज्ञया कुसुमपुरे कौमुदीमहोत्सवः

---

कथाचतुरा सरसालापपटूवी दूती सञ्चारिकेव तथा तादृक् कलुषोऽस्त्यस्या इति कलुषिता तां कलुषितां ( तारकादिभ्य इतीतच् ) वर्षाधिक्येन पङ्काधिक्यादनिर्मलां ( पक्षान्तरे ) भर्त्तुरनेकभार्यत्वेन दोषित्वात्सेर्ष्यामित्यर्थः । अत एव तनूभवन्तीं वर्षापगमेनातिक्षीणां ( पक्षान्तरे ) कान्तवियोगजाधितः कृशशरीरां बह्वयो वल्लभा यस्य स बहुवल्लभस्तस्य बहुवल्लभस्य अनेकभार्यस्य भर्त्तुः स्वामिनः पत्युश्च मार्गे स्वखातप्रदेशे मर्यादायाश्च कथञ्चित्क्लेशतोऽवतार्य संस्थाप्य समुद्रगामिमार्गे प्रवाहयन्तीं ( पक्षान्तरे ) पतावुत्कण्ठितां विधायेत्यर्थः । प्रसन्नां स्वच्छसलिलां ( पक्षान्तरे ) प्रसन्नहृदयां गङ्गां सुरसरितं नारीञ्च सिन्धुः पतिरिव सिन्धुपतिस्तं सिन्धुपतिं समुद्रं (पक्षान्तरे ) सिन्धुरिव पतिः सिन्धुपतिस्तं सिन्धुपतिं सिन्धुसदृशगाम्भीर्यशालिनं पतिं स्वामिनं सर्वात्मना सर्वप्रकारेण नयति प्रापयति । सरसालापपटूवी यथाऽनेकभार्यस्य नायकस्यागसा संक्रुद्धां विरहिणीं नायिकां मधुरकोमलालापैः प्रसन्नां कृत्वा पतिं प्रापयति तथा शरद् गङ्गां सिन्धुं प्रापयतीति भावः ॥

एटुदूतीवोत्कृष्टविष्णुगुप्तनीतिर्नन्दसचिवबुद्धिपरिग्रहणात्सेर्ष्यां संशयापन्नां नन्दश्रियमतिगाम्भीर्यवन्तं मौर्यम्प्रापयतीत्यर्थस्य ध्वननाच्छ्लोकेऽस्मिन्नर्थश्लेषानुप्राणितपूर्णोपमालङ्कारः । ( एषोऽपि बीजावमर्शः ) ॥ ९ ॥

समन्तादिति । समन्तात्सर्वतश्चतुर्दिक्ष्वित्यर्थः नाट्येन नटोचितव्यापारेण भङ्गयात्मकेनेत्यर्थः । अवलोक्य दृष्ट्वा कथं कस्मात्कारणात् अप्रवृत्तोऽनारब्धः कौमुदीमहोत्सवः शारदपूर्णचन्द्रपर्वोत्सवो यस्मिन् सोऽप्रवृत्तकौमुदीमहोत्सवः अनारब्धशारदपूर्णचन्द्रपर्वोद्भवः दिवसो दृश्यत इत्यनयोः शेषः ।

देवेति । देव राजन् अथ किम् एवमित्यर्थः । देवस्य भवतः आज्ञया निदेशेन कुसुमपुरे तदाख्यनगरे कौमुदीमहोत्सवः शारदपूर्णचन्द्रपर्वोद्भवः आघोषितः प्रख्यापितः ।

राजा—आर्य्य ! तदेवं किं न परिगृहीतमस्मद्वचनं पौरजनेन ?

कञ्चुकी—( कर्णौ पिधाय ) देव ! शान्तं पापं, शान्तं पापं, पृथिव्यामस्खलितपूर्वं देवस्य शासनं, कथं पौरेषु स्खलितुमर्हति ?

राजा—आर्य्यवैहीनरे ! तत् कथमप्रवृत्तकौमुदीमहोत्सवमधुनाऽपि कुसुमपुरं पश्यामि ? पश्य,—

धूर्त्तैरन्वीयमानाः स्फुटचतुरकथाकोविदैर्वेशनार्यो
नालङ्कुर्वन्ति रथ्याः पृथुजघनभराक्रान्तिमन्दैः प्रयातैः ।
अन्योन्यं स्पर्द्धमाना न च गृहविभवैःस्वामिनो मुक्तशङ्काः
सार्कं स्त्रीभिर्भजन्ते विधिमभिलषितं पार्वणं पौरमुख्याः ॥ १० ॥

---

कर्णाविति । कर्णौ श्रवणौ पिधाय आवृत्य ब्रवीतीति शेषः । ( शान्तं पापमिति वीप्सायां द्विरुक्तिः ) पौरैर्नास्मद्वचनं गृहीतमिति न वाच्यमित्यर्थः ।

शान्तं पापमनिर्वाच्ये इत्युक्तेः ।

पृथिव्यां भूमौ देवस्य भवतः शासनं निदेशः, अस्खलितपूर्वं पूर्वं न स्खलितं नास्वीकृतं सम्प्रत्यपि न स्खलितमस्तीत्यर्थः । तदा पौरेषु पुरवासिजनेषु कथं केन प्रकारेण स्खलितुं त्यक्तुमर्हति योग्यमिति ।

तदिति । तत्तस्मात् कथं केन हेतुना अधुना साम्प्रतम् अप्रवृत्तकौमुदीमहोत्सवम् अनारब्धशारदपूर्णचन्द्रपर्वोद्धर्षं कुसुमपुरं तदाख्यनगरं पश्यामि प्रेक्षे ।

धूर्तैरिति । वेशनार्यो वारस्त्रियः स्फुटाः सुस्पष्टाश्चतुरा निपुणाश्च ताः कथा आभाषणानि इति स्फुटचतुरकथास्तासु कोविदाः विपश्चित इति स्फुटचतुरकथाकोविदास्तैः स्फुटचतुरकथाकोविदैः सुस्पष्टनिपुणाभाषणविपश्चिद्भिः धूर्तैर्विदग्धैः अन्वीयमानाः अनुयाप्यमानाः सत्यः पृथू विशाले च ते जघने पृथुजघने तयोर्भरो भारस्तस्याक्रमणं तया मन्दैः सालसैः पृथुजघनभराक्रान्तिमन्दैः गुरुकटिपुरोभागभाराक्रमणसालसैः प्रयातैर्गमनैः रथ्याः प्रशस्तराजमार्गान् नालङ्कुर्वन्ति न शोभयन्ति । च शब्दोऽत्र किञ्चेत्यर्थकः, किञ्च पुरे भवाः पौरास्तेषां मुख्याः पौरमुख्याः पुरवासिप्रधानाः स्वामिनः ऐश्वर्यशालिनः गृहस्वामिनो वा गृहविभवैर्गेहसम्पत्तिभिः अन्योऽन्यं परस्परं स्पर्द्धमानाः जेतुकामाः मुक्ता शङ्का यैस्ते मुक्तशङ्काः नृपादेशात्ययकृतभयाः सन्तः स्त्रीभिर्नारीभिः सार्कं सह अभिलषितम् ईप्सितं पार्वणं शारदपूर्णच-

कञ्चुकी--देव ! एवमेतत् ।

राजा—किमेतत् ?

कञ्चुकी--देव ! अत इदम्—" ।

राजा--आर्य्य ! स्फुटमभिधीयताम् ।

कञ्चुकी--"—देव ! प्रतिषिद्धः कौमुदीमहोत्सवः ।

राजा—( सक्रोधम् ) आः केन ?

कञ्चुकी—नातः परमस्माभिर्देवो विज्ञापयितुं शक्यते ।

राजा—न खल्वार्य्येण चाणक्येनापहृतः प्रेक्षकाणामतिशयरमणीयश्चक्षुषो विषयः ?

---

न्द्रनिमित्तकं विधिं महोत्सवं न भजन्ते न श्रयन्ते । उपपतिभिरनुगम्यमाना वारस्त्रियो राजपथान् मन्दगतिभिर्न भूषयन्ति पुरवासिनश्च स्वस्त्रीभिः सह कौमुदीमहोत्सवं नाश्रयन्तीति भावः । कस्मिंश्चित्प्रस्तुते महोत्सवे वारस्त्रीणां राजमार्गे गमनं रवासिनां स्त्रीभिः सह विहरणं च स्वाभाविकमिति स्वभाववर्णनादत्र स्वभावोक्तिनामालंकारः । उक्तञ्च लक्षणं दर्पणे यथा--

स्वभावोक्तिर्दुरूहार्थस्वक्रियारूपवर्णनम् ।

स्रग्धरानाम छन्दः ॥ १० ॥

एवमिति । हे देव महाराज ! एतत् कौमुदीमहोत्सवाविधानम् एवं भवता यथोक्तं तथैवेत्यर्थः ।

अत इति । अतोऽस्मादभिधास्यमानचाणक्यकर्तृकप्रतिषेधात्मकात्कारणात् इदमुक्तोत्सवाविधानमित्यर्थः ।

नातः परमिति । अतोऽस्मात्परं विशेषवचनम् अस्माभिर्देवो भवान् विज्ञापयितुं बोधयितुं न शक्यते न युज्यते । चाणक्यस्यातिक्रोधित्वादस्मदभिधानाकर्णनादनिष्टसम्भावनेति भावः ।

न खल्विति । आर्येण श्रेष्ठेन चाणक्येन कौटिल्येन प्रेक्षकाणां अतिशयेन रमणीयोऽतिशयरमणीयः अति मनोज्ञ इत्यर्थः । चक्षुषो नेत्रस्य विषयः दृश्यपदार्थ इत्यर्थः । न खल्वपहृतो नैव प्रतिषिद्धः । चाणक्यव्यतिरिक्तजनादेशादेवोत्सवप्रतिषेधस्तर्क्यते न त्वार्यचाणक्यनिर्देशादिति भावः ।

कञ्चुकी—देव ! कोऽन्यो जीवितुकामो देवस्य शासनमुल्लङ्घयिष्यति ?

राजा—शोणोत्तरे ? उपवेष्टुमिच्छामि ।

प्रतीहारी—देव ! एदं सिंहासणं, उपविसदु देवो । ( १ )

राजा—( नाट्येनोपविश्य । ) आर्य्य वैहीनरे ! आर्य्यचाणक्यं द्रष्टुमिच्छामि ।

कञ्चुकी—यदाज्ञापयति देवः । ( इति निष्क्रान्तः । )

( ततः प्रविशत्यासनस्थः स्वभवनगतः कोपानुविद्धां चिन्तां नाटयन् चाणक्यः ) ।

चाणक्यः—( आत्मगतम् । ) कथं स्पर्द्धते मया सह दुरात्मा राक्षसहतकः! कुतः ?—

कृतागाः कौटिल्यो भुजग इव निर्य्याय नगरात्,
यथा नन्दं हत्वा नृपतिमकरोन्मौर्य्यवृषलम् ।

---

( १ ) देव ! एतत् सिंहासनम् , उपविशतु देवः ।

---

कोऽन्य इति । देव राजन् ! अन्यश्चाणक्यव्यतिरिक्तो जीवितुकामो जीवनाभिलाषी कः किन्नामधेयः पुरुषः देवस्य भवतः शासनं निदेशम् उल्लंघयिष्यति अतिक्रमिष्यति । जीवितुं काम इच्छा यस्य स जीवितुकामः ।

'लुम्पेदवश्यमः कृत्ये तुंकाममनसोरपि ।' इति तुमुनो मकारलोपः ।

तत इति । ततस्तदनन्तरं कञ्चुकिनिष्क्रमणानन्तरम् आसने आस्तरणे तिष्ठतीत्यासनस्थः आस्तरणारूढः स्वस्य भवनं स्वभवनं तद्गत इति स्वभवनगतो निजगृहप्राप्तश्चाणक्यः कौटिल्यः कोपेन क्रोधेनानुविद्धा तां कोपानुविद्धां क्रोधसहितामित्यर्थः । चिन्तां स्मृतिं नाटयन् अभिनयन् कुर्वन्नित्यर्थः प्रविशति रङ्गस्थानमित्यादिः ।

आत्मगतमिति । आत्मगतं ( क्रियाविशेषणमिदम् ) अस्पष्टं यथा तथा मनस्येव ब्रवीतीत्यर्थः । दुष्ट आत्मा जीवो यस्यासौ दुरात्मा दुष्टजीवो राक्षसहतकः कुत्सितराक्षसः मया आत्मना सह सार्धं कथं कुतः केनप्रकारेण वा स्पर्द्धते मत्प्रयासवैफल्यमिच्छतीत्यर्थः । परोपकारित्वात्प्रशस्तधीशालित्वाच्च मान्योऽपि शत्रुपक्षावलम्बनात्तत्तुल्यत्वाद् दुरात्मेति निष्ठुरोक्तिः ।

कृतागा इति । कृतं विहितामागोऽनिष्टं यस्य स कृतागाः विहितानिष्टो भुज

तथाऽहं मौर्य्येन्दोः श्रियमपहरामीति कृतधीः,
प्रभावं मद्बुद्धेरतिशयितुमेष व्यवसितः ॥ ११ ॥

( प्रत्यक्षवदाकाशे लक्ष्यं बद्ध्वा । ) राक्षस ! राक्षस ! विरम्यतामस्माद्दुर्व्यवसितात् ।

उत्सिक्तः कुसचिवदृष्टराज्यतन्त्रो,
नन्दोऽसौ न भवति चन्द्रगुप्त एषः ।

---

इव सर्प इव कृतं विहितमागोऽग्रयासनानुपवेशनपूर्वकबहिर्निष्कासनात्मकापराधो यस्य स कृतागाः कृतापराध इत्यर्थः । कौटिल्यश्चाणक्यो नगरात्कुसुमपुरात् निर्याय निःसृत्य यथा नन्दं तदाख्यनृपं हत्वा विनाश्य मौर्यवृषलं चन्द्रगुप्तं नृपतिम्भूपतिमकरोत् व्यदधात्, तथा अहं मौर्य इन्दुरिव मौर्येन्दुस्तस्य मौर्येन्दोः चन्द्रगुप्तस्य श्रियं राज्यलक्ष्मीम् अपहरामि आत्मसात्करोमि इतीत्येवं कृता धीर्येन स कृतधीः कृतबुद्धिः एष राक्षसः मद्बुद्धेर्मन्मतेः प्रकर्षं सामर्थ्यम् अतिशयितुमतिवर्तितुं व्यवसितः समुद्यतः अस्तीति क्रियाशेषः । नन्दं विनाश्य चन्द्रगुप्तो यथा चाणक्येन राजासने स्थापितस्तथा मयापि मलयकेतुर्मौर्यं हत्वा राजासने स्थाप्य इति बुद्ध्या कार्येऽस्मिन्प्रवृत्तोऽयमिति भावः । भुजग इवेत्यत्रेवशब्दसत्त्वात् यथादितथान्तस्य नन्दं हत्वा मौर्यं वृषलमित्र मौर्यवृषलं हत्वा मलयकेतुं नृपतिं विधास्यामीत्यर्थस्य स्फुटत्वात् मौर्यवृषलमिव मलयकेतुमित्यत्रेवशब्दस्य प्रतीयमानत्वाच्चोपमालङ्कारः । शिखरिणी छन्दः ॥ ११ ॥

राक्षसेति । वीप्सायां द्विरुक्तिः । भो राक्षस सुबुद्धे ! अस्मात् दुर्दुष्टं व्यवसितं व्यापारस्तस्माद्दुर्व्यवसितात् वृषलराज्यलक्ष्मीहरणात्मककष्टव्यापारादित्यर्थः । विरम्यतां निवृत्यताम् । दुर्व्यवसितादित्यत्र पञ्चमी तु ( विरामार्थानामुपसंख्यानमित्यनेनापादानसंज्ञायाम् अपादाने पञ्चमीत्यनेन बोध्या ) ।

उत्सिक्त इति । असौ एष नन्दस्तदाख्यो नृपः उत्सिक्तः उद्रिक्तो गर्वित इति यावत् कुत्सिताः सचिवाः कुसचिवास्तैः कुसचिवैर्दृष्टं राज्यतन्त्रं यस्य स कुसचिवदृष्टराज्यतन्त्रः भवद्विधकुत्सितामात्यावलोकितराज्यभारः अस्तीति शेषः । एषोऽयं चन्द्रगुप्तो मौर्यो न भवति नन्दसदृशो नास्तीत्यर्थः । त्वमपि भवानपि चाणक्यः कौटिल्यो नैव नास्त्येवेत्यर्थः । केवलं प्रधानवैरं प्रभूतशत्रुभावः परिवृद्धम-

चाणक्यस्त्वमपि च नैव केवलं ते,
साधर्म्यं मदनुकृतेः प्रधानवैरम् ॥ १२ ॥

( विचिन्त्य । ) अथवा, नातिमात्रमस्मिन् वस्तुनि मया मनः खेद-यितव्यम् । कुतः ?—

मद्भृत्यैः किल नाम पर्वतसुतो व्याप्तः प्रतिष्ठान्तरैः,
उद्युक्ताश्च नियोगसाधनविधौ सिद्धार्थकाद्याः स्पशाः ।

---

त्सरः ते तव मदनुकृतेर्मदनुकरणस्य साधर्म्यम् सादृश्यं नास्मत्सादृश्ये तव बुद्धिप्रक-र्षादिरूपस्सदृशधर्मोऽस्तीत्यर्थः । नन्देऽभिमानकुमन्त्र्यपेक्षितराज्यभारत्वसत्त्वाद्राज्यं भ्रष्टं मौर्ये तदभावान्नास्य राज्यभ्रंशो भवितुमर्हति तथा च चाणक्येनोन्मूलितो नन्द इव मयाप्युन्मूलितश्चन्द्रगुप्तः स्यादित्यभिप्रेत्य मया सह ते स्पर्द्धा नतूपशीमाहा-स्स्यादिति भावः । उत्सिक्तकुसचिवेति विशेषणद्वयस्य साभिप्रायत्वेनाभिधानाद-त्रालङ्कारः परिकरो नाम ।

'उक्तिर्विशेषणैः साभिप्रायैः परिकरो मतः ।' इति दर्पणोक्तवचनात् ।

नन्दस्याभिमानकुमन्त्र्यपेक्षितराज्यत्वेन मौर्यस्यातथात्वेन नन्दोन्मूलनसमर्थ-चाणक्यवद्राक्षसस्य मौर्योन्मूलनसामर्थ्याभावेन च न्यूनत्वेन वर्णनादत्र न्यूनत्वा-त्मको व्यतिरेकालङ्कारश्चेत्यलङ्कारद्वयस्य मिथोऽनपेक्षया तिल-तण्डुलवत्संसृष्टिरिति । पद्यमिदं प्रहर्षिणीनामच्छन्दसा निबद्धम् ।

त्र्याशाभिर्मनजरगाः प्रहर्षिणीयमित्युक्तलक्षणात् ॥ १२ ॥

अथवेति । किम्वा अस्मिन्वस्तुनि राक्षसकर्तृकमौर्योन्मूलने मया आत्मना अतिक्रान्तो मात्रा प्रमाणं यस्मिन्कर्मणि तदतिमात्रं ( क्रियाविशेषणमिदम् ) अतिशयं यथा स्यात्तथेत्यर्थः । मनश्च न खेदयितव्यम् न क्षोभास्पदं विधेयमित्यर्थः

मद्भृत्यैरिति । मन्त्रिदेशोऽन्तरेऽभ्यन्तरं येषां ते तथोक्तास्तैः प्रतिष्ठान्तरैः मन्त्रिदेशाभ्यन्तरैः यद्वा प्रतिष्ठा नामख्यापनमन्तराऽन्तर्हिता तिरोहितेति यावत् । येषां ते तथोक्तास्तैः प्रतिष्ठान्तरैः अलक्षिताकारैः ( प्रविष्टान्तरैरिति पाठे ) प्रविष्टमायत्तीकृतमन्तरन्तःकरणं मानसमिति यावत्। यैस्ते तथोक्तास्तैः प्रविष्टान्तरै-रायत्तीकृतारिमानसैरित्यर्थः, मद्भृत्यैरस्मदनुचरैः भागुरायणप्रभृतिभिः पर्वतस्य तन्नाम्नो नृपतेः सुतः पुत्रः मलयकेतुरित्यर्थः। व्याप्तः मन्त्रिदेशानुसारेण परिवृतो वश्य।

कृत्वा सम्प्रति कैतवेन कलहं मौर्येन्दुना, राक्षसं,
भेत्स्यामि स्वमतेन, भेदकुशलो ह्येष प्रतीपं द्विषः ॥ १३ ॥

कञ्चुकी—( प्रविश्य । ) कष्टं खलु सेवा नाम ! कुतः?—

भेतव्यं नृपतेस्ततः सचिवतो राज्ञस्ततो वल्लभा—
दन्येभ्यश्च वसन्ति येऽस्य भवने लब्धप्रसादा विटाः ।

तां प्रापित इत्यर्थः, किल निश्चितं नाम सम्भावनायाम् । सिद्धार्थक आद्यः प्रथमो येषां यस्मिन् वा ते सिद्धार्थकाद्याः सिद्धार्थकप्रमुखा इत्यर्थः । स्पशा दूता नियोगस्य निदेशस्य साधनं सम्पादनं तदेव विधिर्व्यापारस्तस्मिन् नियोगसाधनविधौ मलयकेतुराक्षसोभयभेदनरूपनिदेशसम्पादनात्मकव्यापारे इत्यर्थः। उद्युक्तास्तत्पराः सन्तीति शेषः । सम्प्रति साम्प्रतम् एष भेदे पार्थक्ये कुशलो निपुणो भेदकुशलः पार्थक्यविधानपटुः अहं कैतवेन व्याजेन मौर्य इन्दुरिव मौर्येन्दुः मौर्यश्चासाविन्दुः मौर्येन्दुरिति वा तेन मौर्येन्दुना चन्द्रगुप्तेन सहेत्याक्षिप्तो बोध्यः सहार्थे तृतीयाविधानात्, कलहं विवादं कृत्वा विधाय प्रतीपं प्रतिकूलं राक्षसं नन्दसचिवं स्वमतेन स्वबुद्ध्या द्विषः शत्रोर्मलयकेतोरित्यर्थः। सकाशात् भेत्स्यामि पृथक्करिष्यामि । भागुरायणप्रभृतिद्वारा मलयकेतोर्वशीकृतत्वाद्राक्षसमलयकेतुभेदने सिद्धार्थकादेर्नियोजितत्वाच्च चन्द्रगुप्तेन सह कृतमिथ्याविवादोऽहं प्रयासमन्तरैव राक्षसमलयकेत्वोर्विरोधं सम्पादयिष्यामीत्यर्थः स्वविचारेणैव राक्षसो भेदकुशलो नतवस्य ममेव बुद्धिबलं सामग्रीप्रभूतत्वञ्चेति भावः ।

अपायाभावतः प्राप्तिर्नियताप्तिस्तु निश्चिता ।

इत्युक्तलक्षणादियं नियताप्तिः । अत्र मौर्येन्दुनेत्यत्र कर्मधारयोपमितसमासद्वयसम्भवादुपमाख्यो रूपकाख्यो वाऽलङ्कारो बोध्यः । गौडी रीतिः । ओजो गुणः । शार्दूलविक्रीडितं वृत्तम् ॥ १३ ॥

कष्टमिति । सामान्ये नपुंसकम् । सेवा परकीया परिचर्या कष्टं खलु क्लेशरूपैवेत्यर्थः ।

भेतव्यमिति । प्राक् नृपतेः क्षितिपतेः सकाशात् भेतव्यं शङ्कितव्यं ततस्तदुत्तरं सचिवतः प्रधानामात्यात् भेतव्यं ततस्तदुत्तरं राज्ञो भूपतेर्वल्लभात् प्रियजनात् भेतव्यं ततोऽस्य राज्ञो भवने गृहे ये लब्धः प्राप्तः प्रसादोऽनुग्रहो यैस्ते लब्ध-

दैन्यादुन्मुखदर्शनापलपनैः पिण्डार्थमायास्यतः,
सेवां लाघवकारिणीं कृतधियः स्थाने श्ववृत्तिं विदुः ॥१४॥

( परिक्रम्यावलोक्य च । ) इदमार्य्यचाणक्यस्य गृहं यावत प्रविशामि । ( नाट्येन प्रविश्यावलोक्य च । ) अहो ! राजाधिराजमन्त्रिणो गृहभूतिः !! कुतः ?

उपलशकलमेतद् भेदकं गोमयानां,
वटुभिरुपहृतानां वर्हिषां स्तोम एषः ।

---

प्रसादाः प्राप्तानुग्रहा विटा धूर्ता वसन्ति तिष्ठन्ति तेभ्योऽन्येभ्यश्च जनेभ्यः सकाशात् भेतव्यं शङ्कितव्यम् । कृता शिक्षिता धीर्बुद्धिर्येषां ते कृतधियः शिक्षितबुद्धयो विद्वांस इत्यर्थः । दीनस्य भावो दैन्यं तस्माद्दैन्यात् निर्धनत्वाद्धेतोः उत् ऊर्ध्वं मुखं यस्मिन्कर्मणि तदुन्मुखम् उद्ग्रीवं यथा स्यात्तथा दर्शनानि अपलपनानि च तैः उन्मुखदर्शनापलपनैः उद्ग्रीवप्रेक्षणकाकुभाषणैः पिण्डार्थमुदरसंरक्षणार्थम् आयास्यतः क्लेशं कुर्वतो जनस्य लघोर्भावो लाघवं तत्करोति तच्छीलां लाघवकारिणीं लघुतासम्पादिनीं सेवां शुश्रूषां श्ववृत्तिं कुक्कुरवृत्तिं विदुः ज्ञायन्ते । यथा श्वा स्वोदररक्षणार्थं स्वामिनमवलोक्योन्मुखः सन् पश्यति बुक्कति ताडनभयाद्देहं सङ्कुचति तथा सेवकोऽपि नृपतिप्रकृत्यादिवर्गानुरूपविधया सेवमानः कालं यापयतीति सेवकशुनोस्तुल्या वृत्तिरित्यर्थः । ईप्सितकार्याऽनुरोधाच्चाणक्यचन्द्रगुप्तयोः कपटवैमनस्यं यथार्थत्वेनावगच्छतः कञ्चुकिनोऽयं निर्वेदः । तुरीयपादप्रतिपाद्यार्थे हेतुभूतानां पादत्रयप्रतिपाद्यार्थानां वाक्यार्थत्वेनाभिधानादत्र काव्यलिङ्गमलङ्कारः ।

हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम् ।

इति दर्पणोक्तवचनात् । वैदर्भी रीतिः। प्रसादगुणः। शार्दूलविक्रीडितं वृत्तम्॥१४॥

उपलेति । एतत्पुरोवर्त्ति उपलस्य प्रस्तरस्य शकलं खण्डम् गोमयानां करीषाणां नीरसानामिति शेषः । भेदकं भञ्जनम् दृश्यत इति क्रियाशेषः । एष पुरो दृश्यमानो वटुभिः छात्रभूतैर्ब्राह्मणपुत्रैरित्यर्थः । उपहृतानां समानीतानां बर्हिषां कुशानां स्तोमः समूहो दृश्यते । आभिः साक्षाद्दृश्यमानाभिः शुष्यमाणाभिः समिद्भिः काष्ठैः विनमितो नम्रीभूतः पटलान्तः छदिप्रान्तो यस्मिंस्तत् विनमितपटलान्तं नम्रीभूतछदिप्रान्तं जीर्णोऽतिप्राचीनकालीनत्वाद्विशीर्णः कुड्या भित्तिर्यस्मिन् तत् जीर्णकुड्यम् विशीर्णभित्ति शरणं गृहमपि दृश्यते ।

शरणमपि समिद्भिः शुष्यमाणाभिराभि-
र्विनमितपटलान्तं दृश्यते जीर्णकुडयम् ॥ १५ ॥

ततः स्थाने खल्वस्य वृषलो देवश्चन्द्रगुप्त इति । कुतः ?

स्तुवन्त्यश्रान्तास्याः क्षितिपतिमभूतैरपि गुणैः,
प्रवाचः कार्पण्याद् यदवितथवाचोऽपि कृतिनः ।

---

शरणं गृहरक्षित्रोरित्यमरः ।

उपलोऽपि शकलो न समग्र इति विभूतिनैरपेक्ष्यमस्योपलशकलजीर्णकुड्यादि-भिरभिहितम् । प्राचीनकालीनब्राह्मणगृहस्यैतद्रूपत्वं स्वभावसिद्धमिति स्वभावो-क्तिनामालङ्कारः । वैदर्भी रीतिः । प्रसादगुणः । मालिनी वृत्तम् । उक्तञ्च तल्ल-क्षणं छन्दोमञ्जर्यां यथा--

ननमयययुतेयं मालिनी भोगिलोकैः ॥ १९ ॥

तत इति । ततस्तस्मात् विभूतिनैरपेक्ष्यात् महामहिमशालित्वाद्धेत्यर्थः। हेतोः अस्य प्रधानसचिवस्य चाणक्यस्येत्यर्थः देवो महाराजश्चन्द्रगुप्तो वृषल इत्यभिधानं स्थाने युक्तमित्यर्थः । चन्द्रगुप्तस्य मुरागर्भोद्भवत्वाद्वृषल इत्यामन्त्रणमप्रीतिजनक-मपि जात्यभिप्रायेण निस्पृहत्वाच्चाणक्यस्य युक्तमेवेति भावः ।

स्तुवन्तीति । अवितथा सत्या वाक् येषां तेऽवितथवाचः सत्यगिरोऽपि कृतिनः विद्वांसः सज्जना इत्यर्थः। कृपणस्य दैन्यस्य भावः कार्पण्यं तस्मात्कार्पण्या-द्दैन्यात् हेतोः प्रकृष्टा मधुरा वाक् गिरो येषां ते प्रवाचः मधुरगिरः अश्रान्तं श्रम-रहितमास्यं मुखं येषां तेऽश्रान्तास्याः श्रमरहितमुखाश्च सन्तः अभूतैरविद्यमानैरपि गुणैर्दयादाक्षिण्यप्रभृतिभिः क्षितेः पतिः क्षितिपतिस्तं क्षितिपतिं महीपालं स्तुव-न्ति यत् स खलु ( खलुशब्दोऽत्र वाक्यालङ्कारार्थकः ) तृष्णाया लिप्सायाः सकलः समग्रः प्रभावो माहात्म्यं स्यात्, इतरथाऽन्यथा धनलिप्साऽभावे इत्यर्थः ईहाया निष्क्रान्ता निरीहाः तेषां निरीहाणां धनलिप्सारहितानाम् ईशः प्रभुः धन-वानित्यर्थः। तृणमिव शष्पमिव तिरस्कारविषयः अनादरास्पदो भवतीत्यर्थः। सत्य-वादिनामतथ्यगुणैर्दैन्याद्राजप्रशंसनं तृष्णामाहात्म्यमिति भावः ।

सत्यवादिनामसत्यवचनैः क्षितिपतिस्तुतेर्विरुद्धत्वात्तृष्णामाहात्म्यात्मकत्वेन तत्परिहारादत्र विरोधाभासनामाऽलङ्कारः । स च तृणमिवेत्यत्र सादृश्यार्थकेवश-ब्दसद्भावादुपमालङ्कारसंसृष्टः । उक्तञ्च तल्लक्षणं दर्पणादौ यथा—

प्रभावस्तृष्णायाः स खलु सकलः स्यादितरथा
निरीहाणामीशस्तृणमिव तिरस्कारविषयः ॥ १६ ॥

( अवलोक्य सभयम् । ) तदयमार्य्यचाणक्यस्तिष्ठति ।

यो नन्दमौर्य्यनृपयोः परिभूय लोकम् ,
अस्तोदयौ प्रतिदिशन्नविभिन्नकालम् ।

---

जातिश्चतुर्भिर्जात्याद्यैर्गुणो गुणादिभिस्त्रिभिः ।
क्रिया क्रियाद्रव्याभ्यां यद् द्रव्यं द्रव्येण वा मिथः ।
विरुद्धमिव भासेत विरोधोऽसौ दशाकृतिः ॥

जातिर्गोत्वादिर्जात्याद्यैश्चतुर्भिर्जातिगुणक्रियाद्रव्यैः गुणो नीलत्वादिर्गुणादिभिस्त्रिभिः गुणक्रिया गमनादिः क्रियाद्रव्याभ्यां द्रव्यं द्रव्येण सह मिथो यद्विरुद्धमिव भासेत असौ दशविधो विरोधो विरोधालङ्कार इति कारिकार्थः । प्रकृते सत्यवचनशीलात्मकद्रव्येण सहासत्यगुणकरणकस्तवनक्रियया विरोध इति लक्षणसंघटनमुपपन्नमेवेति । उपमालङ्कारलक्षणमुक्तं दर्पणे यथा—

सा पूर्णा यदि सामान्यधर्म औपम्यवाचि च ।
उपमेयं चोपमानं भवेद्वाच्यमिति ।

उक्तालङ्कारद्वयस्य मिथो नैरपेक्ष्यादत्र समावेशेन संसृष्टिनामालङ्कारस्तदुक्तं दर्पणे—

मिथोऽनपेक्षयैतेषां स्थितिः संसृष्टिरुच्यते ।

एतेषामुक्तानामुपमायमकादीनामलङ्काराणामेकत्र पद्ये वा गद्येऽवस्थितत्वात्संसृष्टरलङ्कार इति तदर्थः । तथा च प्रकृते विरोधाभासोपमयोरलङ्कारयोर्नैरपेक्ष्येण स्थितत्वादुक्तलक्षणं संघटितम् । वैदर्भी रीतिः । प्रसादगुणः । छन्दश्चात्र शिखरिणी नाम ॥ १६ ॥

य इति । यश्चाणक्यो लोकं प्रधानसचिवादिकं सहायतासम्पादकं परिभूय पराजित्य नन्दश्च मौर्यश्च नन्दमौर्यौ तौ च तौ नृपौ नन्दमौर्यनृपौ तयोर्नन्दमौर्यनृपयोः नन्दनृपस्य मौर्यनृपस्य चेत्यर्थः। अस्तश्चोदयश्चास्तोदयौ ह्रासोपचयौ, न विभिन्नः कालो यस्मिन्तदविभिन्नकालं ( क्रियाविशेषणम् ) समकालमित्यर्थः । यथा स्यात्तथा प्रतिदिशन् यच्छन् ददन्निति यावत् । लोकं भुवनं लोकालोकपर्वतं वा प-

पर्य्यायपातितहिमोष्णिमसर्वगामि-
धाम्नाऽतिशाययति धाम सहस्रधाम्नः ॥ १७ ॥

( जानुभ्यां भूमौ निपत्य । ) जयति जयत्यार्य्यः

चाणक्यः—( नाट्येनावलोक्य । ) वैहीनरे ! किमागमनप्रयोजनम् ?

कञ्चुकी–आर्य्य ! प्रणतसम्भ्रमसमुच्चलितभूमिपालमौलिमाणिक्यश-

रिभूय सन्ताप्य अतिक्रम्य वा पर्यायेण क्रमेण न त्वेककालावच्छेदेनेत्यर्थः । पातितं दत्तं हिमम् उष्णिमोष्णत्वञ्च येन तत् पर्यायपातितहिमोष्णिम सर्वस्मिन् गच्छति तच्छीलं सर्वगामि सर्वव्यापीत्यर्थः । सहस्रं धामानि यस्य स सहस्रधामा तस्य सहस्रधाम्नः दश शततेजोविशिष्टस्य भानोरित्यर्थः । धाम तेजः ।

धाम देहे गृहे रश्मौ स्थाने जन्मप्रभावयोः ।

इति मेदिनी । धाम्ना स्वतेजसा प्रतापेनेत्यर्थः । अतिशाययति अतिक्रामतीत्यर्थः ।सोऽयमार्यचाणक्यस्तिष्ठतीति गद्यस्थेन सम्बन्धः । सहस्रधामापि सूर्यः क्रमेण शीतोष्णप्रदोऽयं तु युगपदेव क्षयवृद्धिकर इति ततोऽप्ययमतिशयप्रतापशालीति भावः । विभिन्नकाले सम्भवतोर्द्वयोरविभिन्नकालेऽसम्भवात्कार्यकारणपौर्वापर्यभावस्य च प्रसिद्धत्वात्तस्यागादतिशयोक्तिनामाऽत्रालंकारः । द्व्यर्थप्रतिपादकश्लोकशब्दस्य सत्वाच्छ्लेषानुप्राणितः चाणक्येन स्वतेजसा सूर्यतेजोऽतिक्रमणात्ततोऽपि चाणक्यस्याधिकतेजस्वित्वादुपमेयस्याधिक्यप्रतिपादनाद्व्यतिरेकालंकारसंकीर्णश्च ।

उक्तञ्च तेषां लक्षणं दर्पणे—

सिद्धत्वेऽध्यवसास्यातिशयोक्तिर्निगद्यते ।
भेदेऽप्यभेदः सम्बन्धेऽसम्बन्धस्तद्विपर्ययौ ।
पौर्वापर्यात्ययः कार्यहेत्वोः सा पञ्चधा ततः ॥

अस्तोदययोर्हेतुहेतुमतोः पौर्वापर्यभावत्यागादिह हेतुमत्पौर्वापर्यभावात्ययात्मिकाऽतिशयोक्तिः ।

श्लिष्टैः पदैरनेकार्थाऽभिधाने श्लेष इष्यते ॥
आधिक्यमुपमेयस्योपमानान्न्यूनताऽथवा ।

व्यतिरेक एक इति" ॥

प्राञ्चाली रीतिः । ओजो गुणः । वसन्ततिलकं नाम छन्दः ॥ १७ ॥

प्रणतेति । प्रणता नम्रीभूता अत एव ससम्भ्रमं सत्वरं यथा तथा उच्च-

कलशिखापिशङ्गीकृतपादपद्मयुगलः सुगृहीतनामधेयो देवश्चन्द्रगुप्त आर्यं शिरसा प्रणिपत्य विज्ञापयति, अकृतक्रियान्तरायमार्य्यं द्रष्टुमिच्छामीति।

चाणक्यः—वृषलो मां द्रष्टुमिच्छति ? वैहीनरे ! न खलु वृषलश्रवणपथं गतोऽयं मत्कृतः कौमुदीमहोत्सवप्रतिषेधः ?

कञ्चुकी-आर्य्य ! अथ किम् ?

चाणक्यः—( सक्रोधम् । ) आः ! केन कथितम् ?

कञ्चुकी—( भयं नाटयित्वा । ) प्रसीदत्वार्य्यः स्वयमेव सुगाङ्गप्रासादशिखरगतेन देवेनावलोकितमप्रवृत्तकौमुदीमहोत्सवं कुसुमपुरम्।

---

लिता व्यग्रा इति यावत् इति प्रणतससम्भ्रमोच्चलितास्ते च ते भूपालाः प्रणतससम्भ्रमोच्चलितभूपालमौलयस्तेषां मालाः पङ्क्तयः प्रणतससम्भ्रमोच्चलितभूपालमौलिमालास्तासु यानि माणिक्यशकलानि तदाख्यमणिखण्डानि इति प्रणतससम्भ्रमोच्चलितमालामाणिक्यशकलानि तेषां शिखा ज्वालास्ताभिः पिशङ्गीकृतं पिङ्गलीकृतं पादपद्मयुगलं चरणकमलयुग्मं यस्य स प्रणतससम्भ्रमोच्चलितभूपालमौलिमालामाणिक्यशकलशिखापिशङ्गीकृतपादपद्मयुगलो नम्रीभूतससत्वराकुलनृपतिकेशबन्धराजिमणिखण्डकान्तिपिङ्गलीकृतचरणकमलयुग्मः। सुगृहीतं प्रातःस्मरणीयं नामधेयं नाम यस्य स सुगृहीतनामधेयः देवो महाराजश्चन्द्रगुप्तो मौर्यः आर्यं भवन्तं शिरसा उत्तमाङ्गेन प्रणिपत्य प्रणम्य विज्ञापयति निवेदयति, अकृतः क्रियायाः कर्मणोऽन्तरायः प्रत्यूहो यस्य सोऽकृतक्रियान्तरायस्तमकृतक्रियान्तरायम् अन्तरायशून्यकर्माणम् आर्यं भवन्तं द्रष्टुं प्रेक्षितुमिच्छामि कामये।

प्रसीदत्वार्य इति। आर्यः श्रीमान् प्रसीदतु प्रसन्नो भवतु ममोपरीति शेषः। सुगाङ्गश्चासौ प्रासादः सुगाङ्गप्रासादस्तस्य शिखरः उन्नतप्रदेशः सुगाङ्गप्रासादशिखरस्तं गतः प्राप्तस्तेन सुगाङ्गप्रासादशिखरगतेन सुगाङ्गनामधेयहर्म्योन्नतप्रदेशप्राप्तेन देवेन राज्ञा चन्द्रगुप्तेनेत्यर्थः, अप्रवृत्तोऽनारब्धः कौमुदीमहोत्सवः शरत्पूर्णचन्द्रमहोत्सवो यस्मिन्तत् अप्रवृत्तकौमुदीमहोत्सवम् अनारब्धशरत्पूर्णचन्द्रमहः कुसुमपुरनामनगरं स्वयं साक्षादेव अवलोकितं दृष्टमित्यर्थः।

चाणक्यः—आः ज्ञातं, भवद्भिरेव मदन्तरा प्रोत्साह्य रोषितो वृषलः, किमन्यत् ?

कञ्चुकी—( सभयं तूष्णीमधोमुखस्तिष्ठति । )

चाणक्यः—अहो ! राजपरिजनस्य चाणक्योपरि विद्वेषपक्षपातः । अथ क्व वृषलस्तिष्ठति ?

कञ्चुकी—( भयं नाटयन् । ) आर्य्य ! सुगाङ्गप्रासादगतेन देवेनाहमार्य्यपादमूलं प्रेषितः ।

चाणक्यः—( उत्थाय । ) कञ्चुकिन् ! सुगाङ्गप्रासादमार्गमादेशय !

कञ्चुकी—इत इत आर्य्यः । ( इत्युभौ परिक्रामतः । )

कञ्चुकी—अयं सुगाङ्गप्रासादः, शनैरारोढुमर्हत्यार्य्यः ।

---

आः ज्ञातमिति । आ इतीर्ष्यासूचकमव्ययम् ज्ञातम् अवगतम् भवद्भिरेव युष्माभिरेव अन्तरा मध्ये मदनुपस्थितिकाले इत्यर्थः, प्रोत्साह्य उत्तेजकवचनैरुद्दीप्येत्यर्थः, वृषलो मौर्यो रोषितः क्रोधितः । अन्यदपरं किं न किमपीत्यर्थः ।

राजपरिजनस्येति । राज्ञः परिजनो राजपरिजनस्तस्य राजपरिजनस्य नृपानुचरस्य चाणक्योपरि विष्णुगुप्तोपरि विष्णुगुप्ते इत्यर्थः, विशिष्टो द्वेषो विद्वेषः पक्षे पातः पक्षपातः विद्वेषे पक्षपातो विद्वेषपक्षपातः विद्वेषे आसक्तिविशेष इत्यर्थः। अहो आश्चर्यम् । अथशब्दोऽत्र वाक्यालङ्कारार्थकः आश्चर्यजनकोऽयमासक्तिविशेषः । वृषलो मौर्यः क्व तिष्ठति कुत्रास्ते । चाणक्यविद्वेषे नृपानुयायिनामाश्चर्यजनकोऽयमासक्तिविशेषः ( तत्परतेति ) भावः ।

भयं नाटयन्निति । भयं साध्वसम् ।

भीतिर्भीः साध्वसं भयमित्यमरः ।

नाटयन् अभिनयन् कुर्वन्निति यावत् । आर्य श्रीमन् , सुगाङ्गप्रासादगतेन हर्म्यस्थितेन देवेन राज्ञा चन्द्रगुप्तेन अहम् आर्यस्य भवतः पादौ चरणावार्यपादौ तयोर्मूलं समीपम् आर्यपादमूलं भवच्चरणसमीपं प्रेषितः प्रापितोऽस्मीति शेषः ।

कञ्चुकिन्निति । कञ्चुकिन् वैहीनरे ! सुगाङ्गश्चासौ प्रासादः सुगाङ्गप्रासादः तस्य मार्गस्तं सुगाङ्गप्रासादमार्गं तदाख्यहर्म्यपथम् आदेशय दर्शयेत्यर्थः ।

चाणक्यः—( नाट्येनारुह्यावलोक्य च सहर्षमात्मगतम् । ) अये ! सिंहासनमध्यास्ते वृषलः । साधु साधु ।—

नन्दैर्वियुक्तमनपेक्षितराजराजैरध्यासितञ्च वृषलेन वृषेण राज्ञाम् ।
सिंहासनं सदृशपार्थिवसङ्गतञ्च प्रीतिं परां प्रगुणयन्ति गुणा ममैते॥१८॥

( उपसृत्य । ) विजयतां वृषलः ।

राजा—( सिंहासनादुत्थाय चाणक्यस्य पादौ गृहीत्वा । ) आर्य्य ! चन्द्रगुप्तः प्रणमति ।

---

**नाट्येनेति ।** नाट्येन नटोचितव्यापारेण शरीरभङ्ग्यात्मकेनेत्यर्थः । आरुह्य प्राप्य प्रासादमित्यादिः अवलोक्य संप्रेक्ष्य राजानमिति शेषः । सहर्षं सानन्दम् आत्मगतम् मनोगतं वचो मनस्येव ब्रवीतीत्यर्थः । अये इदं कोमलालापे सम्बोधनम्, वृषलश्चन्द्रगुप्तः सिंहाङ्कितमासनं सिंहासनम् ( मध्यमपदलोपी समासः ) नृपासनमित्यर्थः। अध्यास्ते अधितिष्ठति । ('अधि शीङ्स्थासां कर्म' इत्याधारस्य कर्मत्वे सिंहासनमिति) ।

**नन्दैरिति ।** अनपेक्षितोऽनादृतो राजराजो धनाधिपो यैस्तेऽनपेक्षितराजराजास्तैरनपेक्षितराजराजैः अनादृतधनाधिपैः, ( अनपेक्षितराजवृत्तैरिति पाठे ) तिरस्कृतनृपव्यवहारैरित्यर्थः । नन्दैः वियुक्तं विरहितं सिंहासनं नृपासनम् राज्ञां नृपाणां वृषेण श्रेष्ठेन वृषलेन मौर्येण अध्यासितम् अधिष्ठितम्, तच्च सिंहासनं नृपासनं सदृशाश्च ते पार्थिवाः सदृशपार्थिवास्तैः सङ्गतं सदृशपार्थिवसङ्गतं सिंहासनाध्यासोचितनृपाक्रान्तञ्च जातमिति शेषः । एते मम गुणाः नन्दोद्धरणचन्द्रगुप्ताभिषेचननृपासनोचितपार्थिवसङ्गतिकरणात्मकव्यापारा मम परामुत्कृष्टामतिशयितामिति यावत् प्रीतिं हर्षं प्रगुणयन्ति जनयन्तीत्यर्थः । नन्दा विनाशिताः चन्द्रगुप्तोऽभिषिक्तः सिंहासनं योग्यनृपाक्रान्तमतः सकलकृत्यसम्पादनादतिशयानन्दयुक्तोऽस्मीति भावः । सिंहासनस्योचितनृपयोगस्योक्त्या मौर्यप्रशंसनस्य फलितत्वादत्र समनामालङ्कारस्तदुक्तं प्रकाशदर्पणयोर्यथा—

समं योग्यतया योगो यदि सम्भावितः क्वचित् । का० प्र०

---

( १८ ) एतेनात्मनःकार्यसूचिता कौटिल्येनेत्यवधेयम् ।

चाणक्यः—( पाणौ गृहीत्वा ) उत्तिष्ठोत्तिष्ठ वत्स !—
आ शैलेन्द्राच्छिलान्तस्खलितसुरधुनीशीकरासारशीतात् ,
आ तीरान्नैकरागस्फुरितमणिरुचो दक्षिणस्यार्णवस्य ।
आगत्यागत्य भीतिप्रणतनृपशतैः शश्वदेव क्रियन्तां,
चूडारत्नांशुगर्भास्तव चरणयुगस्याङ्गुलीरन्ध्रभागाः ॥ १९ ॥

राजा—आर्य्यप्रसादादनुभूयत एवैतत् , नाऽऽशास्यते । उपविश·

---

यदि क्वचिद्योग्यतयाऽऽनुरूप्येण योगः सम्भावितस्सर्वसम्मतस्तदा समभल· ङ्कार इत्यर्थः ।

समं स्याद्वानुरूप्येण श्लाघा योग्यस्य वस्तुनः । सा० द० ।

रीतिरत्र वैदर्भी नाम । प्रसादश्च गुणः । वसन्ततिलकं वृत्तम् ॥ १८ ॥

आशैलेन्द्रादिति । शिलानामन्ता अन्तिमभागाः शिलान्तास्तेषु स्खलिताः शिलान्तस्खलिताः प्रस्तरप्रान्तभागपतिता इत्यर्थः, यद्वा शिलान्तात्प्रस्तरोन्नतप्रदेशात् स्खलिताः शिलान्तस्खलिताः प्रस्तरोन्नतप्रदेशपतिता इत्यर्थः । सुराणां देवानां नदी सरित् सुरनदी तस्याः शीकराः शिलान्तस्खलिताश्च ते सुरनदीशीकरा इति शिलान्तस्खलितसुरनदीशीकरास्ते एवासारा अतिवर्षणानि, तैः शीतस्तस्मात् शिलान्तस्खलितसुरनदीशीकरासारशीतात् प्रस्तरोन्नतप्रदेशपतितामरसरित्कणातिवर्षणशीतलात् आशैलेन्द्रात् आहिमालयात्, न एका नकास्ते च ते रागा नैकरागा अनेकविधवर्णा इत्यर्थः, तादृशाः स्फुरितमणिरुचो यस्मिन् स तथोक्तस्तस्य नैकरागस्फुरितमणिरुचः अनेकविधवर्णभासमानमणिकान्तेः, दक्षिणस्य याम्यदिग्वर्त्तिनोऽर्णवस्य समुद्रस्य आतीरात् आतटात् आगत्य आगत्य पुनः पुनः समेत्य भीत्या प्रणता भीतिप्रणताः नृपाणां शतानि नृपशतानि भीतिप्रणताश्च तानि नृपशतानि भीतिप्रणतनृपशतानि तैर्भीतिप्रणतनृपशतैः साध्वसायत्तीभूतभूपसमूहैः शश्वदेव सर्वदैव तव चरणयुगस्य पद्युगलस्य अङ्गुलीरन्ध्रभागा अङ्गुलीछिद्रप्रदेशाः चूडारत्नानामंशवश्चूडारत्नांशवस्ते गर्भेऽभ्यन्तरे येषां ते चूडारत्नांशुगर्भा मुकुटमणिकिरणाभ्यन्तराः क्रियन्तां विधीयन्ताम् । दक्षिणोत्तरार्णवसीमान्तरालवर्त्तिनो नृपतयो वशीभूतास्त्वां सदैव प्रणमन्त्विति भावः ॥ १९ ॥

आर्यप्रसादादिति । आर्यस्य प्रसाद आर्यप्रसादस्तस्मादार्यप्रसादात् पू·

त्वार्य्यः। ( इत्युभौ यथासनमुपविष्टौ )।

चाणक्य—वृषल ! किमर्थं वयमाहूताः ?

राजा—आर्यस्य दर्शनेनात्मानमनुग्राहयितुम्।

चाणक्यः—( स्मितं कृत्वा ) वृषल ! मलमनेन प्रश्रयेण, न निष्प्रयोजनमधिकारवन्तः प्रभुभिराहूयन्ते; तत् प्रयोजनमभिधीयताम्।

राजा—आर्य ! कौमुदीमहोत्सवप्रतिषेधस्य किं फलमार्य्यः पश्यति ?

चाणक्यः—( स्मितं कृत्वा। ) वृषल ! उपालब्धुं तर्हि वयमाहूताः !

राजा—आर्य ! नोपालब्धुम्।

चाणक्यः—किं तर्हि ?

राजा—विज्ञापयितुम्।

चाणक्यः—वृषल ! यद्येवं तर्हि विज्ञापनीयानामवश्यं शिष्येण रुचयोऽनुरोद्धव्याः।

राजा—आर्य्य ! कः सन्देहः ? किन्तु न कदाचिच्चार्य्यस्य निष्प्रयोजना प्रवृत्तिरित्यस्ति नः प्रश्नावकाशः।

---

यस्य भवतोऽनुग्रहादित्यर्थः। एतत् सकलनृपमण्डलशासमकर्तृत्वम् अनुभूयत एव प्राप्यत एव, नाशास्यते नेष्यते तदिति शेषः, आर्यः पूज्यो भवान् उपविशतु आस्ताम्।

आर्यस्येति। आर्यस्य पूज्यस्य भवतो दर्शनेन निरीक्षणेन आत्मानं जीवम् अनुग्राहयितुं प्रसन्नतास्पदं कर्तुम् भवन्त आहूता इति शेषः।

अलमिति। अनेन एतेन त्वत्कृतेनेत्यर्थः। प्रश्रयेण विनयेन अलं व्यर्थम् प्रभुभिः राजभिः अधिकारवन्तः कार्यकारिणः सचिवप्रभृतयो निष्प्रयोजनं निर्हेतुकं नाहूयन्ते तत्तस्मात्प्रयोजनं कार्यमभिधीयतामुच्यताम्।

वृषलेति। वृषल मौर्य तर्हि तदा उपालब्धुं तिरस्कर्तुं वयमाहूता आकारिताः।

यदीति। यदि यदा एवं विज्ञापनार्थमस्मदाह्वानं तदा शिष्येणान्तेवासिना विज्ञापनीयानां गुरूणां रुचयः इच्छा अनुरोद्धव्या अनुवर्तितव्याः।

किन्त्विति। भवतो निर्हेतुका प्रवृत्तिर्न कदाचिदपि भवतीति मे पृच्छाऽवसरोऽस्तीत्यर्थः।

चाणक्यः--वृषल ! सम्यग्गृहीतवानसि मदाशयम् । न हि प्रयोजनमनपेक्षमाणः स्वप्नेऽपि चाणक्यश्चेष्टते ।

राजा--आर्य्य ! अत एव मां प्रयोजनशुश्रूषा मुखरयति ।

चाणक्यः--वृषल ! श्रूयताम् , इह खलु अर्थशास्त्रकाराः त्रिविधां सिद्धिमुपवर्णयन्ति । तद्यथा—राजायत्तां, सचिवायत्ताम् , उभयायत्ताञ्चेति । तत् सचिवायत्तसिद्धेर्भवतः किं फलान्वेषणेन यतो वयमेवात्र नियुक्ता वेत्स्यामः ।

राजा--( सकोप इव मुखं परिवर्त्तयति ) ।

( ततो नेपथ्ये वैतालिकौ पठतः ) ।

---

सम्यगिति । सम्यक् साधु मदाशयं मदीयाभिप्रायम् गृहीतवान् अवगतवान् । प्रयोजनं कार्यम् अनपेक्षमाणोऽनवलोकमानश्चाणक्यः कौटिल्यः स्वप्नेऽपि निद्रायामपि नहि चेष्टते नोद्युङ्क्ते ।

अत एवेति । अत एव प्रयोजनमनुद्दिश्याऽप्रवृत्तेरेवेत्यर्थः। प्रयोजनशुश्रूषा हेतुश्रवणेच्छा मुखरयति वक्तुं प्रवर्त्तयति ।

श्रूयतामिति । वृषल मौर्य ! श्रूयताम् सावधानेन त्वयाऽऽकर्ण्यताम् मदुक्तमित्यादिः, इहाऽस्मिन् लोके अर्थशास्त्रकारा नीतितन्त्रप्रणेतारः तिस्रो विधाः प्रकारा यस्याः सा त्रिविधा तां त्रिविधां त्रिप्रकारां सिद्धिमुपपत्तिमुपवर्णयन्ति ब्रुवन्ति । राजायत्तां नृपाधीनां सचिवायत्ताम् अमात्याधीनाम् , उभयस्य राज्ञ मन्त्रिणश्चायत्ता उभयायत्ता तामुभयायत्तां नृपामात्यद्वयाधीनाञ्चेत्येवं त्रिप्रकारां सिद्धिं कथयन्तीत्यर्थः, तत्तस्मात् सचिवायत्तसिद्धेः अमात्याधीनोपपत्तेः फलान्वेषणेन प्रयोजनजिज्ञासया तव किं न किमपीत्यर्थः । यतो यस्मादत्र सचिवायत्तसिद्धौ वयमेव नियुक्ताः सन्तः वेत्स्यामः तत्तत्कार्यानुगुण्येन वर्त्तिष्यामहे ।

सकोप इति । कोपेन क्रोधेन सहितः सकोपः कृत्रिमक्रोधयुक्तः, मुखमाननं परावर्त्तयति अन्यतो नयति । कौटिल्यादेशेनैव कृत्रिमक्रोधस्यावश्यकर्त्तव्यत्वात्कृत्रिमकोपो जातो राज्ञो नतु वास्तविक इति भावः ।

तत इति । ततस्तदनन्तरं राज्ञो मुखपरावर्त्तनानन्तरमित्यर्थः । वैतालिकौ स्तुतिपाठकौ पठतः वक्ष्यमाणश्लोकद्वयमिति शेषः । विशिष्टो विविधः तालो मङ्गलगा-

एकः,—

आकाशं काशपुष्पच्छविमभिभवता भस्मना शुक्लयन्ती,
शीतांशोरंशुजालैर्जलधरमलिनां क्लिन्दती कृत्तिमैभीम् ।
कापालीमुद्वहन्ती स्रजमिव धवलां कौमुदीमित्यपूर्वा,
हासश्रीराजहंसा हरतु तनुरिव क्लेशमैशी शरद्वः ॥ २० ॥

---

तवाद्यादिकृतः शब्दः प्रयोजनमस्येत्यर्थं वितालशब्दाट्ठक्प्रत्यये वैतालिकशब्दसिद्धिः—

वैतालिका बोधकराश्चाक्रिका घण्टिकार्थजाः ।
स्युर्मागधास्तु मगधा वन्दिनः स्तुतिपाठकाः । इत्यमरः ।

आकाशमिति । काशपुष्पस्य च्छविरिव च्छविर्यस्य स काशपुष्पच्छविस्तं काशपुष्पच्छविं काशकुसुमकान्तिम् आकाशमन्तरिक्षम् अभिभवता तिरस्कुर्वता भस्मना भूत्या शुक्लयन्ती श्वेतयन्ती, शीता अंशवो यस्य स शीतांशुस्तस्य शीतांशोः शिशिरकिरणस्य शिरोऽलङ्करणभूतस्य चन्द्रस्येत्यर्थः । अंशुजालैः किरणसमूहैः जलधर इव मलिना जलधरमलिना तां जलधरमलिनां पयोदकृष्णाम् इभस्येयमैभी ता मैभीं गजासुरसम्बन्धिनीं कृत्तिं चर्म शिवपरिधानभूतचर्मेत्यर्थः। क्लिन्दती सिञ्चन्ती ( क्लिश्नातीति पाठे तद्गतनैर्मल्यं तिरस्कुर्वन्तीत्यर्थः ) कौमुदीं चन्द्रिकामिव धवलां स्वच्छां कपालानामियं कापाली तां कापालीं नरकपालरचितां स्रजं मालामुद्वहन्ती धारयन्ती हासस्य श्रीरिव श्रीर्येषां ते । तथाविधा राजहंसा यस्यां सा हासश्रीराजहंसा प्रशस्ताट्टहाससम्पत् इतीत्यतो हेतोरपूर्वाऽतिरमणीया ईशस्येयमैशी ईशसम्बन्धिनी शैवीत्यर्थः । तनुर्मूर्तिरिव ( पक्षे शरदो विशेषणं सर्वं तत्र क्वचिद्विभक्तिविपरिणामेन क्वचिच्च यथोक्तरूपेणेति बोध्यम् , काशपुष्पच्छविं भस्मनेत्युभयत्र तृतीयाप्रथमाविभक्तिभ्यां विपरिणामः अभिभवतेत्यत्र च लिङ्गविपरिणामो बोध्यः) भस्मना भस्म अभिभवताऽभिभवन्त्या तिरस्कुर्वन्त्या काशपुष्पच्छव्या काशकुसुमशोभया आकाशं गगनं शुक्लयन्ती भासयन्ती शीतांशोरिन्दोः अंशुजालैः किरणसमूहैः ऐभीं गजसंबन्धिनीं कृत्तिमिव जलधरमलिनां मेघमालिन्यं क्लिन्दती अपसारयन्ती (धातूनामनेकार्थत्वात्क्लिन्देरपसारणमर्थः ) कापालीं कपालनिर्मितां स्रजमालामिव धवलां निर्मलां कौमुदीं ज्योत्स्नामुद्वहन्ती हासश्रीरिव राजहंसो यस्यां सा हासश्रीराजहंसा ( शरदि मानससरोवरतो राजहंसानां परावर्तनादिति भावः )

अपि च—

प्रत्यग्रोन्मेषजिह्मा क्षणमनभिमुखी रत्नदीपप्रभाणाम्,
आत्मव्यापारगुर्वी जनितजललवा, जृम्भितैः साङ्गभङ्गैः ।
नागाङ्कं मोक्तुमिच्छोः शयनमुरुफणाचक्रवालोपधानं,
निद्राच्छेदाभिताम्रा चिरमवतु हरेर्दृष्टिराकेकरा वः ॥ २१ ॥

अपूर्वाऽतिरमणीया शरत् घो युष्माकं क्लेशं कष्टं (राक्षसमलयकेतुभयकृतं दुःखमिति ध्वनिः) हरतु नाशयतु । तवाध्यात्मिकक्लेशहारिणीशतनुरिव शरत्फलसंपद्वा तत्र लोकानां च दुःखं नाशयत्विति भावः । जलधरमलिनां हासश्रीराजहंसेत्युभयत्रौपम्यवाचकेवशब्दस्य लुप्तत्वाल्लुप्तोपमा, स्रजमिव तनुरिवेत्यत्र चौपम्यप्रतिपादकेवशब्दसत्त्वादुपमालङ्कारः । स्रग्धरावृत्तम् ॥ २० ॥

प्रत्यग्रेति । फणानां चक्रवालं फणाचक्रवालं उपधीयते स्थाप्यते शिरोऽस्मिन् तदुपधानं फणाचक्रवालमेवोपधानं यस्य यस्मिन्वा तत्फणाचक्रवालोपधानं स्फटामण्डलोपबर्हं ।

स्फटायां तु फणा द्वयोरित्यमरः ।
चक्रवालं तु मण्डलमित्यमरः ।
उपधानं तूपबर्हम् इत्यमरः ॥

नागस्याङ्कं नागाङ्कं भुजगक्रोडरूपमित्यर्थः । उरु महत् शयनं शय्यां मोक्तुं त्यक्तुम् इच्छोः कामयमानस्य हरेर्विष्णोः प्रत्यग्रश्चासावुन्मेषः प्रत्यग्रोन्मेषस्तेन जिह्मा प्रत्यग्रोन्मेषजिह्मा नवोन्मीलनालसा क्षणं किञ्चित्कालमभिव्याप्येत्यर्थः रत्नान्येव दीपा रत्नदीपास्तेषां प्रभा रत्नदीपप्रभास्तासां रत्नदीपप्रभाणां भुजगशिरःस्थमणिप्रदीपकान्तीनाम् अनभिमुखी असम्मुखी अङ्गानां भङ्गानि अङ्गभङ्गानि अङ्गभङ्गैः सहितानि साङ्गभङ्गानि तैः साङ्गभङ्गैः जृंभितैः गात्रविनामैः निद्रालस्यापहारकमुखव्यादानात्मकव्यापारैरित्यर्थः, जनिता उत्पन्ना जललवा यस्याः सा जनितजललवा उत्पन्नसलिलबिन्दवः, अत एव आत्मनो व्यापार आत्मव्यापारस्तस्मिन् गुर्वी आत्मव्यापारगुर्वी दर्शनात्मकस्वक्रियाऽसमर्था निद्रायाश्छेदा निद्राच्छेदस्तेनाऽभिताम्रा निद्राच्छेदाभिताम्रा निद्राभङ्गातिरक्ता आकेकरा ईषत्संकुचिता दृष्टिश्चक्षुः वो युष्मान् चिरं बहुकालम् अवतु रक्षतु । शरदि विष्णुजागर-

द्वितीयः—

सत्त्वोत्कर्षस्य धात्रा निधय इव कृताः केऽपि कस्यापि हेतोः,
जेतारः स्वेन धाम्ना मदसलिलमुचां नागयूथेश्वराणाम् ।
दंष्ट्राभङ्गं मृगाणामधिपतय इव व्यक्तमानावलेपा,
नाऽऽज्ञाभङ्गं सहन्ते नृवर ! नृपतयस्त्वादृशाः सार्वभौमाः ॥ २२ ॥

---

णस्य शास्त्रसम्मतत्वात्तद्वर्णनं जातमेवेत्यवधेयम् । रत्न-नागाङ्क-फणाचक्रवालेषु दीपत्व-शयनत्वोपधानत्वसमारोपणात् स्वभाववर्णनाच्च रूपक–स्वभावोक्त्योरलंकारयोः संसृष्टिः । प्रसादगुणः । लाटी रीतिः । स्रग्धरावृत्तम् ॥ २१ ॥

सत्त्वोत्कर्षस्येति । नृणां वरो नृवरस्तत्सम्बुद्धौ हे नृवर नरश्रेष्ठ ! धात्रा ब्रह्मणा कस्यापि हेतोः कस्मैचिदपि प्रयोजनायेत्यर्थः ( षष्ठी हेतुप्रयोगे इत्यनेन षष्ठी ) सत्त्वस्योत्कर्षः सत्त्वोत्कर्षस्तस्य सत्त्वोत्कर्षस्य वीर्यातिशयितस्य –

सत्त्वं गुणे पिशाचादौ बले द्रव्य–स्वभावयोः,
आत्मनि व्यवसाये च चित्ते प्राणिषु जन्तुषु । इति विश्वः ।

निधीयन्ते एष्विति निधय आधारा इव कृता उत्पादिताः, स्वेन स्वकीयेन धाम्ना तेजसा मद एव सलिलं मदः सलिलमिवेति वा, मदसलिलं तन्मुञ्चन्तीति मदसलिलमुचस्तेषां मदसलिलमुचां प्रकटदानराजीनां मदस्राविणामित्यर्थः, नागानां यूथा नागयूथास्तेषामीश्वरा नागयूथेश्वरास्तेषां नागयूथेश्वराणां करिसमूहाधिपतीनां, मदसलिलमुचाम् अभिमानशालिनां नागयूथेश्वरसदृशानां नृपाणाञ्चेति ध्वनिः । जेतारः अभिभावयितारः, मानश्चावलेपश्च मानावलेपौ व्यक्तौ मानावलेपौ येषां ते व्यक्तमानावलेपाः प्रकटाभिमानगर्वाः केऽपि उत्कृष्टसामर्थ्यवन्तः त्वादृशा भवद्विधाः सार्वभौमाः सर्वभूमिपतयः नृपतयो राजानो मृगाणामधिपतयः केसरिणः दंष्ट्राभङ्गमिव दन्तोत्पाटनमिव आज्ञाभङ्गम् आदेशव्याघातं न सहन्ते न मृष्यन्ति ।

उत्कृष्टसामर्थ्यशालिकेसरिदन्तोत्पाटयितुर्यथा प्राणदण्डस्तथा तदाज्ञाव्याहन्तुरपि प्राणदण्डेन भाव्यमिति भावः । निधय इवेत्यत्रोत्प्रेक्षाबोधकेवशब्दसत्त्वात् अधिपतय इवेत्यत्रौपम्यवाचकेवशब्दसत्त्वादुत्प्रेक्षोपमयोः संसृष्टिः । ओजो गुणः । वैदर्भी रीतिः । स्रग्धरा वृत्तम् । एतत्पद्यद्वयं राक्षसप्रणिधिस्तनकलशपठितम् ॥ २२ ॥

अपि च—

भूषणाद्युपभोगेन प्रभुर्भवति न प्रभुः ।
परैरपरिभूताज्ञस्त्वमिव प्रभुरुच्यते ॥ २३ ॥

चाणक्यः—( आकर्ण्यात्मगतम् । ) प्रथमं तावद्विशिष्टदेवतास्तुतिरूपेण प्रवृत्तशरद्गुणप्रख्यापनमाशीर्वचनम् इदमपरं किमिति नावधारयामि । ( विचिन्त्य । ) आः ज्ञातम् । राक्षसस्यायं प्रयोगः । आः दुरात्मन् राक्षसहतक ! दृश्यसे, जागर्त्ति खलु कौटिल्यः ।

राजा—आर्य्य वैहीनरे ! दापयाभ्यां वैतालिकाभ्यां सुवर्णशतम्

---

भूषणादीति । प्रभुर्नृपः भूषणाद्युपभोगेन अलंकरणादिपरिधारणादिजन्यसुखसाक्षात्कारेणेत्यर्थः। प्रभुर्न भवति प्रभुशब्दवाच्यो न भवतीत्यर्थः । परैरन्यैः अपरिभूता अप्रतिहता आज्ञा यस्य स परैरपरिभूताज्ञः त्वमिव भवानिव प्रभुः नृपतिः उच्यते कथ्यते जनैरिति शेषः । यदीयशासनं कुत्राप्यस्खलत्सर्वदैव सर्वैः शिरोभिर्धृयते स एव प्रभुर्नतु स्खलितशासनोऽपीति कौटिल्यकृतत्वदाज्ञाव्याघातेन प्रभुशब्दवाच्यत्वस्य त्वयि संदिग्धप्रायत्वात्तदालोचनीयमिति भावः । अत्रोपमाऽलंकारः । अनुष्टुप् वृत्तम् ॥ २३ ॥

आकर्ण्येति । आकर्ण्य राक्षसप्रणिधिस्तनकलशपठितं मौर्योत्तेजकं पद्यद्वयं श्रुत्वेत्यर्थः । आत्मगतं ( क्रियाविशेषणमिदम् ) मनोगतं यथा तथा ब्रवीतीत्यर्थः ) प्रथमं प्राक् तावच्छब्दोऽत्र वाक्यालंकारे, विशिष्टा चासौ देवता विशिष्टदेवता तस्याः स्तुतिर्विशिष्टदेवतास्तुतिः सैव रूपन्तेन विशिष्टदेवतास्तुतिरूपेण, प्रवृत्ता चासौ शरत्प्रवृत्तशरत् गुणानां प्रख्यापनं गुणप्रख्यापनं प्रवृत्तशरदो गुणप्रख्यापनं यस्मिन्तत् प्रवृत्तशरद्गुणप्रख्यापनम् उपस्थितशरद्गुणकीर्त्तनम् आशीर्वचनम् आशीर्वादः इदम् अपरं द्वितीयवैतालिकोक्तं किमिति नावधारयामि न जानामीत्यर्थः । विचिन्त्य, विचार्य, आः ज्ञातम् ईर्ष्यासूचकमव्ययम् राक्षसस्यायं प्रयोगः नन्दसचिवनियुक्तस्य कस्यचिद्वैतालिकस्य चन्द्रगुप्तमुत्तेजयितुमुक्तिरियमित्यवगतमित्यर्थः । दुरात्मन् राक्षसहतक ! दृश्यसे मयेति शेषः।।चाणक्यः । कौटिल्यो जागर्त्ति स्वकार्येषु सावधानत्वेन त्वत्कृतमौर्यानिष्टलेशसम्भावनापीति भावः ।

आभ्यामिति । आभ्यां नेपथ्यस्थिताभ्यां वैतालिकाभ्यां स्तुतिपाठकाभ्यां

हस्तम् ।

कञ्चुकी--यदाज्ञापयति देवः । ( इत्युत्थाय परिक्रामति ) ।

चाणक्यः--( सक्रोधम् । ) वैहीनरे ! तिष्ठ तिष्ठ, न गन्तव्यम् । वृषल ! किमयमस्थाने एव महानर्थोत्सर्गः क्रियते ?

राजा—आर्य्येणैवं भवता निरुद्धचेष्टाप्रसरस्य मम बन्धनमिव राज्यं, न राज्यमिव ।

चाणक्यः—वृषल ! स्वयमनभियुक्तानां राज्ञामेते दोषा भवन्ति । तद्यदि न सहसे, तदा स्वयमेवाभियुज्यस्व ।

राजा—एते वयं स्वकर्म्मण्यभियुज्यामहे ।

चाणक्यः—प्रियं नः, वयमपि स्वकर्मण्यभियुज्यामहे ।

राजा--यद्येवं, तर्हि कौमुदीमहोत्सवप्रतिषेधस्य प्रयोजनं श्रोतु-

सुवर्णानां शतानि तेषां सहस्रं सुवर्णशतसहस्रं शतसहस्रसंख्याकसुवर्णमुद्रात्मकं पारितोषिकं दापय कोशाध्यक्षेन त्वमिति शेषः ।

सक्रोधमिति । क्रोधेन कोपेन सहितं सक्रोधं सकोपं यथा तथा ब्रवीति चाणक्य इत्यर्थः। वृषल मौर्य ! किं किमर्थम् अस्थानेऽसत्पात्रे अयमेष महानर्थोत्सर्गो धनव्ययः क्रियते त्वयेति शेषः । ( चाणक्यचन्द्रगुप्तयो रोषसम्भाषणं सम्फेटः ) ।

आर्य्येणेति । आर्येण पूज्येन भवता एवं वैतालिकोद्देश्यकार्थत्यागवत् सर्वतः सर्वथा निरुद्धचेष्टाप्रसरस्य प्रतिहतोद्योगावसरस्य मम राज्यं प्रजाधिपत्यं बन्धनमिव कारागृहसदृशमिव नाऽऽधिपत्यमिवेत्यर्थः ।

स्वयमिति । स्वयमनभियुक्तानां राजकार्येष्वस्वतन्त्राणां राज्ञां नृपाणां एते इमे दोषाः मादृशपूज्यजनादेशामर्षणात्मका इत्यर्थः । सम्भवन्ति जायन्ते । निजस्वाधीनताकांक्षयाऽन्यस्वाधीनतां न क्षमन्ते इति भावः । तत्तस्मात्कारणात् यदि न सहसे गुरुजनगौरवमिति शेषः। तदा स्वयमेव साक्षादेव अभियुज्यस्व राजकार्यसम्पादने तत्परो भव । स्वातन्त्र्यं गृहाणेत्यर्थः ।

एते इति । एते वयमिति शेषः। स्वकर्मणि राजकार्ये अभियुज्यामहे स्वतन्त्रा भवामः ( एतद् गुरोरमाननं छलम् ) ।

प्रियमिति । नोऽस्माकं प्रियमिष्टं स्वातन्त्र्येण राजाकार्यावलोकनमिति शेषः।

मिच्छामि ।

चाणक्यः—वृषल ! कौमुदीमहोत्सवानुष्ठानस्य किं प्रयोजनमित्यहमपि श्रोतुमिच्छामि ।

राजा—प्रथमं तावत् ममाज्ञाऽव्याघातः ।

चाणक्यः—वृषल ! ममापि खलु त्वदाज्ञाऽव्याघात एव कौमुदीमहोत्सवप्रतिषेधस्य प्रथमं प्रयोजनमिति । कुतः ?—

अम्भोधीनां तमालप्रभवकिसलयश्यामवेलावनानाम् ,
आ पारेभ्यश्चतुर्णां चटुलतिमिकुलक्षोभितान्तर्जलानाम् ।

---

वयमपि स्वकर्मणि ब्राह्मणानां कृत्येऽग्निहोत्रादौ मन्त्रिकार्ये वा, अभियुज्यामहे उद्युक्ता भवामः । (अग्निहोत्राद्यात्मककर्मण्यभियोगो ममेति बाह्योऽर्थः) राक्षसायत्तीकरणात्मककर्मण्यभियोगस्तु गुप्तोऽर्थः ।

प्रथममिति । प्रथमं प्राक् तावच्छब्दो वाक्यालङ्कारे, मम आत्मनः आज्ञाव्याघातः आदेशभङ्गः । आज्ञाविधानमिति पाठे आदेशप्रचारणमेव फलमित्यर्थः । आज्ञाऽव्याघात इति पाठे आदेशप्रतिपालनं ( स्वीकार ) इत्यर्थः ।

ममापीति । ममापि आत्मनोऽपि त्वदाज्ञाऽव्याघातः तवादेशाप्रतिपालनमेव प्रथममाद्यं प्रयोजनं फलमित्यर्थः ।

अम्भोधीनामिति । तमालेभ्यः प्रभवन्तीति तमालप्रभवाणि । यद्वा प्रभवन्त्यस्मादिति प्रभवस्तमालः प्रभवो येषां तानि तमालप्रभवाणि तानि च तानि किसलयानि तमालप्रभवकिसलयानि तैः श्यामानि कृष्णानि वेलावनानि येषां ते तथोक्तास्तेषां तमालप्रभवकिसलयश्यामवेलावनानाम् तापिच्छजातनवपल्लवासितकूलारण्यानाम् चटुलानि च तानि तिमिकुलानि चटुलतिमिकुलानि तैः क्षोभितमन्तर्जलं जलमध्यं येषां ते तथोक्तास्तेषां चटुलतिमिकुलक्षोभितान्तर्जलानाम् , सञ्चरद्राजमत्स्यविशेषसमूहविलोडितजलमध्यानां चतुर्णाम् अम्भांसि धीयन्ते एष्विव्यम्भोधयस्तेषामम्भोधीनां सरित्पतीनाम् आपारेभ्यः पारेभ्यः पारतीरेभ्यः आ पारान् प्राप्तैरित्यर्थः । परतीरपर्यन्तप्रदेशात्समागतैरिति वाऽर्थः । नताश्च ते नृपतयो नतनृपतयस्तेषां शतानि नतनृपतिशतानि तैः नतनृपतिशतैः वशवर्त्तिराजसमूहैः ( कर्तृभिः ) सपुष्पा पुष्पयुक्ता माला स्रगिव या आज्ञा त्वदीयेति शेषः। शिरोभि-

मालेवाज्ञा सपुष्पा नतनृपतिशतैरुह्यते या शिरोभिः,
सा मय्येव स्खलन्ती प्रथयति विनयालंकृतं ते प्रभुत्वम् ॥ २४ ॥

राजा—अथापरमपि प्रयोजनं यत्तच्छ्रोतुमिच्छामि ।

चाणक्यः—तदपि कथयामि ?

राजा—कथ्यताम् ।

चाणक्यः—शोणोत्तरे ! शोणोत्तरे ! मद्वचनात् कायस्थमचलदत्तं ब्रूहि, यत् भद्रभटप्रभृतीनां लेख्यपत्रं तत्तावत् दीयतामिति ।

प्रतीहारी—जं अज्जो आणवेदि त्ति । ( निष्क्रम्य पुनः प्रविश्य । ) अज्ज ! एदं पत्तं । ( १ )

चाणक्यः—( गृहीत्वा । ) वृषल ! श्रूयताम् ।

राजा—दत्तावधानोऽस्मि ।

---

( १ ) यदार्य आज्ञापयति इति । आर्य ! इदं पत्रम् ।

---

रुत्तमाङ्गैरुह्यते ( वर्तमानसामीप्ये लट् ) धारयिष्यते सा आज्ञा मय्यात्मन्येव स्खलन्ती व्याहता सती ते तव प्रभुत्वमाधिपत्यं विनयेन प्रश्रयेणालंकृतं भूषितं विनयालंकृतं प्रश्रयभूषितमित्यर्थः । प्रथयति ख्यापयति । (इत्यादि चाणक्यवच-नजातं गुरुकीर्तनं प्रसङ्गः ) कुत्राप्यस्खलितायास्तवाज्ञाया मयि स्खलनेऽपि क्षमता त्वयि विनयातिशयं सूचयतीति भावः ।

मालेवेत्यत्रेवशब्दसत्त्वादुपमालङ्कारः । तमालकिसलयेत्युक्तस्यैव सामर्थ्ये प्रभवशब्दस्याधिक्यादधिकपदत्वदोषः । ओजो गुणः । गौडी रीतिः । स्रग्धरा वृत्तम् ॥ २४ ॥

मद्वचनादिति । मद्वचनात् मदुक्त्या अचलदत्तम् एतन्नामकं कायस्थं चित्र-गुप्तसजातीयं ब्रूहि, किमित्याह—यदिति । इतः कुसुमपुरात् अपक्रम्य निर्गत्य अप-रागान्मौर्येऽननुरागात् मलयकेतुं पर्वतकसुतम् आश्रितानां सेवमानानां भद्रभटप्रभृ-तीनां भद्रभटादीनां यत् लेख्यपत्रं लिखितपत्रिका तत् दीयताम् अर्प्यताम् । ( चा-णक्यादेशाद्भद्रभटप्रभृतयोऽननुरागं मौर्ये प्रकाश्य कुसुमपुरान्निर्गत्य मलयकेतुमाश्रित इति पञ्चमेऽङ्के स्फुटी भविष्यति । )

दत्तावधानोऽस्मीति । दत्तमवधानं चित्तं येन स दत्तावधानो दत्तचित्तो

चाणक्यः—( वाचयति ) स्वस्ति, सुगृहीतनामधेयस्य देवस्य चन्द्रगुप्तस्य सहोत्थायिनां प्रधानपुरुषाणामितोऽपक्रम्य मलयकेतुमाश्रितानां परिमाणलेख्यपत्रम्। तत्र प्रथमं तावत् गजाध्यक्षो भद्रभटः, अश्वाध्यक्षः पुरुषदत्तः महाप्रतीहारस्य चन्द्रभानोर्भागिनेयो हिङ्गुरातः, देवस्य स्वजनगन्धी महाराजो बलगुप्तः, देवस्यैव कुमारसेवको राजसेनः, सेनापतेः सिंहबलस्य कनीयान् भ्राता भागुरायणः मालवराजपुत्रो रोहिताक्षः क्षत्रगणमुख्यतमो विजयवर्मा इति। ( आत्मगतम् ) एते वयं देवस्य कार्य्येऽवहिताः स्म इति। ( प्रकाशम् ) एतावदेतत् पत्रम्

ऽस्मिन् श्रवणे इति शेषः।

वाचयतीति। प्रतीहारीसमानीतं पत्रं पठतीत्यर्थः। स्वस्ति मङ्गलमस्त्विति शेषः। मङ्गलार्थं पत्रादौ स्वस्तिशब्दोपादानस्य प्रसिद्धत्वात्स्वस्तिशब्द उपात्त इत्यवधेयम्। सुगृहीतं प्रातःस्मरणीयं नामधेयं नाम यस्य स तथोक्तस्तस्य सुगृहीतनामधेयस्य प्रातःस्मरणीयनाम्नः देवस्य राज्ञश्चन्द्रगुप्तस्य मौर्यस्य सह सार्द्धमुत्तिष्ठन्ति ये ते सहोत्थायिनस्तेषां सहोत्थायिनां युगपदुत्थितिशीलानामितोऽस्मात्कुसुमपुरादित्यर्थः। अपक्रम्य निर्गत्य मलयकेतुं पर्वतकपुत्रम् आश्रितानां सेवमानानां प्रधानपुरुषाणां कार्याधिपतीनामिदम् प्रमाणस्य लेख्यपत्रं, संख्यापत्रमित्यर्थः। अस्तीति शेषः। तत्र प्रमाणपत्रे तावच्छब्दो वाक्यालंकारे प्रथममेव आदावेव भद्रभटः, गजाध्यक्षो हस्तिपालकः पुरुषदत्त एतदाख्यः, अश्वानां वाजिनामध्यक्षः पालकः अश्वाध्यक्षोऽश्वपालकः, महांश्चासौ प्रतीहारो महाप्रतिहारस्तस्य महाप्रतीहारस्य प्रधानद्वारपालकस्य चन्द्रभानोस्तदाख्यस्य भगिन्या अपत्यं भागिनेयः भगिनीपुत्रः हिङ्गुरातः, देवस्य राज्ञश्चन्द्रगुप्तस्येत्यर्थः। स्वजनस्याऽऽत्मीयजनस्य गन्धः सम्बन्धोऽस्यास्तीति स्वजनगन्धी आत्मीयजनसम्बन्धी।

गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयोः। इति मेदिनी।

महांश्चासौ राजा महाराजः ( राजाहःसखिभ्य इति टच् ) बलगुप्तः, देवस्यैव नृपस्य चन्द्रगुप्तस्यैव कुमारे बाल्ये सेवको भृत्यः कुमारसेवकः बाल्यभृत्यः राजसेनः, सेनापतेः सैन्याध्यक्षस्य सिंहबलस्य कनीयान् अनुजो भ्राता सोदरः

राजा—आर्य ! एतेषामपरागहेतून् श्रोतुमिच्छामि ।

चाणक्यः—वृषल ! श्रूयताम् , अत्र यावेतौ गजाध्यक्षाश्वाध्यक्षौ भद्रभट-पुरुषदत्तनामानौ, एतौ खलु स्त्री-मद्य-मृगयाशीलौ, हस्त्यश्वावेक्षणेऽनभियुक्तौ इति स्वाधिकाराभ्यामवरोप्य मया स्वजीवनमात्रेणैव स्थापितावित्यपरक्तौ, गत्वा स्वेन स्वेन चाऽऽधिकारेण व्यवस्थाप्य मलयकेतुमाश्रितौ । यावेतौ हिङ्गुरातबलगमौ, तावत्यन्तलु-

---

भागुरायणः, मालवराजस्य पुत्रो मालवराजपुत्रः मालवाधीशसुतः लोहिते रक्तवर्णेऽक्षिणी नेत्रे यस्य स लोहिताक्षः ताम्रवर्णनेत्रः, अतिशयेन मुख्यो मुख्यतमः क्षत्रगणानां मुख्यतमः क्षत्रगणमुख्यतमः क्षत्रियवर्गप्रधानः विजयवर्मा । इतीत्येतत्सर्वं पठित्वा आत्मगतम् अस्पष्टं यथा तथा ब्रवीति । एते वयं देवस्य राज्ञश्चन्द्रगुप्तस्येत्यर्थः । कार्ये कृत्ये अवहिताः सावधानाः स्मो भवामः । प्रकाशं सर्वैः श्राव्यं यथा तथा ब्रवीतीत्यर्थः । एतत्पठ्यमानं पत्रं दलमेतावत् एतद्वृत्तयुक्तमित्यर्थः । अस्तीति शेषः ।

एतेषामिति । एतेषां भद्रभटप्रभृतीनाम् अपरागाणां हेतवः कारणानि अपरागहेतवस्तानपरागहेतून् विरागकारणानीत्यर्थः । श्रोतुमाकर्णितुम् इच्छामि वाञ्छामि ।

वृषलेति । वृषल मौर्य ! श्रूयतां तेषां विरागकारणमाकर्ण्यताम् अत्र भद्रभटादिष्वित्यर्थः। यावेतौ भद्रभट पुरुषदत्तनामानौ भद्रभट-पुरुषदत्तसंज्ञकौ गजाध्यक्षाश्वाध्यक्षौ हस्तिपालकाश्वपालकौ तौ खलुशब्दो वाक्यालंकारे स्त्री च मद्यं च मृगया च स्त्री-मद्य-मृगयास्ताः शीलं स्वभावो ययोस्तौ स्त्री मद्य-मृगयाशीलौ नारी मद्याखेटस्वभावौ हस्ती चाश्वश्च हस्त्यश्वं तस्यावेक्षणं सम्यक् पालनं तस्मिन् हस्त्यश्वावेक्षणे गजवाजिसंरक्षणेऽनभियुक्तौ असावधानौ इति हेतोः, स्वाधिकाराभ्यां हस्त्यश्वरक्षणात्मकाभ्यामित्यर्थः। अवरोप्य पृथक्कृत्य, स्वयोर्जीवनं स्वजीवनं तदेव स्वजीवनमात्रं तेन स्वजीवनमात्रेण स्वजीविकामित्रेणैवेत्यर्थः। स्थापितौ इत्यतो हेतोः अपरक्तौ त्यक्तानुरागौ सन्तौ गत्वा मलयकेतुसन्निधिमिति शेषः । स्वेन स्वेन चाधिकारेण गजरक्षकत्वेन अश्वरक्षकत्वेन रूपेणेत्यर्थः। व्यवस्थाप्य निश्चित्य आत्मानमिति शेषः । मलयकेतुं पर्वतकपुत्रम् आश्रितौ तमाश्रित्य गजरक्षकोऽश्वरक्षकश्च जातौ

ब्धप्रकृती दत्तं धनमबहुमन्यमानौ, तत्र बहु लभ्येत इति मलयकेतुमाश्रितौ। योऽप्यसौ भवतः कुमारसेवको राजसेनः सोऽपि तव प्रसादादतिप्रभूतकोषहस्त्यश्वं सहसैव सुमहदैश्वर्यमवाप्य पुनरुच्छेदशङ्कयाऽपक्रम्य मलयकेतुमाश्रितः। योऽयमपरः सेनापतेः सिंहबलस्य कनीयान् भ्राता भागुरायणः, असावपि तत्र काले पर्वतकेन सह समुत्पन्नसौहार्दः तत्प्रीत्या च "पिता ते चाणक्येन घातितः" इति रहसि त्रासयित्वा, मलयकेतुमपवाहितवान्। ततो भवदपथ्यकारिषु चन्दनदासप्रभृतिषु निगृह्यमाणेषु स्वदोषाशङ्कयाऽपक्रम्य मलयकेतुमाश्रितः। तेनाप्यसौ मम प्राणरक्षक इति कृतज्ञतामनुवर्तमानेन आत्मनोऽनन्तरममात्यपदं ग्राहितः। यौ तौ लोहिताक्ष-विजयवर्म्माणौ, तावप्यतिमानित्वात् स्वदायादेभ्यस्त्वया दीयमानमसहमानौ, मलयकेतुमाश्रितौ। इत्येषामपरागहेतवः।

यावेतौ इमौ सिंहगुरात-बलगुप्तौ तन्नामानौ तवापि अत्यन्तमतिशयितं लुब्धा प्रकृतिः स्वभावो ययोस्तावत्यन्तलुब्धप्रकृती अतिशयितलोभाभिभूतस्वभावौ दत्तं त्वया प्रागङ्गीकृतं धनं द्रव्यम् अबहुमन्यमानौ अल्पमवबुध्यमानौ, विशेषप्राप्तिकामनयाऽल्पत्वेनापरितुष्यन्तावित्यर्थः। तत्र मलयकेतुसन्निधावित्यर्थः। बहु अधिकं लभ्येत प्राप्येत इत्यस्माद्धेतोः मलयकेतुं पर्वतकपुत्रम् आश्रितौ-योऽप्यसौ यश्चैषः भवतस्तव कुमारसेवकः बाल्यभृत्यः राजसेनः राजसेननामा सोऽपि तव भवतः प्रसादादनुग्रहात् अतिप्रभूतः विवृद्धः कोशो धनराशिः हस्तिनोऽश्वाश्च यस्मिन् तत् अतिप्रभूतकोशहस्त्यश्वं विवृद्धधनराशिगजाश्वं सुमहत् ऐश्वर्यं सम्पत्तिम् अवाप्य प्राप्य पुनर्भूयः उच्छेदशङ्कया विनाशत्रासेन अपक्रम्य इतो निर्गत्य मलयकेतुं पर्वतकसुतमाश्रितः सैन्याध्यक्षस्य सिंहबलस्यानुजः सोदरो भागुरायणोऽपि तत्र मलयकेतुसन्निधौ काले समये पर्वतकेन सह तन्नाम्ना मलयकेतुपित्रा सार्द्धं समुत्पन्नं सौहार्दं यस्य स समुत्पन्नसौहार्दः संजातमैत्रिकः, तस्मिन्प्रीतिस्तया तत्प्रीत्या पर्वतकस्नेहेन च, चाणक्येन कौटिल्येन ते तव पिता जनकः पर्वतक इत्यर्थः। घातितो विनाशितः इतीत्येद्वृत्तं रहसि एकान्ते त्रासयित्वा भाययित्वा मलयकेतुं पर्वतकपुत्रम् अपवाहितवान् अपसारितवान्। ततस्तदनन्तरं भवतोऽपथ्यं भवदपथ्यं तत्कर्त्तुं शीलं येषां ते भवदपथ्यकारिणस्तेषु भव-

राजा—आर्य ! एवमेतेषु परिज्ञातापरागहेतुषु क्षिप्रमेव कस्मान्न प्रतिविहितमार्येण ?

चाणक्यः—वृषल ! न पारितं प्रतिविधातुम् ।

राजा—किमकौशलात्, उत प्रयोजनापेक्षया ?

---

दपथ्यकारिषु त्वदनिष्टविधायिषु चन्दनदासः प्रभृतिरादिर्येषां ते चन्दनदासप्रभृतयस्तेषु चन्दनदासप्रभृतिषु चन्दनदासादिषु निगृह्यमाणेषु दण्ड्यमानेषु सत्सु स्वदोषाशङ्कया निजापराधभयेन अपक्रम्य इतो निर्गत्य मलयकेतुं पर्वतकपुत्रमाश्रितः प्राप्तः । असौ भागुरायणो मम प्राणरक्षकः अस्मज्जीवत्राता इति कृतं जानातीति कृतज्ञः तस्य भावः कृतज्ञता तां कृतज्ञताम् स्वप्राणत्राणात्मकप्रत्युपकारिताम् अनुवर्तमानेन अपेक्षमाणेन अनुसरतेति यावत् । तेन मलयकेतुनाऽपि आत्मनः स्वस्मात् अनन्तरम् अव्यवहितं सन्निकृष्टमिति यावत् । अमात्यपदं मन्त्रिस्थानं ग्राहितः प्रापितः । यौ तौ लोहिताक्ष-विजयवर्माणौ तावपि अतिमानित्वात् अत्यन्ताभिमानवत्त्वात् दायं पितृधनमाददते इति दायादाः ( दायपूर्वकददातेर्डप्रत्यये दायादप्रयोगोपपत्तिः ।

दायदस्तु भवेत्पुंसि सपिण्डे तनयेऽपि चेतीति मेदिनी ।

स्वस्य दायादाः स्वदायादास्तेभ्यः स्वदायादेभ्यः स्वबन्धुभ्यः त्वया भवता दीयमानं वितीर्यमाणं धनादिकमिति शेषः । असहमानौ अमृष्यमाणौ सन्तौ मलयकेतुं पर्वतकपुत्रमाश्रितौ अवलम्बितौ । इत्येतेषां भद्रभटादीनामपरागहेतवः विरागकारणानि सन्तीति शेषः ।

एवमिति । एवमुक्तप्रकारेण परिज्ञाता अवगता अपरागाणां विरागाणां हेतवः कारणानि येषां ते तथोक्तास्तेषु परिज्ञातापरागहेतुषु अवगतविरागकारणेषु एतेषु भद्रभटादिषु आर्येण पूज्येन भवता क्षिप्रं शीघ्रमेव कस्मान्न कुतो न प्रतिविहितं प्रतीकारः कृतः ।

न पारितमिति । प्रतिविधातुं प्रतिकर्तुं न पारितं न युक्तमित्यर्थः ।

किमकौशलादिति । कुशलस्य भावः कौशलं सामर्थ्यं न कौशलमकौशलं तस्मादकौशलात् असामर्थ्यात् उत अथवा प्रयोजनस्याऽपेक्षा प्रयोजनापेक्षा तया प्रयोजनापेक्षया यत्किञ्चिदीप्सितफलानुरोधेनेत्यर्थः ।

चाणक्यः—कथमकौशलं भविष्यति, प्रयोजनापेक्षयैव ।

राजा—तदप्रतिविधानप्रयोजनमिदानीं श्रोतुमिच्छामि ।

चाणक्यः—वृषल ! श्रूयतामवधार्य्यताञ्च ।

राजा—उभयमपि क्रियते, कथ्यताम् ।

चाणक्यः—वृषल ! इह खलु विरक्तानां प्रकृतीनां द्विविधं प्रतिविधानम्—अनुग्रहो निग्रहश्चेति । अनुग्रहस्तावत् आक्षिप्ताधिकारयोः भद्रभट-पुरुषदत्तयोः पुनः अधिकारारोपणमेव । अधिकारश्च पुनस्तादृशेषु व्यसनयोगात् अनभियुक्तेषु पुनरारोप्यमाणः सकलस्यैव

---

कथमकौशलमिति । कथं कस्मात् अकौशलमसामर्थ्यं भविष्यति प्रयोजनापेक्षयैव ईप्सितकार्यानुरोधेनैव, तेषु प्रतिविधानमसाम्प्रतमिति शेषः ।

श्रूयतामिति । श्रूयताम् अप्रतिविधानप्रयोजनम् आकर्ण्यताम् अवधार्यतां विचार्यताञ्च ।

इहेति । इहाऽस्मिन् लोके विरक्तानामनुरागशून्यानां सन्तोषरहितानामिति यावत् । प्रकृतीनां प्रजानां द्वे विधे यस्य तद्द्विविधं द्विप्रकारं प्रतिविधानं प्रतीकारः । अनुग्रहोऽनुकम्पा निग्रहो दण्डः । तावत् आदौ आक्षिप्तः आच्छिद्य गृहीतोऽधिकारः कार्यभारो ययोस्तौ तथोक्तौ तयोराक्षिप्ताधिकारयोः स्वायत्तीकृतकार्यभारयोः भद्रभटश्च पुरुषदत्तश्च भद्रभटपुरुषदत्तौ तयोर्भद्रभटपुरुषदत्तयोः पुनर्भूयः अधिकारे आरोपणमधिकारारोपणम् कार्यवेक्षणस्थापनमेव अनुग्रहोऽनुकम्पा । व्यस्यते विक्षिप्यते चित्तमनेनेति व्यसनं दुःखं तस्य योगः सम्बन्धस्तस्माद्व्यसनयोगात् स्त्रीमद्याखेटाभिनिवेशात् ।

व्यसनं विपदि भ्रंशे दोषे कामजकोपयोः । इति हलायुधः ।

अनभियुक्तेषु अयोग्येषु तादृशेषु आक्षिप्ताधिकारेषु पुनर्भूयः आरोप्यमाणः स्थाप्यमानः अधिकारः हस्त्यश्वरक्षणाध्यक्षत्वं राज्यस्याऽऽधिपत्यस्य सकलमेव सम्पूर्णमेव मूलं कारणं हस्तिनश्चाश्वाश्च हस्त्यश्वम् ( द्वन्द्वश्च प्राणितूर्यसेनाङ्गानामिति द्वन्द्वैकवद्भावः । अवसादयेत् विनाशयेत् । अत्यन्तमधिकं यथा तथा लुब्धा प्रकृतिर्ययोस्तौ तथोक्तौ तयोरत्यन्तलुब्धप्रकृतिकयोः अतितृष्णाग्रस्तस्वभावयोः, सकलं च तद्राज्यं सकलराज्यं तस्य प्रदानं सकलराज्यप्रदानं तेन सकलरा-

राज्यस्य मूलं हस्त्यश्वमवसादयेत्। हिङ्गुरात-बलगुप्तयोरत्यन्तलुब्धप्रकृतिकयोः सकलराज्यप्रदानेनाप्यपरितुष्यतोरनुग्रहः कथं कर्त्तुं शक्यः? राजसेन-भागुरायणयोस्तु धनप्रणाशभीतयोः कुतोऽनुग्रहस्यावकाशः? लोहिताक्ष-विजयवर्म्मणोरपि दायादमसहमानयोरतिमानिनोः कीदृशोऽनुग्रहः प्रीतिं जनयिष्यतीति परिहृतः पूर्वः पक्षः, उत्तरोऽपि खलु वयमचिरादधिगतनन्दैश्वर्य्याः सहोत्थायिनं प्रधानपुरुषवर्गमुग्रेण दण्डेन पीडयन्तो नन्दकुलानुरक्तानां प्रकृतीनामविश्वास्या भवाम, इत्यतः परिहृत एव। तदेवमनुगृहीतास्मद्भृत्यपक्षो राक्षसोपदेशश्रवणप्रवणो महीयसा म्लेच्छबलेन परिवृतः पितृवधामर्षी पर्वतकपुत्रो मलयकेतुरस्मानभियोक्तुमुद्यत इति, सोऽयं व्यायामकाले नोत्सवकाल इति। अतो दुर्गसंस्कारे आरब्धव्ये किं कौमुदीमहोत्सवेन? इति प्रतिषिद्धः।

राजा—आर्य्य! बहु प्रष्टव्यमत्र।

---

ज्यप्रदानेन निखिलप्रजाधिपत्यवितरणेनापि अपरितुष्यतोः सन्तोषमप्राप्नुवतोरि त्यर्थः। हिङ्गुरातश्च बलगुप्तश्च हिङ्गुरातबलगुप्तौ तयोर्हिङ्गुरातबलगुप्तयोः अनुग्रहो द कथं केन प्रकारेण कर्त्तुं विधातुं शक्यो योग्यः। धनस्य प्रणाशो धनप्रणाशस्तस्मा द्भीतौ धनप्रणाशभीतौ तयोर्धनप्राणशभीतयोः वसुव्ययसंजातसाध्वसयोः। राज सेनश्च भागुरायणश्च राजसेनभागुरायणौ तयोः राजसेनभागुरायणयोः विषयेऽनुग्रह दयायाः कुतः कथम् अवकाशोऽवसरः। दायादं ज्ञातिमसहमानयोरसूयतोः अ मानिनोरत्यन्ताभिमानवतोः लोहिताक्षश्च विजयवर्मा च लोहिताक्षविजयवम तयोर्लोहिताक्षविजयवर्मणोर्विषये कीदृशोऽनुग्रहो दया प्रीतिं हर्षं जनयति समुत्पा दयति इत्यतो हेतोः पूर्वपक्षः प्रथमकोटिरनुग्रहरूपः परिहृतः त्यक्तः खलु शब्दो वाक्यालंकारे। अचिरात् शीघ्रं नन्दानामैश्वर्यं नन्दैश्वर्यं अधिगतं प्राप्तं नन्दै यैस्तेऽधिगतनन्दैश्वर्याः प्राप्तनन्दसम्पदः सह सार्धमुत्तिष्ठति तच्छीलः सहोत्थायी सहोत्थायिनं युगपदुत्थानशीलं प्रधानपुरुषवर्गं मुख्यलोकश्रेष्ठम् उग्रेण तीव्र दण्डेन निग्रहेण पीडयन्तः क्लेशयन्तः नन्दानां कुलं नन्दकुलं तस्मिन्ननुरक्ता नन्द कुलानुरक्तास्तासां नन्दकुलानुरक्तानां नन्दान्वयासक्तानां प्रकृतीनां प्रजा

चाणक्यः—वृषल ! विश्रब्धं पृच्छ ममापि बह्वाख्येयमत्र ।

राजा—एवं पृच्छामि ।

चाणक्यः—अहमप्येव कथयामि ।

राजा—योऽयमस्माकमस्य सर्वस्यैवानर्थस्य हेतुर्मलयकेतुः स कस्मादार्य्येणापक्रामन्नुपेक्षितः ?

---

अविश्वास्या अप्रतीत्याः प्रत्येतुं न योग्या इत्यर्थः ( प्रतिपूर्वकादिणः कर्तरि क्यनुपपन्नबहुवचनान्तप्रतीत्यशब्दस्य नञा समासे रूपम् ) भवामो भविष्यामः ( भविष्यत्सामीप्ये लट् ) इत्यतः अस्माद्धेतोः इत्तरोऽपि द्वितीयेऽपि निग्रहरूप इत्यर्थः । पक्षः परिहृतः परित्यक्त एव । एवमुक्तप्रकारेण अनुग्रहीतोऽनुकम्पयावलम्बितोऽस्मत्पक्षो भद्रभटादिर्येन सोऽनुग्रहीताऽस्मत्पक्षः अनुकम्पयावलम्बितभद्रभटादिवर्गः राक्षसस्योपदेशो राक्षसोपदेशो राक्षसोपदेशे प्रवणो राक्षसोपदेशप्रवणः राक्षसकर्तृकशिक्षणानुरक्तः, महीयसा महता म्लेच्छानां बलं तेन म्लेच्छबलेन म्लेच्छसैन्येन परिवृतो युक्तः, पितुर्वधः पितृवधः पितृवधेनाऽमर्षोऽस्यास्तीति पितृवधामर्षी तातव्यापादनजन्यक्रोधयुक्तः, पर्वतकस्य पुत्रः पर्वतकपुत्रः मलयकेतुः अस्मान् अभियोक्तुम् पराभवितुम् उद्यतः तत्परः, इत्यतो हेतोः सोऽयं व्यायामस्य कालः व्यायामकालः सैन्यसंप्रहाद्यात्मकोऽधिकप्रयाससमयः नोत्सवकालः कौमुदीमहोत्सवसमयोऽस्तीति शेषः । विपत्प्राप्तिक्षणे नोत्सवोऽनुष्ठेयश्चानन्दजनको भवतीत्यर्थः । अतोऽस्मात्कारणात् दुर्गसंस्कारे आरब्धव्ये प्रक्रमितव्ये किं किंप्रयोजनं कौमुदीमहोत्सवेन शरत्पूर्णचन्द्रनिमित्तकपर्वोत्सवानुष्ठानेनेत्यर्थः । इत्यतो हेतोः प्रतिषिद्धः परित्यक्तः कौमुदीमहोत्सव इति शेषः ।

विश्रब्धमिति । विश्रब्धं विश्वस्तं यथा स्यात्तथा पृच्छ ब्रूहीत्यर्थः । अत्रास्मिन्विषये ममापि बहु अधिकम् आख्येयं वक्तव्यम् । योऽयमिति । योऽयं य एषोऽस्माकम् अस्यैतस्य भवदुक्तस्येत्यर्थः । अनर्थस्यानिष्टस्य हेतुः कारणं मलयकेतुः पर्वतकपुत्रः अस्तीति शेषः । स मलयकेतुरित्यर्थः । कस्मात् कुतः कारणात् आर्येण पूज्येन भवतेत्यर्थः । अपक्रामन् इतो निस्सरन् उपेक्षितः परित्यक्तः कथं न तद्गमनमवरुद्धमित्यर्थः ।

चाणक्यः--वृषल ! मलयकेतोरपक्रमणानुपेक्षणे द्वयी गतिः स्यात्, अनुगृह्येत निगृह्येत वा । अनुग्रहे पूर्वप्रतिश्रुतं राज्यार्द्धं प्रतिपाद्येत । निग्रहे तावत् पर्वतकोऽस्माभिर्व्यापादित इति कृतघ्नतायाः स्वयं हस्तो दत्तः स्यात् । प्रतिश्रुतार्द्धराज्यप्रतिपादनेऽपि पर्वतकविनाशः केवलं कृतघ्नतामात्रफलः स्यात् इति मलयकेतुरपक्रामन्नुपेक्षितः ।

राजा—अत्र तावदेवम् । राक्षसः पुनरिहैवान्तर्नगरे वर्त्तमान आर्य्येणोपेक्षित इत्यत्र किमुत्तरमार्य्यस्य ?

---

वृषलेति । वृषल मौर्य ! नोपेक्षणमनुपेक्षणमपक्रमणस्यानुपेक्षणमपक्रमणानुपेक्षणं तस्मिन् अपक्रमणानुपेक्षणे मलयकेतोः पर्वतकपुत्रस्य अपक्रमणानुपेक्षणे निष्क्रमणावरोधपरित्यागे द्वयी द्विप्रकारा गतिरुपायो अस्तीति शेषः । अनुगृह्येत अनुकम्प्येत वाऽथवा निगृह्येत दण्ड्येत, अनुग्रहो निग्रहो वेत्युभयविध उपाय इत्यर्थः । अनुग्रहेऽनुकम्पायां पूर्वप्रतिश्रुतं प्रागङ्गीकृतं राज्यार्द्धम् अर्द्धराज्यमित्यर्थः । प्रतिपाद्येत दीयेत । निग्रहे दण्डे तावत् आदौ वाक्यालंकारे वा तावच्छब्दः अस्माभिः पर्वतका मलयकेतुतातः व्यापादितो विनाशित इति कृतं हन्तीति कृतघ्नता तस्याः कृतघ्नतायाः कृतोपकारस्यापकारितायाः हस्तो हस्तावलम्बनः स्वयमात्मनैव दत्तः स्यात् । प्रतिश्रुतं प्रतिज्ञातं च तद्राज्यार्द्धं प्रतिश्रुतराज्यार्द्धं तस्य प्रतिपादनं प्रतिश्रुतराज्यार्द्धप्रतिपादनं तस्मिन् प्रतिश्रुतराज्यार्द्धप्रतिपादने प्रतिज्ञातार्द्धप्रतिपादने प्रतिज्ञातार्द्धराज्यदानेऽपि पर्वतकविनाशो मलयकेतुपितृवधः अस्मत्कृत इति शेषः । केवलं कृतघ्नतैव कृतघ्नतामात्रं तदेव फलं यस्य स कृतघ्नतामात्रफलः अपकारितामात्रप्रयोजनः स्यात् इत्यतो हेतोः मलयकेतुः पर्वतकपुत्रः अपक्रामन् इतो निर्गच्छन् उपेक्षितः परित्यक्तः अगृहीत इति यावत् ।

अत्रेति । अत्र मलयकेत्वपक्रमणोपेक्षणे तावत् प्रथमम् एवम् इदमुत्तरं प्रतिवचनम् । राक्षसो नन्दप्रधानसचिवः इहास्मिन्नेव कुसुमपुर एवेत्यर्थः । नगरस्य मध्येऽन्तर्नगरे ( विभक्त्यर्थेऽव्ययीभावसमासः, तृतीयासप्तम्योर्बहुलमिति सप्तम्या अम्भावस्य वैकल्पिकत्वेन नात्राम्भावः ) नगरमध्ये इत्यर्थः । वर्तमानो विद्यमानः आर्येण पूज्येन भवता उपेक्षितो न गृहीत इत्यत्र राक्षसोपेक्षणे आर्यस्य पूज्यस्य भवतः किमुत्तरं किं प्रतिवचनम् अस्तीति शेषः ।

चाणक्यः—राक्षसोऽपि खलु निजस्वामिनि स्थिरानुरागित्वात् सुचिरमेकत्र वासाच्च शीलज्ञानां नन्दानुरक्तानां प्रकृतीनामत्यन्तं विश्वास्यः, प्रज्ञा-पुरुषकाराभ्यामुपेतः, सहायसम्पदा युक्तः, कोषबलवानिहैवान्तर्नगरे वर्त्तमानो महान्तं खल्वन्तःकोपमुत्पादयेत् । दूरीकृतस्तु, बाह्यकोपमुत्पादयन्नपि न दुःखसाध्यो भविष्यतीत्यतोऽपक्रामन्नुपेक्षितः ।

राजा—तत् किमर्थमिहस्थ एवोपायैर्नोपक्रान्तः ?

चाणक्यः—अथ कथमपक्रान्तो भविष्यति ? ननु उपायैरेवासौ हृदयेशयः शङ्कुरिवोद्धृत्य दूरीकृतः । दूरीकरणस्य चोक्तं प्रयोजनम् ।

---

राक्षसोऽपीति । राक्षसोऽपि नन्दप्रधानसचिवोऽपि ( खलुशब्दोऽत्र निश्चये वाक्यालंकारे वा ) निजस्य स्वस्य स्वामी प्रभुर्निजस्वामी तस्मिन्निजस्वामिनि स्वप्रभौ नन्दे इत्यर्थः स्थिरश्चासावनुरागः स्थिरानुरागः सोऽस्त्यस्येति स्थिरानुरागी तस्य भावस्तत्वं तस्मात् स्थिरानुरागित्वात् दृढप्रेमवशात् सुचिरं बहुकालम् एकत्रैकस्मिन् स्थाने वासात् अवस्थानात् च शीलं जानन्तीति शीलज्ञास्तेषां शीलज्ञानां चरित्राभिज्ञानां नन्देऽनुरक्ता नन्दानुरक्तास्तासां नन्दानुरक्तानां नन्दस्नेहयुक्तानां प्रकृतीनां प्रजानाम् अत्यन्तं निरतिशयं विश्वास्यो विश्रम्भपात्रं प्रज्ञा च पुरुषकारश्च प्रज्ञापुरुषकारौ ताभ्यां प्रज्ञापुरुषकाराभ्यां बुद्धिपौरुषाभ्याम् उपेतो युक्तः । सह सार्द्धमयते गच्छतीति सहायः भृत्यः स एव संपत् सहायसंपत् तया सहायसंपदा भृत्यात्मकसंपत्त्या युक्तोऽन्वितः, कोश एव बलं तदस्यास्तीति कोशबलवान् अर्थसामर्थ्ययुक्तः इहैव कुसुमपुर एव अन्तर्नगरे नगरस्य मध्ये वर्तमानस्तिष्ठन् महान्तं प्रचुरम् अन्तःकोपं आभ्यन्तरिकविद्वेषम् उत्पादयेत् जनयेत् । दूरीकृतस्तु पृथक्कृतस्तु राक्षस इति शेषः, बाह्यकोपं बहिर्विद्वेषमुत्पादयन् जनयन्नपि न दुःसाध्यो न क्लेशप्राप्यो भविष्यति इत्यतो हेतोः अपक्रामन् निर्गच्छन् उपेक्षितोऽगृहीतः ।

तदिति । तत्तस्मात् इहस्थे नगरवर्त्तिन्येव राक्षसे किमर्थं कुतो नोपक्रान्तः वशीकरणोपायः कृत इत्यर्थः ।

अथेति । कथं केन प्रकारेणासौ राक्षसोऽपक्रान्तोऽसन्निहितवर्त्ती भविष्यति,

राजा—आर्य्य ! कस्माद्विक्रम्य न गृहीतः ।

चाणक्यः—वृषल ! राक्षसः खल्वसौ विक्रम्य निगृह्यमाणः स्वयं वा विनश्येत्, युष्मद्बलानि वा विनाशयेत्। एवं सत्युभयथापि दोषः। पश्य—

स हि भृशमभियुक्तो यद्युपेयाद् विनाशं,
ननु वृषल ! वियोगस्तादृशेनापि पुंसा ।
अथ तव बलमुख्यान्नाशयेत् सापि पीडा,
वनगज इव तस्मात् सोऽभ्युपायैर्विनेयः ॥ २५ ॥

ननुशब्दः संबोधने भो वृषल ! असौ राक्षसः हृदये शेते इति हृदयेशयः मनोवर्त्ती शङ्कुः कील इव उद्धृत्योत्पाट्य दूरीकृतोऽपसारितः दूरीकरणस्यापसारणस्य च प्रयोजनं फलमुक्तं कथितम् । हृदयवर्त्ती शङ्कुस्तिष्ठन्नधिकदुःखदोऽपसारितस्तु न तथा एवमयमपि राक्षसः सन्निकृष्टोऽधिकविद्वेषकृदसन्निकृष्टस्तु न तथेति भावः ।

आर्येति । आर्य पूज्य ! कस्मात्कुतो हेतोः विक्रम्य सामर्थ्येन न गृहीतो न धृतो राक्षस इति शेषः ।

वृषलेति । वृषल मौर्य ! ( खलुशब्दो वाक्यालंकारे ) असौ राक्षसः एष नन्दसचिवः विक्रम्य बलेन निगृह्यमाणो ध्रियमाणः स्वयं साक्षात् विनश्येत् म्रियेत युष्माकं बलानि युष्मद्बलानि त्वत्सैन्यानि विनाशयेत् व्यापादयेत् । एवं सति स्वयं विनाशे त्वत्सैन्यविनाशने च सतीत्यर्थः । उभयथाऽपि दोषः उभयस्मिन्नपि हानिः ।

सहीति । ननु भो वृषल मौर्य ! स राक्षसः भृशमत्यर्थम् ।

अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरः ।

इत्यमरः अभियुक्तो मत्सैन्यैराक्रान्तः सन् यदि विनाशमदर्शनमुपेयात् तदा तादृशेन लोकोत्तरगुणवता पुंसा पुरुषेण राक्षसेनेत्यर्थः । वियुक्तो विरहितः स्यास्त्वमिति शेषः । अहं विरहितः स्यामित्यर्थो वा अथ यदि तव भवतो बलमुख्यान् प्रधानसैन्यानि घातयेत् विनाशयेत् सापि विधेयप्राधान्येन स्त्रीलिङ्गनिर्देशः विनाशक्रियापीत्यर्थः, पीड़ा बाधा दुःखमित्यर्थः । तस्मादतो हेतोः वनगज इव वन्यकरीव स राक्षसः अभ्युपायैः सामदानाद्यात्मकैरुपायैर्वशीकरणसाधनैश्चेत्यर्थः । विनेयो वशीकार्यः शिक्षणीयश्च सैन्याभियोगेन राक्षसविनाशे चिरकाले तद्विरहात्तत्कर्तृकास्मत्सैन्यविनाशे च क्षते जीयमानत्वाच्च वन्यहस्तीव

राजा—न शक्नुमो वयमार्य्यस्य वाचा वाचमतिशयितुं, सर्वथाऽमात्यराक्षस एवात्र प्रशस्यतरः।

चाणक्यः—(सक्रोधम्।) न भवानिति वाक्यशेषः। मा तावदेवम्। भो वृषल! तेन किं कृतम?

राजा—यदि न ज्ञायते, तदा श्रूयताम्। तेन खलु महात्मना—

लब्धायां पुरि यावदिच्छमुषितं, कृत्वा पदं नो गले,
व्याघातो जयघोषणादिषु बलादस्मद्बलानां कृतः।
अत्यर्थं विपुलैः सुनीतिविभवैः सम्मोहमापादिता,
विश्वास्येष्वपि विश्वसन्ति मतयो न स्वेषु वर्गेषु नः ॥२६॥

---

युक्त्यासौ वशीकार्य इति भावः। वनगज इवेत्यत्र सादृश्यार्थप्रतिपादकेवशब्देन राक्षसस्य वन्यगजसाम्याभिधानादुपमाऽलंकारः। प्रसादो गुणः। वैदर्भी रीतिः। मालिनीनाम वृत्तम्। एतल्लक्षणं यथा छान्दोमञ्जर्याम्—

ननमयययुतेयं मालिनी भोगिलोकैः ॥ २९ ॥

न शक्नुम इति। वयम् आर्यस्य पूज्यस्य भवतः मतिं बुद्धिम् अतिशयितुम् उल्लङ्घयितुं न शक्नुमो न पारयामः। सर्वथा सर्वप्रकारेण अमात्यराक्षस एव नन्दप्रधानसचिव एव प्रशस्यतरः अतिशयेन प्रशस्यः श्रेष्ठ इत्यर्थः।

सक्रोधमिति। क्रोधेन कोपेन सहितं यथा तथा ब्रवीतीत्यर्थः। न भवानिति वाक्यशेषः। राक्षसान्यो न प्रशस्य इत्यवशिष्टवाक्यार्थः। मा तावदेवम् तत्र विलक्षणगुणस्य कस्याप्यदर्शनात राक्षसान्यो न प्रशस्य इति नावधेयमिति तदर्थः। भोवृषल, मौर्य तेन राक्षसेन किं कृतम् किं विशिष्टकार्यं सम्पादितम्।

लब्धायामिति। येन महात्मना राक्षसेन लब्धायामस्माभिरायत्तीकृतायां पुरि नगरे कुसुमपुरराजधान्यामित्यर्थः। नोऽस्माकं गले कण्ठे पदं चरणं कृत्वा विधाय यावदिच्छम् ईप्सितकालपर्यन्तम् उषितं स्थितम्, तथा अस्माकं बलानि अस्मद्बलानि तेषामस्मद्बलानामस्मत्सैन्यानां जयस्य घोषणाऽऽदिर्येषु तानि जयघोषणादीनि तेषु जयघोषणादिषु जयशब्दव्याहारादिकार्येष्वित्यर्थः। बलात हठात बलमाश्रित्य व्याघातः विरोधः प्रत्यूह इति यावत। कृत आचरितः। विपुलैर्विशिष्टैः स्वस्य नीतयः स्वनीतयः स्वनीतय इव विभवाः स्वनीतिविभवास्तैः स्वनीतिविभवैः स्व-

चाणक्यः— ( विहस्य । ) वृषल ! एतत् कृतं राक्षसेन !!

राजा—अथ किम् । एतत् कृतममात्यराक्षसेन ।

चाणक्यः—वृषल ! मया पुनर्ज्ञातं, नन्दमिव भवन्तमुद्धृत्य भवानिव

---

नयचातुर्य: अत्यर्थमतिशयं सम्मोहम् अविवेकम् आपादिता: प्रापिता:। नोऽस्माकं मतयो बुद्धयो विश्वास्येष्वपि प्रत्ययभाजनेष्वपि स्वेषु आत्मीयेषु वर्गेषु पक्षेषु भद्रभटादिषु न विश्वसन्ति न प्रतियन्ति ।

स्वनयकौशलवशादस्मान् बलवतोऽप्यनादृत्य वशीकृतेऽस्माभिर्नगरे निर्भीकस्येव यथेच्छं वसतोऽस्मत्सैन्यकर्तृकजयघोषणादिप्रतिषेधमाचरतो राक्षसस्यातिप्रशस्तधीशालित्वावगमादात्मीयेष्वपि भद्रभटप्रभृतिषु नास्मद्बुद्धि: प्रत्येतीति भाव: । एकस्यैव गद्यस्यतच्छब्दस्य वास-व्याघात-मोहापादनक्रियास्वन्वयात् पददानसंसर्गस्य गलेऽसत्त्वेऽपि तत्र तत्सत्त्वप्रतिपादनात् उत्कृष्टचरित्रवर्णनाच्च दीपकातिशयोक्त्युदात्तालंकारत्रयस्यैकत्र मिथोऽनपेक्षया स्थितत्वात्पद्येऽस्मिन्नुक्तालंकारत्रयसंसृष्टि: । तथा च साहित्यदर्पणे—

अप्रस्तुतप्रस्तुतयोर्दीपकन्तु निगद्यते ।
अथ कारकमेकं स्यादनेकासु क्रियासु चेत् ॥
सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते ।
भेदेऽप्यभेद: सम्बन्धेऽसम्बन्धस्तद्विपर्ययौ ॥
पौर्वापर्यात्यय: कार्यहेत्वो: सा पञ्चधा तत: ।
लोकातिशयसम्पत्तिवर्णनोदात्तमुच्यते ॥
यद्वापि प्रस्तुतस्याङ्गं महतां चरितं भवेत् ।
वृत्तं च शार्दूलविक्रीडितं नाम ॥ २६ ॥

**विहस्येति** । विहस्य हास्यं कृत्वा राक्षसेन नन्दप्रधानामात्येनैतत्त्वदुक्तं कार्यं कृतं सम्पादितम् । नन्दोन्मूलन-वृषलराज्यसम्पादनहेतुभूतात्मशक्तिप्रशंसनादिदं राक्षसनीतिविभवाधिक्षेपार्थं सोत्प्रासवचनं स्वशक्तिप्रशंसनं व्यवसाय इत्यवधेयम् ।

**अथ किमिति** । एवमित्यर्थ: । अमात्यराक्षसेन राक्षसनाम्ना नन्दसचिवेन एतत् लब्धायां पुरीत्याद्युक्तं कृतं विहितम् ।

**वृषलेति** । वृषल मौर्य ! मया आत्मना पुनर्ज्ञातमवगतं नन्दमिव नन्दनृपवत्

भूतले मलयकेतुरधिराज्यमारोपितः ।

राजा—अलमुपालभ्य ? आर्य्य ! दैवेनेदमनुष्ठितं, किमार्य्यस्य ?

चाणक्यः—हे मत्सरिन् !

आरुह्यारूढकोपस्फुरणविषमिताग्राङ्गुलीमुक्तचूडां,
लोकप्रत्यक्षमुग्रां, सकलरिपुकुलोच्छेददीर्घां प्रतिज्ञाम् ।
केनान्येनावलिप्ता नवनवतिशतद्रव्यकोटीश्वरास्ते,
नन्दाः पर्य्यायभूताः पशव इव हताः पश्यतो राक्षसस्य ॥ २७ ॥

---

भवन्तं त्वाम् उद्घृत्योन्मूल्य भवानिव त्वमिव भूतले पृथिव्यां मलयकेतुः पर्वतक-पुत्रः अधिराज्यं सिंहासने आरोपितः स्थापितः । यथा नन्दं हत्वा त्वामधिराज्ये स्थापितो मया तथा त्वां हत्वा मलयकेतुरधिराज्ये स्थापितो राक्षसेनेत्येव ज्ञात-मिति भावः ।

अलमिति । आर्य पूज्य ! उपालभ्य तिरस्कृत्य अलं व्यर्थं तिरस्कारो न वि-धेयः । इदम् चन्द्रगुप्तस्य राज्यसम्पादनं नन्दोन्मूलनं वा दैवेन भाग्येन अनुष्ठितं कृतम् अत्रास्मिन्विषये राज्यसम्पादने नन्दोन्मूलने वेत्यर्थः । आर्यस्य पूज्यस्य भवतः किं न किमपीत्यर्थः । ( अयं गुरोरनादरो द्रवः ) ।

मत्सरिन्निति । मत्सरोऽन्योत्कर्षासहनं सोऽस्यास्तीति मत्सरी तत्सम्बुद्धौ हे मत्सरिन् अन्योत्कर्षासहनशील ! मदनुष्ठितमाकर्णयेति शेषः ।

आरुह्येति । आरूढश्चासौ कोप आरूढकोपस्तस्य स्फुरणमारूढकोपस्फुरणं तेन विषमिताऽऽरूढकोपस्फुरणविषमिता साचासावग्राङ्गुली आरूढकोपस्फुरणविष-मिताग्राङ्गुली तया मुक्ता चूडा यस्यां सा तथोक्ता तामारूढकोपस्फुरणविषमिता-ग्राङ्गुलीमुक्तचूडाम् सञ्जातक्रोधावेशासमाङ्गुल्यग्रभागच्यावितशिखाम् रिपोः कुलानि रिपुकुलानि सकलानि च तानि रिपुकुलानि सकलरिपुकुलानि तेषामुत्सादः सकलरि-पुकुलोत्सादस्तेन दीर्घा तां सकलरिपुकुलोत्साददीर्घां निखिलशत्रुवंशविनाशमहतीं सपु-त्रनन्दवंशविध्वंसिनीम् अत एवोग्रां कठिनां प्रतिज्ञां प्रतिश्रुतिं लोकप्रत्यक्षं लोकसम-क्षम् आरुह्य विधाय, अन्येन मदतिरिक्तेन केन जनेन अवलिप्ताः साभिमानाः नव-नवतिशतद्रव्यकोटीश्वराः प्रभूतधनस्वामिनः नन्दास्तदाख्यनृपतयो नवनन्दा इत्य-र्थः । पर्यायभूता एकरज्जुबद्धाः पशव इव पश्यतोऽवलोकयतो राक्षसस्य नन्दसचिवस्य

अपि च,—

गृध्रैराबद्धचक्रं वियति विचलितैर्दीर्घनिष्कम्पपक्षै-
र्धूमैर्ध्वस्तार्कभासां सघनमिव दिशां मण्डलं दर्शयन्तः ।
नन्दैरानन्दयन्तः पितृवननिलयान् प्राणिनः पश्य, चैतान् ,
निर्वान्त्यद्यापि नैते स्रुतबहलवसावाहिनो हव्यवाहाः ॥ २८ ॥

राजा—अन्येनैवेदमनुष्ठितम् ।

पश्यन्तं राक्षसमनादृत्येत्यर्थः ( षष्ठी चानादरे इति षष्ठी ) हता विनाशिताः । क्रोधवशाद्दारुणप्रतिज्ञां विधाय शिखामुन्मुच्यैकरज्जुनिबद्धपशूनिव नन्दान् राक्षसं तिरस्कुर्वन् मदन्यो नैव कश्चिद्विनाशितवान् किन्त्वहमेवेत्यर्थः । त्वदुक्तराक्षसकृत्यापेक्षयाऽस्मत्कृत्यस्यैव विशिष्टत्वादहमेव ततः प्रशस्य इति भावः । केनान्येन हता इत्युक्त्या मद्व्यतिरिक्तेन केनापि न हताः किन्तु मयैव हता इत्यर्थप्रतीत्या पद्येऽस्मिन्नर्थापत्त्यलंकारः । पशव इवेत्यत्रेवशब्देन नन्दानामेकरज्जुसंयतपशुसादृश्यवाचनादुपमालङ्कारश्च ॥ ओजो गुणः । गौडी रीतिः । स्रग्धरावृत्तम् ॥ २७ ॥

गृध्रैरिति । वियति गगने आबद्धानि कृतानि चक्राणि चक्राकारवेष्टनानीत्यर्थः । तद्यथा स्यात्तथा विचलितैरुड्डीयमानैः दीर्घा निष्कम्पाश्च पक्षा येषां ते दीर्घनिष्कम्पपक्षास्तैर्दीर्घनिष्कम्पपक्षैः आयतनिश्चलदलैः गृध्रैर्दाक्षाय्यैः ।

आतापि-चिल्लौ दाक्षाय्य-गृध्रावित्यमरः ।

तैरेव धूमैः ( चिताग्निप्रशमाद्धूमत्वाभावेन गृध्रेषु धूमत्वारोपः ) ध्वस्तस्तिरोहितोऽर्कभासः सूर्यतेजो यासु तास्तथोक्तास्तासां ध्वस्तार्कभासां तिरोहितसूर्यतेजसां दिशामाशानां मण्डलं सां दिशामाशानां मण्डलं चक्रवालं ।

चक्रवालं तु मण्डलमित्यमरः ।

घनेन सहितं सघनं समेघमिव दर्शयन्तः लोकान्प्रत्यवलोकयन्तः कुर्वन्तो वा ( धातूनामनेकार्थत्वाद्दृशेः कृधातुसमानार्थकता ) पितृवनं श्मशानं निलय आवासो येषां ते तथोक्तास्तान् पितृवननिलयान् श्मशानवासिनः एतान् प्राणिनः प्रेतवृकादीन् नन्दैः बहलवसावशिष्टैः आनन्दयन्तः प्रीणयन्तः एते इमे श्मशानभूमौ संदृश्यमाना इत्यर्थः । स्रुतबहलवसावाहिनः कायनिस्सृतहृन्मेदधारिणो हव्यवाहाः चिताग्नयोऽद्यापि सम्प्रत्यपि न निर्वान्ति प्रशाम्यन्ति इति त्वं पश्यावलोकय । प्रचुरलोकक्षयेन चिताग्नेः सुप्रज्वलितत्वादद्यापि न मे नन्दकुलनिर्दहनकोपप्रशान्ति-

चाणक्यः—आः केन ?

राजा—नन्दकुलविद्वेषिणा दैवेन ।

चाणक्यः—दैवमविद्वांसः प्रमाणयन्ति ।

राजा—विद्वांसोऽप्यविकत्थना भवन्ति ।

चाणक्यः—( सक्रोधम् । ) वृषल ! वृषल !! भृत्यमिव मामारोद्धुमिच्छसि ?-

शिखां मोक्तुं बद्धामपि पुनरयं धावति करः,

( भूमौ पादप्रहारं कृत्वा )

प्रतिज्ञामारोढुं पुनरपि चलत्येष चरणः ।

प्रणाशान्नन्दानां प्रशममुपयातं त्वमधुना,

परीतः कालेन ज्वलयसि मम क्रोधदहनम् ॥ २९

---

रिति भावः । अयं वधरूपो विद्रवः । कोपावेशादतीतविषयस्यापि साक्षाद्विषयप्रयोज्यैतदा निर्देशादत्र भाविकालङ्कारः ।

अद्भुतस्य पदार्थस्य भूतस्याथ भविष्यतः ।

यत्प्रत्यक्षायमाणत्वं तद्भाविकमुदाहृतम् ॥

इति दर्पणोक्तलक्षणात् । स च गृध्रेषु धूमत्वारोपणाद् रूपकेण सघनमिवेत्यत्रोत्प्रेक्षणार्थकेवशब्दसत्त्वादुत्प्रेक्षया च संसृष्टः । स्रग्धरावृत्तम् ॥ २८ ॥

**दवमिति** । दैवं भाग्यम् अविद्वांसोऽज्ञानिनो जना इति शेषः । प्रमाणयन्ति कार्यसाधकमभ्युपगच्छन्ति न विद्वांस इत्यर्थः ।

**विद्वांस इति** । विद्वांसो विज्ञा अविकत्थना आत्मप्रशंसिनो न भवन्तीत्यर्थः ।

**सक्रोधमिति** । सक्रोधं यथा तथा ब्रवीतीत्यर्थः । वृषल मौर्य ! माम् भृत्यमिवानुचरमिव आरोढुं तिरस्कर्तुमिच्छसि वाञ्छसि प्रवर्तसे इति यावत् ।

**शिखामिति** । अयमेष मम करो हस्तो बद्धां प्रतिश्रुतिपूरणात्संयतामपि शिखां चूडां पुनर्भूयो मोक्तुं बन्धनात्स्खलयितुं धावति प्रसरति, ( भूमौ पादप्रहरणानन्तरम् ब्रवीति ) एष चरणः पादः पुनरपि भूयोऽपि प्रतिज्ञां प्रतिश्रुतिमारोढुं-कर्तुं चलति गच्छति, नन्दानां नवनन्दानां प्रणाशाद्विनाशात् प्रशमं शान्तिमुपयातं प्राप्तं मम क्रोधो दहन इव क्रोधदहनस्तं क्रोधदहनं कोपानलम् अधुना साम्प्रतं कालेन मृत्युना परीतः प्राप्त इव प्रेरित इव वा ज्वलयसि प्रदीपयसि । नन्दकुलवि-

राजा—( सावेगं स्वगतम् । ) अये ! तत् कथं सत्यमेव कुपित आर्यः ? तथा हि —

संरम्भस्पन्दिपक्ष्मक्षरदमलजलक्षालनक्षामयापि
भ्रूभङ्गोद्भेदधूमं ज्वलितमिव पुनः पिङ्गया नेत्रभासा ।
मन्ये, रुद्रस्य रौद्रं रसमभिनयतस्ताण्डवे संस्मरन्त्या,
संजातोदग्रकम्पं कथमपि धरया धारितः पादघातः ॥ ३० ॥

---

नाशतः प्रशान्तोऽपि मे क्रोधस्त्वद्वचनाकर्णनात्पुनर्वर्द्धित इति भावः । चतुर्थचरणे कालेन परीत इवेति तात्पर्यावधारणाल्लुप्तोपमया प्रतीयमानोत्प्रेक्षया वा संसृष्टः क्रोधे दहनत्वारोपान्निरङ्गरूपकालङ्कारः । ओजो गुणः । वैदर्भी रीतिः । क्रोधात्मकानुभावेन वर्द्धितो वीररसोऽत्र स्थायी । पादद्वये पुनः शब्दसत्वादनवीकृतत्वं दोषः । शिखरिणीवृत्तम् ॥ २९ ॥

सावेगमिति । आवेगेन सहितं सावेगं ससम्भ्रमं यथा तथा स्वगतमनतिस्पष्टं ब्रवीति । अये, चाणक्याज्ञया कार्यानुरोधव्याजेन क्रोधितोऽपि मयाऽसौ कथं कस्माद्यथार्थरूपेण क्रोधितः ।

संरम्भेति । संरम्भेण स्पन्दि संरम्भस्पन्दि तच्च तत्पक्ष्म संरम्भस्पन्दिपक्ष्म तस्मात्क्षरन्ति यान्यमलजलानि स्वच्छपयांसीति संरम्भस्पन्दिपक्ष्मक्षरदमलजलानि तेषां क्षालनेनापसारणेन क्षामा तया संरम्भस्पन्दिपक्ष्मक्षरदमलजलक्षालनक्षामया कोपचलन्नेत्रलोमनिस्सरत्स्वच्छपयोऽपसारणक्षीणयाऽपि पिङ्गया रक्तवर्णया नेत्रभासा नयनकान्त्या कर्त्रिभूतया भ्रुवोर्भङ्गो भ्रूभङ्गो भ्रूभङ्गस्योद्भेदः कोपजन्यविकृतिभ्रूभङ्गोद्भेदः स एव धूमो यत्र तद्यथा स्यात्तथा पुराऽग्रे ज्वलितमिव दीप्तमिव ताण्डवेषु नृत्येषु रौद्रं रसं क्रोधात्मकरसं अभिनयतः दर्शयतो रुद्रस्य शिवस्य स्मरन्त्या ( अध्यगर्थदयेशामिति षष्ठी ) धरया पृथिव्या सञ्जातः समुत्पन्नः उदग्रो विशेषः । कम्पो यत्र तद्यथा स्यात्तथा कथमपि केनापि प्रकारेण पादघातश्चरणप्रहारो धारितोऽवस्था पत इति मन्ये सम्भावयामि । रौद्रताण्डवकारिणो रुद्रस्य पादप्रहार इव चाणक्यपादप्रहारोऽतिक्रूर इति भावः । रौद्ररसोऽत्र वीररसस्याङ्गम् ( उद्वेजनारूपा द्युतिरियम् ) भ्रूभङ्गोद्भेदे धूमत्वारोपणाद्रूपकालंकारः । ज्वलितमिवेत्यत्र रुद्ररौद्रे प्रदीप्तवह्नेरुत्प्रेक्षणादुत्प्रेक्षालंकारः । प्रदीप्तवह्नौ धूमसत्वस्य स्वाभाविकत्वेन रौद्रात्मके रसे वह्नेरुत्प्रेक्षणाद्भ्रूभङ्गोद्भेदे धूमत्वारोपणस्यावश्यम्भावित्वा-

चाणक्यः—( कृतकं कोपं संहृत्य। ) वृषल! वृषल!! अलमुत्तरोत्तरेण? यद्यस्मत्तो वरीयान् राक्षसोऽवगम्यते, तस्मादिदं शस्त्रं तस्मै दीयतामिति। ( शस्त्रमुत्सृज्य उत्थाय च आकाशे लक्ष्यं बद्ध्वा स्वगतम्। ) राक्षस! राक्षस!! एष भवतः कौटिल्यबुद्धिविजिगीषोर्बुद्धेः प्रकर्षः;

चाणक्यतः स्खलितभक्तिमहं सुखेन,
जेष्यामि मौर्य्यमिति सम्प्रति यः प्रयुक्तः।

---

त्तयोरङ्गाङ्गिभावेन संकीर्णत्वात्संकरालंकारः। स च मन्ये स्मरन्त्येत्युभयपदसत्वादुत्प्रेक्षास्मरणालङ्काराभ्यामनुप्राणितः। पाञ्चाली रीतिः। ओजो गुणः। स्रग्धरावृत्तम्॥ ३०॥

कृतकमिति। कृतकमतथ्यं कोपं क्रोधं संहृत्य परित्यज्य ब्रवीतीति शेषः। वृषलेति वीप्सायां द्विरुक्तिः उत्तरोत्तरेण वाग्विन्यासेन अलं व्यर्थम् निर्हेतुकवागाडम्बरो न कर्तव्य इत्यर्थः, यदि राक्षसो नन्दसचिवोऽस्मत्तोऽस्मदपेक्षया वरीयान् ( उरुशब्दादीयसुनि वरादेशे च रूपम् ) श्रेष्ठोऽवगम्यतेऽवबुध्यते त्वयेति शेषः, तस्मादिदमेतत् शस्त्रमायुधं तस्मै राक्षसाय दीयतां प्रत्यर्प्यताम्। शस्त्रमायुधमुत्सृज्य परित्यज्य स्वयञ्चोत्थाय आकाशे नभसि लक्ष्यं बद्ध्वा पुरुषाकारं निश्चित्य स्वगतमनतिस्पष्टं यथा तथा ब्रवीतीति शेषः। राक्षसेति वीप्सायां द्विरुक्तिः। कौटिल्यबुद्धिविजिगीषोः चाणक्यमत्यतिक्रमणाभिलाषिणो भवतस्तव एषोऽसौ बुद्धेर्धियः प्रकर्ष उत्कर्षः।

चाणक्यत इति। हे शठ धूर्त्त! अहं चाणक्यतः कौटिल्यात् स्खलिता त्यक्ता भक्तिः स्नेहो यस्य स स्खलितभक्तिस्तं स्खलितभक्तिं त्यक्तस्नेहं मौर्यं चन्द्रगुप्तं सुखेनाऽक्लेशेन जेष्यामि पराभविष्यामि इत्यतो हेतोः इत्येवं बुद्ध्या वा सम्प्रति अधुना एष सकलः सम्पूर्णो भेदो भवता त्वया प्रयुक्तो विहितः, स एव भेद एव तवैव भवत एव दूषणाय दोषाय मलयकेतोर्भेदायेत्यर्थः। सम्पत्स्यते परिणंस्यति (दूषणाय सम्पत्स्यत इत्यत्र क्लृपि सम्पद्यमाने चेति चतुर्थी ) चाणक्यचन्द्रगुप्तभेदविधायिनी त्वत्प्रयुक्ता नीतिस्तवैवानिष्टविधायिनी भविष्यतीति भावः। ( इदं स्वगुणाविष्करणं विचलनम् ) राक्षसप्रयुक्तव्यापारस्यासाफल्यादनिष्टोत्पत्त्या पद्येऽस्मिन्विषमालंकारो बोध्यः।

भेदः, किलैष भवता सकलः स एव,
सम्पत्स्यते, शठ ! तवैव हि दूषणाय ॥ ३१ ॥

( इति निष्क्रान्तः । )

राजा—आर्य्य ! वैहीनरे ! अद्य प्रभृत्यनादृत्य चाणक्यं चन्द्रगुप्तः स्वयमेव राज्यकार्य्याणि करिष्यतीति गृहीतार्थाः प्रकृतयः क्रियन्ताम् ।

कञ्चुकी—( स्वगतम् ) । कथं निरुपपद एव चाणक्यो नार्य्य चाणक्य इति—हन्त ! सत्यमेव हृतोऽधिकारः—अथवा न खल्वत्र वस्तुनि देवदोषः ।

स दोषः सचिवस्यैव, यदसत् कुरुते नृपः ।

गुणौ क्रिये वा चेत्स्यातां विरुद्धे हेतुकार्ययोः ।
यद्वारब्धस्य वैफल्यमनर्थस्य च सम्भवः ॥
विरूपयोः संघटना या च तद्विषमं मतम् ॥

इति दर्पणोक्तलक्षणात् । प्रसादगुणः । वैदर्भी रीतिः । वसन्ततिलकं वृत्तम् ॥ ३१ ॥

आर्य वैहीनर इति । वैहीनरीति चन्द्रगुप्तकञ्चुकिनाम तस्मिन्नार्यपदप्रयोगो वयोवृद्धत्वात् । अद्य प्रभृति अद्यारभ्य चन्द्रगुप्तः अयम् ( इदमाऽऽत्मनिर्देशः ) चाणक्यं कौटिल्यम् अनादृत्य तिरस्कृत्य स्वयमेव साक्षादेव राज्यकार्याणि प्रकृतिनिग्रहानुग्रहात्मकामात्यकृत्यानि करिष्यति विधास्यति इति एतद्वृत्तं प्रकृतयः प्रजाः गृहीताऽवगतोऽर्थोऽभिप्रायो याभिस्ताः गृहीतार्थाः अवगताभिप्रायाः क्रियन्तां विधीयन्तां त्वयेति शेषः ।

स्वगतमिति । स्वगतं मनोगतं यथा तथा ब्रवीतीत्यर्थः । (क्रियाविशेषणमिदम् ) कथं कुतः निर्नास्त्युपपदं सन्निहितश्रेष्ठत्वबोधकार्यादिपदं यस्य स निरुपपदः चाणक्य इत्युक्त इति शेषः । नार्यचाणक्य इति आर्यचाणक्य इति शब्दो न प्रयुक्त इत्यर्थः । हन्त इति खेदे सत्यमेव अधिकारो राज्यकार्याध्यक्षत्वं हृतः आदत्तो राज्ञा चाणक्यस्येति शेषः । अथवा न खल्वत्र वस्तुनि नैवास्मिन्नधिकारहरणे देवदोषः चन्द्रगुप्तापराधः अस्तीति शेषः ।

स दोष इति । नृपो राजा यत् असत् अयुक्तं कार्यमिति शेषः। सचिवानाद-

याति यन्तुः प्रमादेन गजो व्यालत्ववाच्यताम् ॥ ३२ ॥

राजा—आर्य्य ! किं विचारयसि ?

कञ्चुकी—देव ! न किञ्चिद्विचारयामि, किन्तु एतद्विज्ञापयामि, दिष्ट्या देव इदानीं देवः संवृत्त इति ।

राजा—( आत्मगतम् । ) एवमस्मासु गृह्यमाणेषु स्वकार्य्यसिद्धिकामः सकामो भवत्वार्य्यः । ( प्रकाशम् ) शोणोत्तरे ! अनेन शुष्ककलहेन शिरोवेदना मां बाधते, तच्छयनगृहमादेशय ।

प्रतीहारी । एदु एदु महाराओ ( १ )

राजा । ( आसनादुत्थायात्मगतम् । )

( १ ) एतु एतु महाराजः ।

रादिरूपमित्यर्थः। कुहने विधत्ते स सचिवस्यैव मन्त्रिण एव दोषोऽपराधो न तु नृपस्येत्यर्थः। ( विधेयप्राधान्यात्म इति पुंस्त्वनिर्देशः ) गजो हस्ती यन्तुर्हस्तिपकस्य

यन्ता हस्तिपके सूते इति मेदिनी ।

प्रमादेन अनवधानतया व्यालत्वेन वाच्यता व्यालत्ववाच्यता तां व्यालत्ववाच्यतां दुष्टगजत्वनिन्द्यतां दुष्टतापवादमिति यावत् याति प्राप्नोति ।

व्यालो दुष्टगजे सर्पे श्वापदे मान्यवत्खले । इति मेदिनी ।

असन्मार्गगामिनो नृपस्यामात्येनानिवारणममात्यस्यैव दोषो नतु नृपस्येत्यर्थः । नृपाशिक्षणं गजाशिक्षणमिव अशिक्षितो नृपोऽशिक्षितो गज इवेति वा प्रतिबिम्बनात्पद्यमिदं दृष्टान्तालंकारालंकृतम् । तदुक्तमलंकारसर्वस्वे—

तस्यापि बिम्बप्रतिबिम्बभावतया निर्देशे दृष्टान्तः ।

दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनात् ।

इति दर्पणेऽप्युक्तम् । अनुष्टुप्वृत्तम् ॥ ३२ ॥

देवेति । देव राजन् ! न किञ्चिद्विचारयामि न किमपि चिन्तयामि, किन्तु दिष्ट्या भाग्येन देवो भवान् इदानीं देवः सम्वृत्तः अन्यायत्ततया मुक्तत्वाद्देवपदवाच्यो जात इत्यर्थः । इत्येतद् वृत्तमिति शेषः । विज्ञापयामि निवेदयामि ।

एवमिति । आवयोः कृत्रिमविरोधस्य लोकैस्तथ्यत्वेन गृहीतत्वे सतीत्यर्थः । स्वस्य कार्यं स्वकार्यं तस्य सिद्धिः स्वकार्यसिद्धिस्तां कामयते इति स्वकार्यसिद्धि-

आर्याज्ञयैव मम लङ्घितगौरवस्य
बुद्धिः प्रवेष्टुमवनेर्विवरं प्रवृत्ता।
ये सत्यमेव न गुरून् प्रतिमानयन्ति
तेषां कथं नु हृदयं न भिनत्ति लज्जा ? ॥ ३३ ॥

( इति निष्क्रान्ताः सर्वे । )

इति तृतीयोऽङ्कः ॥ ३ ॥

---

कामः आत्मकृत्यनिष्पत्त्यभिलाषो कामेन सहितः सकामः सफलमनोरथः । शुष्कश्चासौ कलहः शुष्ककलहस्तेन शुष्ककलहेन व्यर्थविवादेन, शिरसो वेदना शिरोवेदना शिरोऽव्यथा बाधते पीडयति । ( इदं सिद्धवद्धाविश्रेयःकथनं प्ररोचना ।

आर्याज्ञयैवेति । आर्यस्य भवत आज्ञया शासनेनैव लङ्घितमतिक्रान्तं गौरवमादरो येन स लङ्घितगौरवस्तस्य लङ्घितगौरवस्य अतिक्रान्तादरस्य मम बुद्धिर्धीः अवनेः पृथिव्याः विवरं बिलं ।

शुषिरं विवरं बिलमित्यमरः

प्रवेष्टुं गन्तुं प्रवृत्ता उद्यता लज्जाधिक्यादिति शेषः । ये जनाः सत्यमेव यथार्थमेव गुरून् पूज्यान् न प्रतिमानयन्ति न सत्कुर्वन्ति नु वितर्के तेषां जनानां हृदयं चित्तं कथं लज्जा व्रीडा ( कर्त्री ) न भिनत्ति न विदारयति अ प तु विदारणमुचितम् । यद्यपि मत्कर्तृकविरोधाचरणे भवदादेश एव हेतुस्तथापि लज्जा मद्बुद्धिं भूबिलं प्रवेशयन्ती हृदयं विदारयतीत्यर्थः । पूज्यानसत्कुर्वतो लज्जा पोडयत्येवेति भावः ( इत्थमत्र नियताप्तिः प्रदर्शिता ) ।

प्रथमचरणे आर्यनिदेशरूपाप्रश्नपूर्वककथितवस्तुनो नान्येत्यन्यनिराकरणात्परिसंख्यालङ्कारः सच गौरवोल्लङ्घने आर्यादेशस्य हेतुभूतस्य पदार्थत्वेनाभिधानात्पदार्थहेतुककाव्यलिङ्गालंकारसंसृष्टः । द्वितीयचरणे बुद्धेर्भूविवरप्रवेशे लङ्घितगौरवत्वस्य हेतुत्वेनोपन्यासात्पदार्थहेतुकं काव्यलिङ्गमलङ्कारः । तृतीयचतुर्थचरणयोः पूज्यानसत्कुर्वतो हृदयं लज्जा न भिनत्ति अपि तु भिनत्त्येवेत्यर्थस्य जातत्वादर्थापत्त्यलङ्कारः ।

# चतुर्थोऽङ्कः ।

( ततः प्रविशत्यध्वगवेशः पुरुषः )

पुरुषः—हीमाणहे ! हीमाणहे !!

जोअणसअं समधिअं को णाम गदागदं इह करेइ ।

अत्थाणगमणगुरुई पहुणो अण्णा जइ ण होइ ॥ १ ॥(१)

---

( १ ) योजनशतं समधिकं को नाम गतागतमिह करोति ।

अस्थानगमनगुरुका प्रभोराज्ञा यदि न भवति ॥

---

प्रश्नादप्रश्नतो वापि कथिताद्वस्तुनो भवेत् ।

तादृगन्यव्यपोहश्चेच्छाब्द अर्थोऽथवा यदि ॥

परिसंख्या—

हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम् ।

दण्डाऽपूपिकयाऽन्यार्थागमोऽर्थापत्तिरिष्यते ।

इति दर्पणोक्तलक्षणत्रयात् । वसन्ततिलकं वृत्तम् ॥ ३३

इति मैथिल-श्रीकनकलालठक्कुरविरचितायां मुद्राराक्षसभावबोधि-

मीव्याख्यायां तृतीयोऽङ्कः ॥ ३ ॥

तत इति । ततस्तदनन्तरं चाणक्य-चन्द्रगुप्तादिनिष्क्रमणानन्तरमित्यर्थः । अध्वानं गच्छतीत्यध्वगः ( अध्वञ्छब्दोपपदाद्गमेर्डप्रत्यये रूपम् ) अध्वगस्य वेष इव वेषो यस्य सोऽध्वगवेषः पथिकाकृतिः ।

अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिक इत्यपि ।

इत्यमरः । पुरुषो राक्षसदूतः प्रविशति रङ्गस्थानमिति शेषः । पथिकवेशधारी राक्षसदूतो रङ्गशालाभ्यन्तरगतो भवतीत्यर्थः ।

दूत-राक्षसयोर्नूनं कथा सम्बादरूपिणी ।

अल्पाऽस्मिन् प्रकरीनाम्नी चतुर्थेऽङ्केऽभिधीयते ॥

हीमाणह इति । आश्चर्यबोधकोऽयं निपातः । अतिशयार्थप्रतिपादनाय द्विरुक्तिः ।

योजनशतमिति । अस्थाने गमनमस्थानगमनम् अस्थानगमनेन गुरुकाऽस्थानगमनगुरुका अनवसरगमनगुर्व्वी अनुल्लङ्घनीया इत्यर्थः । प्रभोः स्वामिनः

ता जाव अमच्चरक्खसस्स ज्जेव गेहं गच्छामि। (परिश्रान्तवत् परिक्रम्य)। भो! को एत्थ दुआरिआणं? णिवेदेह दाव भट्टिणो अमच्चरक्खसस्स, एसो क्खु करहको करहक विअ कज्जं तुवरन्तो पाडलिपुत्तादो आगदो त्ति। (१)

दौवारिकः—(प्रविश्य।) भद्द! मा उच्चं मन्तेहि; एसो अमच्चो भट्टा कज्जचिन्ताजणिदेण जाअरेण समुप्पणसीसवेअणो, अज्ज वि दाव ण

(१) तद्यावदमात्यराक्षसस्यैव गेहं गच्छामि। भोः! कोऽत्र दौवारिकाणाम्? निवेदय तावद् भर्त्तुः अमात्यराक्षसस्य "एष खलु करभकः करभक इव कार्य्यं त्वरयन् पाटलिपुत्रादागतः" इति।

आज्ञा निदेशो यदि न भवति तदा इहाऽस्मिञ्जगति मङ्गतमधिकं यस्मिंस्तत्समधिकं (प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः) इति गतपदलोपः। योजनानां शतं योजनशतं शतयोजनमित्यर्थः। व्याप्य को नाम न कोपीत्यर्थः। गतञ्चागतञ्चानयोः समाहारद्वन्द्वो गतागतं गमनागमनं करोति विदधाति स्वामिनिदेशेनैवेयद्दूरमागतम्मयेति भावः। पद्योत्तरांशप्रतिपाद्यस्यानतिक्रमणीयस्वामिनिदेशस्य पूर्वांशप्रतिपाद्ये योजनशताधिकगमने हेतुत्वात्पद्येऽस्मिन् वाक्यार्थहेतुककाव्यलिङ्गमलङ्कारः।

हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्।

इति दर्पणोक्तलक्षणात्। आर्या छन्दः॥ १॥

कोत्रेऽति। द्वारे नियुक्ता दौवारिकास्तेषां दौवारिकाणां द्वारत्राणनियुक्तानाम् अत्रास्मिन् स्थाने द्वारत्राणे नियुक्तपुरुषाणां मध्ये कः किन्नामधेयो जनस्तिष्ठति। भर्त्तुः स्वामिनोऽमात्यराक्षसस्य राक्षसनाम्नो मन्त्रिणः सम्बन्धे षष्ठी। निवेदय कथय, एषोऽसौ करभकस्तन्नामको दूतः करभक इव करिशावक इव कार्यं कृत्यं त्वरयन् तूर्णं साधयन् पाटलिपुत्रात् एतदाख्यनगरात् आगतः प्राप्तः।

प्रविश्येति। दौवारिको द्वाररक्षणनियुक्तपुरुषः प्रविश्य रङ्गस्थानमागत्य ब्रवीतीत्यर्थः। भद्र! कल्याणशालिन्, शनैर्मन्दं मन्त्रयस्व ब्रूहि तत्र हेतुमाह—कार्यचिन्ताजनितेनेति। कार्याणां कृत्यानां चिन्ता स्मरणं कार्यचिन्ता तया जनित उत्पादितस्तेन कार्यचिन्ताजनितेन कृत्यस्मरणोत्पादितेन जागरणेन निद्राक्षयेन सम्

सअणदलं मुञ्चदि; ता चिट्ठ दाव मुहुत्तअं, जाव से लद्धावसरो भविअ, भवदो आगमणं णिवेदेमि । (१)

पुरुषः—भद्दमुह ! जधा दे रोअदि । ( २ )

( ततः प्रविशति शयनगत आसनगतेन शकटदासेन सह चिन्तितो राक्षसः )।

राक्षसः—( आत्मगतम् )

मम विमृशतः कार्य्यारम्भे विधेरविधेयतां,
सहजकुटिलां कौटिल्यस्य प्रचिन्तयतो मतिम् ।

---

( १ ) भद्र ! मा उच्चैर्मन्त्रय; एष खलु भर्त्ता अमात्यराक्षसः कार्य्यचिन्ताजनितेन जागरणेन समुत्पन्नशीर्षवेदनोऽद्यापि तावत् न शयनतलं मुञ्चति; तस्मात् तिष्ठ तावन्मुहूर्त्तं, यावत् तस्य लब्धावसरो भूत्वा, भवत आगमनं निवेदयामि ।

( २ ) भद्रमुख ! यथा ते रोचते ।

---

त्पन्ना समुद्भूता शीर्षे शिरसि वेदना पीडा यस्य स समुत्पन्नशीर्षवेदनः सञ्जातोत्तमाङ्गपीडः एषोऽसावमात्यो मन्त्री भर्त्ता स्वामी राक्षसः अद्यापि सम्प्रत्यपि शयनतलं शय्यां न मुञ्चति न त्यजति, तत्तस्मात् कारणात् मुहूर्त्तं क्षणमात्रं तिष्ठ विलम्बस्व वर्त्तस्वेति यावत् । यावत् यत्कालपर्य्यन्तं तस्य राक्षसस्य लब्धः प्राप्तोऽवसरोऽवकाशो येन स लब्धावसरः प्राप्तावकाशो भूत्वा आगमनं स्थितिं निवेदयामि विज्ञापयिष्यामि ( भविष्यत्सामीप्ये लट् ) ।

भद्रमुखेति । प्रधानामात्यराक्षसदौवारिकस्येयं संज्ञा । ते तुभ्यं यथा रोचते तथा कुर्वित्यर्थः । ( अत्र 'रुच्यर्थानां प्रीयमाणः' इति सम्प्रदानसंज्ञोत्तरं 'सम्प्रदाने चतुर्थी'ति चतुर्थी । 'ते मयावेकवचनस्ये'ति तुभ्यमित्यस्य स्थाने त आदेशः ) ।

तत इति । ततस्तदनन्तरं भद्रमुखेन करभकागमननिवेदनानन्तरमित्यर्थः । शयनगृहगतः निद्राभवनप्राप्तः आसने तिष्ठतीत्यासनस्थः आसनवर्त्ती सचिन्तश्चिन्तया युक्तो राक्षसस्तदाख्यो मन्त्री शकटदासेन स्वमित्रेण सह प्रविशति रङ्गशालाभ्यन्तरगतो भवतीत्यर्थः ।

ममेति । कार्य्यस्य कृत्यस्यारम्भः प्रक्रमः कार्य्यारम्भस्तस्मिन् कार्य्यारम्भे कृ-

अथ च विहिते मत्कृत्यानां निकाममुपग्रहे,
कथमिदमिहेत्युन्निद्रस्य प्रयान्त्यनिशं निशाः ॥ २ ॥

अपि च—

कार्योपक्षेपमादौ, तनुमपि रचयंस्तस्य विस्तारमिच्छन्
वीजानां गर्भितानां फलमतिगहनं गूढमुद्भेदयंश्च ।

---

त्यप्रक्रमे विधेर्नियत्या भाग्यस्येत्यर्थः। अविधेयताम् अननुकूलतां विमृशतो विचारयतः दैवाधीनं जगत्सर्वं नतु दैवं कस्यापीति विचारयतः, कौटिल्यस्य चाणक्यस्य सहजकुटिलां स्वभावक्रूरां मतिं बुद्धिं प्रचिन्तयतो विचारयतः । अथ च मत्कृत्यानां मम विषकन्याद्यात्मककपटकर्मणाम् उपग्रहे प्रतीकारे निकामं यथेच्छं विहिते कृते सति, इहाऽस्मिन्नुद्यमे इदमस्मदीप्सितं कथं केन प्रकारेण सफलं स्यादिति भावनयेत्यर्थः। उद्गतोच्छिन्ना निद्रा यस्य स उन्निद्रस्तस्योन्निद्रस्य निद्रारहितस्येत्यर्थः। मम निशा रजन्योऽनिशं सततं प्रयान्ति व्यतियन्ति । कार्यस्यानल्पत्वात्तद्भावनयैव जाग्रतो मम सर्वा रजन्यो गच्छन्तीति भावः ।

समुच्चयोऽयमेकस्मिन् सति कार्यस्य साधके ।
खले कपोतिकान्यायात्तत्करः स्यात्परोऽपि चेद्-

इति दर्पणानुक्रान्तलक्षणात्पद्येऽस्मिन् निद्राभावात्मककार्यम्प्रति भाग्याननुकूलत्वविमर्शादिरूपानेकसाधकसत्त्वात्समुच्चयो नामालंकारः । वैदर्भी रीतिः । हरिणीछन्दः ॥ २ ॥

इहातिशयाश्चर्यनयविषयकात्मविरचनश्रमं राक्षसवाक्छलेन कविः ( प्रक्रमते ) सूचयति—कार्योपक्षेपमिति । आदौ प्रथमं तनुमपि अत्यल्पमपि कार्यस्योपक्षेपः कार्योपक्षेपस्तं कार्योपक्षेपं कृत्योपायं रिपुपराभवात्मककृत्यजातसामान्युपायमिति यावत् । रचयन् कुर्वन् तस्य कार्यस्य विस्तारमिच्छन्नभिलषन् गर्भो जात एषामिति गर्भितानि तेषां गर्भितानां गर्भयुक्तानां फलप्रसवोन्मुखानामित्यर्थः । गूढमनभिव्यक्तम् अतिगहनं दुरवगमं यथा तथोद्भेदयन् अभिव्यक्तीकुर्वन् बुद्ध्या मत्या विमर्शं कर्त्तव्यविवेकं कुर्वन् विद्वत् पुनः प्रसृतमपि विस्तृतमपि कार्यजातं कृत्यवर्गं संहरन् सफलीकुर्वन् अस्मद्विधो मादृशोऽमात्यः । ( पक्षान्तरे ) आदौ अभिनेयारम्भे ।

यत्र वीजसमुत्पत्तिर्नानार्थरससम्भवा ।
प्रारम्भेण समायुक्ता तन्मुखं परिकीर्त्तितम् ॥

कुर्वन् बुद्ध्या विमर्षं प्रसृतमपि, पुनः संहरन् कार्य्यजातं,
कर्त्ता वा नाटकानामिममनुभवति क्लेशमस्मद्विधा वा ॥ ३ ॥

इत्युक्तलक्षणे नाटकारम्भ इत्यर्थः, तनुमपि अत्यल्पमपि कार्योपक्षेपम्

काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृतः ।

इत्युक्तलक्षणं प्रस्तावनारूपमित्यर्थः रचयन् प्रणयन् कुर्वन् तस्य बीजस्य विस्तारं प्राकट्यं

समुत्पन्नार्थबाहुल्यं ज्ञेयः परिकरः पुनः ।

इत्युक्तलक्षणं परिकरमित्यर्थः। प्रतिमुखसन्धाविच्छन्नभिलपन् गर्भितां दृष्टनष्टानां बीजानाम्

अल्पमात्रं समुद्दिष्टं बहुधा यद्विसर्पति ।

फलस्य प्रथमो हेतुर्बीजं तदभिधीयते ॥

इत्युक्तलक्षणानां फलप्रधानहेतूनामित्यर्थः। अतिगहनं दुरधिगमं फलं गूढं गुप्तं यथा तथोद्भेदयन्

फलप्रधानोपायस्य प्रागुद्भिन्नस्य किञ्चन ।

गर्भो यत्र समुद्भेदो ह्रासान्वेषणवान् मुहुः ॥

इत्युक्तलक्षणगर्भसन्धौ प्रकटयन्–

यत्र मुख्यफलोपाय उद्भिन्नो गर्भतोऽधिकः ।

शापाद्यैः सान्तरायश्च स विमर्श इति स्मृतः ॥

इत्युक्तलक्षणे विमर्षसन्धौ तस्यैव बीजस्य बुद्ध्या मत्या विमर्षमनुसन्धानं कुर्वन् विदधत् पुनस्तथाप्रसृतं विस्तृतमपि कार्यजातं नाटकीयं वस्तु संहरन्

बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् ।

ऐकार्थ्यमुपनीयन्ते यत्र निर्वहणं हि तत् ॥

इत्युक्तलक्षणे निर्वहणसन्धावुपसंहरन् समापयन् नाटकानां·

नाटकं ख्यातवृत्तं स्यात्पञ्चसन्धिसमन्वितम् ।

इत्युक्तलक्षणानां दृश्यकाव्यानां, रूपकाणां कर्त्ता प्रणेता वा कविरित्यर्थः। इमं वर्णितरूपं क्लेशं दुःखम् अनुभवति अधिगच्छति । शत्रुविजयादिरूपोपायादिविरचने मुखप्रतिमुखगर्भविमर्शोपसंहारेति पञ्चसन्धिसमन्वितनाटकप्रणयने च समुत्प·

तदपि नाम दुरात्मा चाणक्यवटुः,—"
दौवारिकः—( उपसृत्य । ) "जेदु जेदु—" ( १ )
राक्षसः—"अभिसन्धातुं शक्यः स्यात—"

( १ ) जयति जयति,

न्तक्लेशममात्यो नाटकप्रणेता वाऽनुभवति न त्वेतदुभयातिरिक्तस्तृतीय इति भावः। शत्रुविजयोपायविरचनादिरूपस्य प्राकरणिकार्थस्य अभिनेयार्थस्य प्रस्तावनात्मकोपक्षेपप्रणयनादिरूपस्याप्राकरणिकार्थस्य च सत्वाच्छ्लेषालङ्कारः । तदुक्तं साहित्य दर्पणे—

शब्दैः स्वभावादेकार्थैः श्लेषोऽनेकार्थवाचनम् ।

इति । मन्त्रि-नाटककृतोः प्रस्तुताप्रस्तुतयोः ( प्रकृताप्रकृतयोः ) एकक्रियाऽभिसम्बन्धाद्दीपकालङ्कारश्चेत्यनयोरङ्गाङ्गिभावेन साङ्कर्यम् ।

अप्रस्तुतप्रस्तुतयोर्दीपकं तु निगद्यते ।

इति दर्पणोक्तदीपकलक्षणात् । रीतिरत्र वैदर्भी नाम । स्रग्धरावृत्तम् । म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम् ॥ ३ ॥

तदपीति । दुर्दुष्ट आत्मा यस्य स दुरात्मा दुष्टजीवः चाणक्यश्चासौ वटुश्चाणक्यवटुः अल्पबुद्धिश्चाणक्य इत्यर्थः । तदपि तादृशं क्लेशमनुभवन्नपि न दुर्व्यसनाद्विरमतीति वाक्यशेषः । नाम सम्भावनायम् । यद्वा तदपि तथापि अमात्यस्योक्तविधक्लेशानुभावकत्वेऽपीत्यर्थः। दुरात्मा चाणक्यवटुर्नोद्यमं त्यजतीत्यर्थः ।

उपसृत्येति । द्वाररक्षकः उपसृत्य राक्षसान्तिकं गत्वा कथयतीति शेषः। जयति जयतीत्यस्य सर्वोत्कर्षेण वर्ततामित्यर्थः (वीप्सायां द्विरुक्तिः) । इदं तृतीयं पताकास्थानम् । तदुक्तं साहित्यदर्पणे—

अर्थोपक्षेपकं यत्तु लीनं सविनयं भवेत् ।
श्लिष्टप्रत्युत्तरोपेतं तृतीयमिदमुच्यते ॥ इति ॥

अभिसन्धातुमिति । अभिसन्धातुं पराभवितुं प्रतारयितुमित्यर्थः । शक्यः समर्थः ( योग्यः ) स्यात् भवेत् । दुरात्मा चाणक्यवटुस्त्वया मया वा प्रतारयितुं योग्यो भवेत् त्वं दुरात्मानं चाणक्यवटुं प्रतारयितुं समर्थः स्यादिति वा राक्षसोक्तेस्तात्पर्यम् । ( क्वचिदतिसन्धातुमिति पाठः सम्मेलयितुमिति तदर्थः । )

दौवारिकः—"-अमच्चो । ( १ )

राक्षसः— ( वामाक्षिस्पन्दं सूचयित्वात्मगतम् । ) "दुरात्मा चाणक्यबटुर्जयति, अभिसन्धातुं शक्यः स्यादमात्यः" इति वामाक्षिस्पन्दनेन प्रस्तावगतं प्रतिपादयति । तथापि नोद्यमस्त्याज्यः । ( प्रकाशम् ) भद्र ! किमसि वक्तुकामः ?

दौवारिकः—अमच्च ! एसो क्खु करहओ पाडलिपुत्तादो आअदो, इच्छदि अमच्चं पेक्खिदुं । ( २ )

राक्षसः—अवारितं प्रवेशयैनम् ।

दौवारिकः—जं अमच्चो आणवेदि । ( इति निष्क्रम्य पुरुषमुपसृत्य ) भद्द ! एसो क्खु अमच्चो चिट्ठदि, ता उपसप्प णं । ( ३ )

( इति निष्क्रान्तो दौवारिकः । )

---

( १ ) अमात्यः ।

( २ ) अमात्य ! एष खलु करभकः पाटलिपुत्रादागतः, इच्छति अमात्यं प्रेक्षितुम् ।

( ३ ) यदमात्य आज्ञापयति । भद्र ! एष खलु अमात्यस्तिष्ठति, तदुपसर्पैनम् ।

---

अमात्य इति । अमात्यो भवान् दुरात्मानं चाणक्यबटुमभिसन्धातुं शक्यः स्यादिति दौवारिकोक्तेस्तात्पर्यम् । परममात्यमते अमात्यो भवानेव दुरात्मना चाणक्यबटुनाऽन्येन शत्रुणा वा प्रतारयितुं योग्यो भवेदित्यर्थः। सम्पन्नः। अत एव वामाक्षिस्पन्दमित्यादिराक्षसोक्तिः संगच्छते ।

दुरात्मेति । दुरात्मा दुष्टहृदयश्चाणक्यबटुः अल्पमतिः कौटिल्यो जयति सर्वोत्कर्षेण वर्द्धताम् अमात्यो भवान् अभिसन्धातुं प्रतारयितुं शक्यो योग्य इतीत्येवमर्थं, वागीश्वरी वाग्देवता प्रस्तावं प्रकरणं गता प्राप्ता प्रस्तावगता प्रकरणप्राप्ता सती वामाक्षिस्पन्दनेन दक्षिणेतरनेत्रस्फुरणेन प्रतिपादयति अभिदधाति सूचयतीति यावत् । ( चाणक्यकर्तृकराक्षसाऽभिसन्धानात्मककार्यस्य राक्षसेनैवाशुभोपश्रुतिदुःशकुनाभिधानद्वारा संग्रहणादिदं कार्यसंग्रहगमादानं नाम विमर्षसन्धेरन्त्य-

करभकः—( राक्षसमुपसृत्य । ) जेदु जेदु अमच्चो । ( १ )

राक्षसः—( नाट्येनावलोक्य । ) भद्र करभक ! स्वागतम् ? उपविश्यताम् ।

करभकः— जं अमच्चो आणवेदि । ( २ ) (इति भूमावुपविशति ) ।

राक्षसः—( आत्मगतम् । ) अथ कस्मिन् प्रयोजने मयाऽयं प्रणिधिः प्रहित इति प्रभूतत्वात् प्रयोजनानां न खल्ववधारयामि ।

( इति चिन्तां नाटयति )

( ततः प्रविशति वेत्रपाणिरपरः पुरुषः । )

---

( १ ) जयति जयत्यमात्यः ।

( २ ) यदमात्य आज्ञापयति ।

---

मङ्गम् ) । तदुक्तं साहित्यदर्पणे—

कार्यसंग्रह आदानमिति ।

तथापि वागीश्वर्योक्तवचनप्रतिपादनेऽपीत्यर्थः। इयम इयोगो न त्याज्यः न परिहरणीयः । वक्तुं कामयते इति वक्तुकामः वचनप्रतिपादनाभिलापीत्यर्थः ।

लुम्पेदवश्यमः कृत्ये तुंकाममनसोरपि ।

समो वा हिततयो मांसस्य पचि युड्घञोः ।

इति भाष्योक्तकारिकया वक्तुमित्यत्र तुमुनो मकारलोपे वक्तुकाम इति प्रयोग उपपन्नः ।

आत्मगतमिति । ( इदं क्रियाविशेषणम् ) अनतिस्पष्टं यथा तथा ब्रवीतीत्यर्थः । अथ करभकस्योपवेशनानन्तरं ब्रवीतीति क्रियया सम्बन्धः । कस्मिन्प्रयोजने कस्मिन् कार्येऽयं प्रणिधिर्दूतो मया प्रहितः प्रेषितः इति प्रयोजनानां कार्याणां प्रभूतत्वादाधिक्यात् न खल्ववधारयामि नैवावगच्छामीत्यर्थः । राक्षसकरभकान्योन्याभाषणक्षणे भागुरायणनाम्ना चाणक्यप्रणिधिना मलयकेतुं सम्मेलयितुं तयोः प्रवेशावकाशं दातुं राक्षसचिन्तानाटनं कविरुपनिबद्धवानित्यालोकनीयम् । ( राक्षसमुद्दिश्य करभकेणाभिधास्यमानस्य चाणक्यचन्द्रगुप्तमिथोविरोधस्य पूर्वकार्यानुसङ्गतत्वादिदमङ्कावतरणम् ) । तदुक्तं—

यत्र स्यादुत्तराऽङ्कार्थं इत्यादिना—

तत इति । ततस्तदनन्तरं वेत्रः पाणौ यस्य स वेत्रपाणिः वेत्रहस्तः द्वितीय

पुरुषः—ओसलध अज्जा ओसलध ! अवेध, माणहे अवेध, किं ण पेक्खध ?—

दुले पच्चासत्ती दंसणमवि दुल्लहं अधण्णेहिं ।
कल्लाणकुलघराणं देवाणं अ मणुस्सदेवाणं ॥ ४ ॥ ( १ )

( आकाशे ) अज्जा ! किं भणाध, किं णिमित्तं एसा ओसालणा करीअदि ? अज्जा ! एसो क्खु कुमालो मलयकेदू, समुप्पण्णसीसवेअणं अमच्चरक्खसं सुणिअ, पेक्खिदुं इह ज्जेव आअच्छदि । एदिणा काल-

( १ ) अपसरत आर्याः ! अपसरत । अपेत मान्याः ! अपेत । किं न पश्यत ?—

दूरे प्रत्यासत्तिर्दर्शनमपि दुर्लभमधन्यैः ।
कल्याणकुलगृहाणां देवानाञ्च मनुष्यदेवानाम् ॥

पुरुषः प्रविशति रङ्गशालाभ्यन्तरगतो भवतीत्यर्थः ।

**अपसरतेति** । आर्या मान्या । यूयमपसरत अपसरत पलायध्वं पलायध्वम् मान्याः श्रेष्ठाः यूयमपेत अपेत अपगच्छत अपगच्छत किं न पश्यत किं नावलोकयत । राज्ञो मलयकेतोर्गमनशैघ्र्यभ्रमाद्द्विरुक्तिः ।

**दूरे इति** । कल्याणः कुलधरो येषां ते कल्याणकुलधरास्तेषां कल्याणकुलधराणां सुवर्णमयमेरुपर्वतवासिनामित्यर्थः । देवानां सुराणां कल्याणानां कुलं कल्याणकुलं धरन्तीति धराः कल्याणकुलस्य धराः कल्याणकुलधरास्तेषां कल्याणकुलधराणां मङ्गलसमूहभाजिनां मनुष्याणां मनुष्येषु वा देवा देवतुल्या मनुष्यदेवास्तेषां मनुष्यदेवानां राज्ञाञ्च अधन्यैरपुण्यवद्भिः दर्शनमपि साक्षात्कारोऽपि दुर्लभं दुष्प्रापं प्रत्यासत्तिः सामीप्यसम्बन्धस्तु दूरे तिष्ठतु । अपुण्यभाजां देवनृपदर्शनं न सम्भवति निकटस्थायित्वं तु सर्वथैवासम्भवीति युष्माकमपसारणेति भावः । प्राकरणिकस्य नृपस्याऽप्राकरणिकस्य देवस्य चैकक्रियासम्बन्धाद्दीपकालङ्कारालंकृतमिदं पद्यम् ॥ आर्या छन्दसा निबद्धञ्च ॥ ४ ॥

**आकाश इति** । असन्तमप्याकाशस्थपुरुषं लक्षीकृत्य ब्रवीतीत्यर्थः । एतल्लक्षणं यथा साहित्यदर्पणे—

किं ब्रवीषीति यन्नाट्ये विना पात्रं प्रयुज्यते ।

णेण ओसालणा करीअदि । ( १ )

( इति निष्क्रान्तः पुरुषः । )

( ततः प्रविशति भागुरायणेन कञ्चुकिना चाऽनुगम्यमानो मलयकेतुः ) ।

मलयकेतुः—( निःश्वस्यात्मगतम् ) । अद्य दशमो मासस्तातस्योपरतस्य । न चास्माभिर्वृथा पुरुषकारमुद्वहद्भिस्तमुद्दिश्य तोयाञ्जलिरप्यावर्जितः । अथवा, प्रतिज्ञातमेतत् पुरस्तात् ।

वक्षस्ताडनभिन्नरत्नवलयं भ्रष्टोत्तरीयांशुकं
हाहेत्युच्चरितार्तनादकरुणं भूरेणुरूक्षालकम् ।

---

( १ ) आर्याः ! किं निमित्तमेषाऽपसारणा क्रियते ? आर्याः ! एष खलु कुमारो मलयकेतुः समुत्पन्नशीर्षवेदनममात्यराक्षसं श्रुत्वा प्रेक्षितुमिहैवागच्छति । एतेन कारणेनापसारणा क्रियते ।

---

श्रुत्वैवाऽनुक्तमप्यर्थं तत्स्यादाकाशभाषितम् ॥

इति । आर्या मन्याः किं भणथ किं ब्रूथ, किं निमित्तमपसारणा क्रियते कस्मात्कारणात् वर्त्ममध्यवर्तिनां पुरुषाणां तदेकपार्श्ववर्तित्वकरणं विधीयते ? आर्या एषोऽसौ कुमारः शिशुः मलयकेतुस्तदाख्यः पर्वतकपुत्रः समुत्पन्ना संजाता शीर्षे शिरसि वेदना पीडा यस्य स समुत्पन्नशीर्षवेदनस्तं समुत्पन्नशीर्षवेदनं सञ्जातशिरोव्यथममात्यराक्षसं प्रेक्षितुं द्रष्टुमित एवात्रैवागच्छति आयाति । एतेन कारणेन अमुना हेतुनाऽपसारणा क्रियते युष्माकं वर्त्मैकपार्श्ववर्तित्वं विधीयते ।

अद्येति । उपरतस्य मृतस्य तातस्य पितुः अद्य दशानां पूरणो दशमो मासोऽस्तीति शेषः । वृथा निष्फलं पुरुषकारं पुरुषाऽभिमानं पुरुषोऽस्मीत्येवं रूपमित्यर्थः । उद्वहद्भिः धारयद्भिः तं मृततातमुद्दिश्योपलक्ष्य तोयस्याञ्जलिरपि न आवर्जिता न दत्तः । अथवा किम्वा एतद्वक्ष्यमाणं पुरस्तात्पूर्वं प्रतिज्ञातम् प्रतिश्रुतम् ।

वक्ष इति । मया आत्मना माता एव जनो मातृजनस्तस्य मातृजनस्य शोकेन जनितं शोकजनितं चिन्तासमुत्पन्नं, वक्षसि वा वक्षसस्ताडनं वक्षस्ताडनं तेन भिन्नानि रत्नवलयानि यस्मिन्तद्वक्षस्ताडनभिन्नरत्नवलयं हृदयाघातभग्नरत्ननिर्मितकटकं भ्रष्टं स्वस्थानाच्च्युतमुत्तरीयांशुकमुत्तरीयवस्त्रं यस्मिन् तद्भ्रष्टोत्तरीयांशुकं, हा हेत्युच्चरितार्त्तनादस्तेन करुणं दीनं हाहेत्युच्चरितार्त्तनादकरुणं हाहेति निस्सृता-

तादृङ्मातृजनस्य शोकजनितं सम्प्रत्यवस्थान्तरं,
शत्रुस्त्रीषु मया विधाय गुरवे देयो निवापाञ्जलिः ॥ ५ ॥

तत् किमिह बहुना ?—

उद्यच्छता धुरमकापुरुषानुरूपां
गन्तव्यमाजिविहितेन पितुः पथा वा ।
आच्छिद्य वा स्वजननीजनलोचनेभ्यो
नेयो मया रिपुवधूनयनानि बाष्पः ॥ ६ ॥

---

र्तस्वरदीनं, भुवो रेणवो भूरेणवस्ताभी रूक्षा अस्निग्धा अलकाश्चूर्णकुन्तला यस्मिन्तत् भूरेणुरूक्षालकं भूमिरजोऽस्निग्धचूर्णकुन्तलम् ।

अलकाश्चूर्णकुन्तला इत्यमरः ।

तादृक् तादृशम् अवस्थान्तरं दशान्तरं सम्प्रति इदानीं शत्रुस्त्रीषु रिपुवधूषु विधाय कृत्वा गुरवे पित्रे निवापाञ्जलिस्तोयाञ्जलिः श्राद्धतर्पणमित्यर्थः । देयः समर्पणीयः ।

पितृदानं निवापः स्यादित्यमरः ।

यथा शत्रुभिर्मम मातृषु शोचनीया दशा प्रापिता तथैव मयापि शत्रुस्त्रीषु शोचनीया दशा प्रापयिष्यते इति भावः । मातृजनेषु शत्रुकृतावस्थान्तरस्य शत्रुस्त्रीषु सम्बन्धासम्भवादन्यदवस्थान्तरस्य सम्बन्धादसम्भवद्वस्तुसम्बन्धरूपनिदर्शनालंकारः । तदुक्तम्—

सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित् ।
यत्र बिम्बानुबिम्बत्वं बोधयेत् सा निदर्शना ॥

शत्रुभिर्मातृजनेष्विव मयापि शत्रुस्त्रीषु दण्डः पातनीय इति समविनिमयरूपपरिवृत्तिरलंकार इति कश्चित् ॥ शार्दूलविक्रीडितं वृत्तम् ॥ ५ ॥

उद्यच्छतेति । मया कुत्सितः पुरुषः कापुरुषो न कापुरुषोऽकापुरुषः अनुगतं रूपं यस्याः साऽनुरूपा अकापुरुषस्यानुरूपाऽकापुरुषाऽनुरूपा तामकापुरुषानुरूपाम् अनिन्दितपुरुषयोग्यां वीरपुरुषोचितामित्यर्थः। धुरं भारम् उद्यच्छता उद्वहता सता, (उद्यच्छतेत्यत्र 'समुदाङ्भ्यो यमोऽग्रन्थे' इत्यात्मनेपदस्य दुर्वारत्वेऽपि परस्मैपदं प्रयोक्तुः कवेरयमभिप्रायः 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' इत्यतः कर्त्रभिप्राये इत्यनुव-

(प्रकाशम्।) आर्य जाजले! उच्यन्तामस्मद्वचनादनुयायि राजानः एक एवाहममात्यराक्षसस्यातर्कितागमनेन प्रीतिमुत्पादयि मिच्छामि, अतः कृतमनुगमनक्लेशेनेति।

कञ्चुकी—यदाज्ञापयति कुमारः। (परिक्रम्याकाशे।) भो भो रा नः कुमारः समाज्ञापयति, न खल्वहं केनचिदनुगन्तव्यः इति। (वि क्य सहर्षम्।) कुमार! कुमार! एते भवदाज्ञासमनन्तरमेव प्रतिनि त्ताः सर्व एव राजानः। पश्यतु कुमारः—

सोत्सेधैः स्कन्धदेशैः खरतरकविकाकर्षणात्यर्थभुग्नैः
अश्वाः कैश्चिन्निरुद्धाः खमिव खुरपुटैः खण्डयन्तः पुरस्तात्

---

तेनात्स्वजननीजनलोचनवाष्पानयनरूपस्यात्मपौरुषोद्योगक्रियाफलस्य शत्रुस्त्रीलो नगामित्वाभिप्रायेण परस्मैपदं सुरूममिति) अजन्त्यस्यामित्याजिः (अज्यो स्यामिति अजे णिप्रत्यये रूपम्) आजौ निधनमाजिनिधनं तेन आजिनिधने संग्रामविनाशेन वा अथवा पितुस्तातस्य पथा मार्गेण मरणरूपेणेत्यर्थः। गन्तव्यं य तव्यम् वा अथवा स्वस्य जननीजनाः स्वजननीजनास्तेषां लोचनानि स्वजननीज लोचनानि तेभ्यः स्वजननीजनलोचनेभ्यः आत्ममातृजननेत्रेभ्यः आच्छिद्य अपनी बाष्पो नेत्रजलं रिपुवधूनयनानि शत्रुस्त्रीनेत्राणि नेयः प्रापणीयः। वीरपुरुष संग्रामे प्राणं त्यक्ष्यामि तत्रारीन्विजित्य मातृजनखेदमपहरिष्यामि वेति भावः।

विकल्पस्तुल्यबलयोर्विरोधश्चातुरीयुतः।

इति दर्पणोक्तलक्षणादत्र विकल्पोऽलङ्कारः। तथा हि—मया मृतस्तातोऽनु न्तव्यः शत्रुस्त्रीनेत्राणि वाष्पो नेय इति तुल्यबलयोर्विरोधस्य सत्त्वात्। वसन्ततिलकं वृत्तम्॥ ६॥

उच्यन्तामिति। अस्मद्वचनान्मदुक्त्या अनुयायिनोऽनुगमनशीला राजा नृपा उच्यन्तामभिधीयन्ताम्, एकोऽद्वितीय एवाहम् अतर्कितगमनेन सहसोपस्थि त्या अमात्यराक्षसस्य मन्त्रिराक्षसस्य प्रीतिं सुखम् उत्पादयितुं जनयितुम् इच्छामि अभिलषामि। तत्तस्मादनुगमनक्लेशेनाऽनुसरणप्रयासेन कृतं व्यर्थम्।

सोत्सेधैरिति। खरतराणि कविकाः खरतरकविकाः खरतरकविकानामाक र्षणं तेनात्यर्थमतिशयं भुग्नैः कुटिलैः खरतरकविकाकर्षणात्यर्थभुग्नैः अतितीक्ष्ण

केचिन्मातङ्गमुख्यैर्विहतजवतया मूकघण्टैर्निवृत्ताः,
मर्य्यादां भूमिपाला जलधय इव ते देव ! नोल्लङ्घयन्ति ॥ ७ ॥

मलयकेतुः—आर्य्यजाजले ! त्वमपि सपरिजनो निवर्तस्व । भागुरायण एको मामनुगच्छतु ।

कञ्चुकी—यदाज्ञापयति कुमारः ।

( इति सपरिजनो निष्क्रान्तः ) ।

मलयकेतुः—सखे भागुरायण ! विज्ञापितोऽहमिहागच्छद्भिर्भद्रभटप्रभृतिभिः, यथा न वयममात्यराक्षसद्वारेण कुमारमाश्रयणीयमाश्रया-

---

लीनाकर्षणातिशयवक्रैः ।

कविका तु खलीनोऽस्त्रीत्यमरः ।

अत एव सोत्सेधैः मध्यभागोन्नतैः स्कन्धदेशैः ग्रीवाप्रदेशैः उपलक्षिताः तथा खुरपुटैः शफाग्रभागैः ।

शफं क्लीबे खुरः पुमानित्यमरः ।

पुरस्तादग्रे खमाकाशं खण्डयन्तो विदारयन्त इव अश्वाः कैश्चिद्भूपालैः निरुद्धा अवरुद्धाः । केचिद्भूपालाः विहतजवतया निरुद्धवेगतया मूका घण्टा येषां ते मूकघण्टास्तैः मूकघण्टैः निश्शब्दघण्टैः मातङ्गमुख्यैः करिवर्यैः सह निवृत्ता इति शेषः अतः हे देव ! भूमिपाला राजानः जलधय इव समुद्रा इव ते तव मर्यादामाज्ञां समुद्रपक्षे वेलां नोल्लङ्घयन्ति नातिक्रामन्ति । समुद्रवेलामिव नृपास्त्वदाज्ञां नातिक्रामन्ति किन्तु त्वदायत्ता एव सर्वेऽपीति भावः । अश्वमातङ्गानां स्वभाववर्णनादिह स्वभावोक्तिरलंकारः । तदुक्तम् ।

स्वभावोक्तिर्दुरूहार्थस्वक्रियारूपवर्णनम् ।

इति । स च खमिव जलधय इवेत्यत्रोत्प्रेक्षोपमानवाचकेवशब्दसत्त्वादुत्प्रेक्षोपमाभ्यां संसृष्टः । स्रग्धरावृत्तम् ॥ ७ ॥

त्वमपीति । त्वं परिजनैः सहितः सपरिजनः सहानुचरवर्गैः निवर्तस्व प्रतिनिवृत्तो भव । एकोऽसहायोऽद्वितीय इति यावत् भागुरायणस्तन्नामा पुरुषो मामनुगच्छतु अनुसरतु ।

विज्ञापित इति । इहात्रागच्छद्भिः सम्प्राप्तैः भद्रभटप्रभृतिभिः भद्रभटादिभिः अहं विज्ञापितो निवेदितोऽस्मीति शेषः । किं निवेदितोऽस्मि तदाह-तथेति ।

महे, किन्तु कुमारस्य सेनापतिं शिखरसेनं द्वारीकृत्य, दुष्टामात्यपरि-
गृहीतात् चन्द्रगुप्तादपरक्ताः सन्तः कुमारमाभिरामिकगुणयोगाश्रयणी-
यमाश्रयामह इति, तन्मया सुचिरमपि विचारयता तेषां वाक्यार्थो
ऽधिगतः।

भागुरायणः—कुमार! नायमत्यन्तदुर्बोधोऽर्थः। पश्य, विजिगीषुमा-
त्मगुणसम्पन्नं प्रियहितद्वारेणाश्रयणीयमाश्रयेदिति ननु न्याय्य एवार्थः।

मलयकेतुः—सखे भागुरायण! नायस्माकममात्यराक्षसः प्रियहि-
ततमश्च।

भागुरायणः—कुमार! एवमेतत्, किन्तु अमात्यराक्षसश्चाणक्ये ब-
द्धवैरो न तु चन्द्रगुप्ते, तद्यदि कदाचिच्चन्द्रगुप्तश्चाणक्यमतिजितक-

---

यथा यत् वयम् अमात्यराक्षसद्वारेण मन्त्रिराक्षसद्वारा आश्रयणीयं सेवनीयं कुमारं
मलयकेतुं नाश्रयामहे न सेवामहे किन्तु किञ्च कुमारस्य मलयकेतोः सेनापतिं चमू-
नायकं शिखरकं तन्नामानम् ऊरीकृत्याश्रित्य दुष्टश्चासावमात्यो दुष्टामात्यस्तेन परि-
गृहीतस्तस्मात् दुष्टामात्यपरिगृहीतात् दुश्चरितमन्त्रिवशीकृतात् दुष्टामात्येति विशे-
षणं राक्षसस्य दुष्टत्वसूचनायेति बोध्यम्। चन्द्रगुप्तान्मौर्यात् अपरक्ताः सन्तो वि-
रक्ताः भवन्तः, आभिरामिकश्चासौ गुण आभिरामिकगुणस्तस्य योगः सम्बन्धस्त-
स्मात् आभिरामिकगुणयोगात् प्रशस्तगुणभूषितत्वात् ( चन्द्रगुप्तस्य दुष्टत्वसूचना-
याभिरामिकगुणेति विशेषणम् ) आश्रयणीयं सेवनीयमाश्रयामहे सेवामहे इति यत्ते-
रहं विज्ञापितस्तत् सुचिरमपि सुदीर्घकालमपि विचारयता विचिन्तयता मया तेषां
भद्रभटप्रभृतीनां वाक्यार्थो वाक्याभिप्रायो नाधिगतो न ज्ञात इत्यर्थः। एतदग्रे भा-
गुरायणस्य मलयकेत्वतिसन्धानवचनं सर्वं बीजार्थस्यावमर्शनम्।

नायमिति। अयं वाक्यार्थो नात्यन्तदुर्बोधो नातिशयक्लिष्टः। अनायासेन
ज्ञातुं योग्य इत्यर्थः। विजेतुमिच्छुर्विजिगीषुस्तं विजिगीषुं विजयाभिलाषिणम्
आत्मनो गुणा आत्मगुणास्तैः सम्पन्नः आत्मगुणसम्पन्नस्तम् आत्मगुणसम्पन्नं सत्वो-
त्साहादिगुणशालिनम् आश्रयणीयं सेवनीयं प्रियश्चासौ हितः प्रियहितः स एव द्वा-
रमुपायस्तेन प्रियहितद्वारेण प्रियजनोपायेन आश्रयेत् सेवेत इति अयं वाक्यार्थो
न्याय्य एव न्यायादनपेतो युक्त इत्यर्थः।

किन्त्विति। किञ्चेत्यर्थः। अमात्यराक्षसः चाणक्ये कौटिल्ये बद्धं वैरं येन स

शिनमसहमानः साचिव्यादवरोपयेत्, ततो नन्दकुलभक्त्या नन्दान्वय एवायमिति कृत्वा, सुहृज्जनापेक्षया च, अमात्यराक्षसश्चन्द्रगुप्तेन सह सन्दधीत । चन्द्रगुप्तोऽपि पितृपारम्पर्यागत एवायमिति कृत्वा, सन्धिमनुमन्येत। एवं सत्यस्मास्वपि कुमारो न विश्वसेदित्ययमेषां वाक्यार्थः।

मलयकेतुः—युज्यते । सखे भागुरायण ! अमात्यराक्षसस्य गृहमार्गमादेशय ।

भागुरायणः—इत इतः कुमारः । ( इत्युभौ परिक्रामतः । ) कुमार ! इदममात्यराक्षसस्य गृहं, प्रविशतु कुमारः ।

मलयकेतुः—एष प्रविशामि ( इत्युभौ प्रवेशनं नाटयतः । )

राक्षसः—( आत्मगतम् । ) आः स्मृतम् । ( प्रकाशम् ) । भद्र ! अपि दृष्टस्त्वया कुसुमपुरे वैतानिकः स्तनकलशः ।

करभकः—अमच्च ! अध इं । ( १ )

मलयकेतुः—सखे ! भागुरायण ! कुसुमपुरवृत्तान्तः प्रस्तूयते तन्नो-

---

( १ ) अमात्य ! अथ किम् ।

---

बद्धवैरः धृतविद्वेषः न तु चन्द्रगुप्ते मौर्ये बद्धवैर इति शेषः । तत्तस्मात् यदि कदाचित् चन्द्रगुप्तो मौर्यः अतिजितेनातिजयेन काशते तच्छीलोऽतिजितकाशी तमतिजितकाशिनम् अनल्पमदशालिनं चाणक्यं कौटिल्यमसहमानः अमृष्यमाणः साचिव्यात् मन्त्रिस्थानात् अवरोपयेत् च्यावयेत् , ततस्तदा नन्दकुलभक्त्या नन्दान्वयप्रेम्णा अयं चन्द्रगुप्तो नन्दान्वयो नन्दवंश्य एवेति कृत्वेति विचार्य सुहृज्जनापेक्षया चन्दनदासशकटदासप्रभृतिमित्रजनानुरोधेन च, प्राणत्राणलिप्सयेत्यर्थः । अमात्यराक्षसो चन्द्रगुप्तेन मौर्येण सह सन्दधीत सन्धिं कुर्यात । चन्द्रगुप्तोऽपि मौर्योऽपि पितृभ्यः सकाशात्पर्यायेण क्रमेणागतः प्राप्तः पितृपर्यायागतः पितृक्रमप्राप्त एवायं राक्षस इति कृत्वा इति विचार्य्य सन्धिं सम्मेलनम् अनुमन्येत स्वीकुर्वीत । एवं सति सम्मेलने सतीत्यर्थः । कुमारो मलयकेतुः अस्मासु न विश्वसेत् श्रद्दधीत इतीत्येवमेषां भद्रभटादीनामयमेव वाक्यार्थस्तात्पर्यम् ।

कुसुमपुरेति । कुसुमपुरस्य वृत्तान्तः कुसुमपुरवृत्तान्तः कुसुमपुरोदन्त

पसर्पावः शृणुवस्तावत्,—

सत्वभङ्गभयाद्राज्ञां कथयन्त्यन्यथा पुरः ।
अन्यथा विवृतार्थेषु स्वैरालापेषु मन्त्रिणः ॥ ८ ॥

भागुरायणः—यदाज्ञापयति कुमारः ।

राक्षसः—भद्र ! अपि तत् कार्यं सिद्धम् ?

करभकः—अमच्चस्स प्पसाएण सिद्धम् । ( १ )

मलयकेतुः—सखे भागुरायण ! किं तत् कार्यम् ?

भागुरायणः—कुमार ! गहनः खलु सचिववृत्तान्तो नैतावता परिच्छेतुं शक्यते । अवहितस्तावच्छृणु ।

राक्षसः—भद्र ! विस्तरेण श्रोतुमिच्छामि ।

करभकः—सुणादु अमच्चो, अत्थि दाव अहं अमच्चेणाणत्तो, जधा,—"करभअ ! कुसुमपुरे गच्छिअ, भणिदव्वो मम वअणेण तुए वैआलिओ त्थणकलसो, जधा, चाणक्यहदएण तेसुं तेसुं अणाभङ्गेसुं अणुचि-

( १ ) अमात्यस्य प्रसादेन सिद्धम् ।

इत्यर्थः । प्रस्तूयते विधीयते तत्तस्मात् नोपसर्पावः न सन्निधिं गच्छावः ।

सत्वभंगेति । मन्त्रिणोऽमात्याः अन्यथाऽन्यप्रकारेण विवृतः प्रकटीकृतोऽर्थस्तात्पर्यं येषां ते तथोक्तास्तेषु प्रकटीकृताऽभिप्रायेषु स्वैरालापेषु स्वच्छन्दभाषणेषु स्वैरात्मीयैः सह भाषणेषु वा सत्वभङ्गभयात् मनोभङ्गभीत्या मन्त्रितार्थप्रकाशभीत्या वा राज्ञां नृपाणामपि पुरोग्रेऽन्यथा प्रकारान्तरेण कथयन्ति भाषन्ते । सचिवाः विचारितकार्यप्रकाशभयेन सहृदयेषु यथा विश्वसन्ति न तथात्मप्रभुषु राजस्वपीति भावः । सहृदयेषु यथार्थभाषिणां मन्त्रिणामवनीशेष्वयथार्थभाषणे सत्वभङ्गभयरूपपदार्थस्य हेतुत्वेन पदार्थहेतुकं काव्यलिङ्गमलंकारः । तदुक्तं दर्पणे—

हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम् ।

अनुष्टुप् छन्दः ॥ ८ ॥

गहन इति । सचिवस्य वृत्तान्तः सचिववृत्तान्तः अमात्योदन्तः गहनः क्लिष्टः, अतिदुर्बोध इत्यर्थः, एतावताऽल्पकालेन परिच्छेत्तुं बोद्धुं निर्णेतुं वा न शक्यते । अतोऽवहितः सावधानो भूत्वा आकर्णय अमात्यराक्षसालापमिति शेषः ।

ट्ठीअमाणेसुं, चन्दउत्तो समुत्तेअणसमत्थेहिं सिलोएहिं उवसिलोअइ-दव्वो" त्ति । ( १ )

राक्षसः—ततस्ततः ?

करभकः—तदो मए पाडलिउत्तं गच्छिअ, सुणाविदो अमच्चसन्देसं वेआलिओ त्थणकलसो । ( २ )

राक्षसः—ततस्ततः ?

करभकः—एत्थन्तरे णन्दकुलविणासदुम्मणस्स पोरजणस्स परिओसं समुप्पाअन्तेण चन्दउत्तेण आघोसिदो कुसुमउरे कौमुदीमहोसवो । सोवि चिरआलपवत्तमाणो जणिदपरिओसो अहिमदबन्धुज-

( १ ) शृणोत्वमात्यः, अस्ति तावदहममात्येनाज्ञप्तो यथा,—"करभक! कुसुमपुरं गत्वा मम वचनेन त्वया भणितव्यो वैतालिकः स्तनकलशः, यथा चाणक्यहतकेन तेषु तेषु आज्ञाभङ्गेषु अनुष्ठीयमानेषु, चन्द्रगुप्तः समुत्तेजनसमर्थैः श्लोकैरुपश्लोकयितव्यः" इति ।

(२) ततो मया पाटलिपुत्रं गत्वा, श्रावितोऽमात्यस्य सन्देशं वैतालिकः स्तनकलशः ।

शृणोत्विति । यथा यत् चाणक्यहतकेन दुष्टेन कौटिल्येन तेषु पूर्वोक्तेषु आज्ञाभङ्गेषु अनुशासनापालनेषु अनुष्ठीयमानेषु क्रियमाणेषु सत्सु चन्द्रगुप्तो मौर्यः समुत्तेजने समर्थाः समुत्तेजनसमर्थास्तैः समुत्तेजनसमर्थैः क्रोधोत्पादनशक्तैः श्लोकैः पद्यैः उपश्लोकयितव्यः स्तोतव्यः ।

अत्रान्तर इति । वैतालिकेनाऽमात्यस्य सन्देशश्रवणान्तर इत्यर्थः । नन्दानां कुलानि नन्दकुलानि तेषां विनाशो नन्दकुलविनाशस्तेन दुर्दुष्टं दुःखयुक्तमित्यर्थः, मनो यस्य स नन्दकुलविनाशदुर्मनास्तस्य नन्दकुलविनाशदुर्मनसः नन्दान्वयक्षयदुर्हृदयस्य पुरे भवः पौरः स चासौ जनः पौरजनस्तस्य पौरजनस्य पुरवासिनः परितोषं संतोषं समुत्पादयता जनयता चन्द्रगुप्तेन मौर्येण कुसुमपुरे कौमुदीमहोत्सवः शारदपूर्णचन्द्रोद्देश्यकव्रतविशेषः । सोऽपि कौमुदीमहोत्सवोऽपि चिरकालप्रवर्तमानः बहुकालं व्याप्य जायमानः जनितः परितोषो येन स जनितपरितोषः समुत्पादितानन्दः अभिमतो बन्धुजनसमागमो यस्मिन् सोऽभिमतबन्धुजनसमागमः ईप्सितबन्धुजनसमागम इव

णसमागमो विअ, ससिणेहं बहुमाणिदो णअरजणेण । ( १ )

राक्षसः—( सबाष्पम् । ) हा देव ! नन्द !—

कौमुदी कुसुमानन्दे जगदानन्दहेतुना ।
कीदृशी सति चन्द्रेऽपि नृपचन्द्र ! त्वया विना ॥ ९ ॥

---

( १ ) अत्रान्तरे नन्दकुलविनाशदुर्मनसः पौरजनस्य परितोषं समुत्पादयता चन्द्रगुप्तेनाघोषितः कुसुमपुरे कौमुदीमहोत्सवः । सोऽपि चिरकालप्रवर्त्तमानो जनितपरितोषः, अभिमतबन्धुजनसमागम इव, सस्नेहं बहुमानितो नगरजनेन ।

---

सस्नेहं सानुरागं यथा तथा नगरजनेन पुरवासिना बहुमानितः अतिसत्कृतः ।

कौमुदीति । नृपश्चन्द्र इव नृपचन्द्रस्तत्सम्बुद्धौ हे नृपचन्द्र हे क्षितीशवर्य ! ( चन्द्रस्येव नृपस्य लोकानन्दजनकत्वाच्चन्द्रस्योपमानता ) जगत आनन्दस्तस्य हेतुस्तेन जगदानन्दहेतुना पृथिवीहर्षोत्पादकेन त्वया भवता विना कुमुदान्यानन्दयति प्रकाशकत्वाद्धर्षयतीति कुमुदानन्दस्तस्मिन् कुमुदानन्दस्तस्मिन् कुमुदानन्दे कुवलयप्रीतिजनके यद्वा कोमुत्कुमुत्तमानन्दयति वर्द्धयतीति कुमुदानन्दे अवनिहर्षवर्द्धके चन्द्रे चन्द्रमसि पक्षान्तरे कुत्सिता मुद्येषां ते कुमुदस्तानानन्दयति रञ्जयतीति कुमुदानन्दस्तस्मिन् कुमुदानन्दे अप्रशस्तहर्षशालिजनरञ्जके चन्द्रे चन्द्रगुप्ते च सत्यपि कौमुदी ज्योत्स्ना पक्षान्तरे कौमुदीमहोत्सवश्च कीदृशी किंविधा निष्फलेत्यर्थः । इन्दु-मौर्ययोः सत्वेऽपि त्वामन्तरा ज्योत्स्ना-कौमुदीमहोत्सवौ नैव शोभेते इति भावः ।

विनोक्तिर्यद् विनाऽन्येन न साध्वन्यदसाधु या ।

यद्यन्यमन्तराऽन्यस्य नासाधुत्वमसाधुत्वम्वा तदा विनोक्तिरिति कारिकार्थः । प्रकृते त्वामन्तरा विधु-मौर्योभयसत्वेऽपि कौमुद्या अशोभनत्वाद्विनोक्तिरलङ्कारः । स च चन्द्रे सत्यपि त्वया विना कौमुदी व्यर्थेत्युक्त्योपमानभूताच्चन्द्रादुपमेयस्य त्वम्पदार्थस्याधिक्यप्रतिपादनाद्व्यतिरेकालङ्कारेण सङ्कीर्णः ।

उपमानाद्यदन्यस्य व्यतिरेकः स एव सः

इति प्रकाशोक्तव्यतिरेकलक्षणात् । चन्द्र-कौमुदी-कुमुदानन्दशब्दानामनेकार्थत्वेन श्लेषालङ्कारेणाऽनुप्राणितश्च । अनुष्टुप् वृत्तम् ॥ ९ ॥

भद्र ! ततस्ततः ?

करभकः—अमच्च ! तदो सो लोअलोअणाणन्दभूदो अणिच्छन्तस्स ज्जेव णाअरजणस्स णिवारिदो चाणक्कहदकेण कौमुदीमहोस्सवो । एत्थन्तरे त्थणकलसेण पउत्ता चन्दउत्तस्स समुत्तेअणसमत्था सिलोअपरिबाटी । ( १ )

राक्षसः—कीदृशी सा ?

करभकः—( "सत्वोत्कर्षस्य" इत्यादि पूर्वोक्तं पठति ) ।

राक्षसः—( सहर्षम् ) साधु सखे स्तनकलश ! साधु । काले भेदबीजमुप्तम्, अवश्यमेव फलमुपदर्शयिष्यति । यतः,—

सद्यः क्रीडारसच्छेदं प्राकृतोऽपि न मर्षयेत् ।
किमु लोकाधिकं धाम बिभ्राणः पृथिवीपतिः ॥ १० ॥

मलयकेतुः—एवमेतत् ।

राक्षसः—ततस्ततः ?

---

( १ ) अमात्य ! ततः स लोकलोचनानन्दभूतोऽनिच्छत एव नगरजनस्य निवारितश्चाणक्यहतकेन कौमुदीमहोत्सवः । अत्रान्तरे स्तनकलशेन प्रवर्त्तिता चन्द्रगुप्तस्य समुत्तेजनसमर्था श्लोकपरिपाटी ।

---

तत इति । ततस्तदनन्तरं पौरजननाकोत्सवस्यातिसम्मानानन्तरमित्यर्थः, लोकानां लोचनानि लोकलोचनानि तेषामानन्दभूतो लोकलोचनानन्दभूतो मनुजनयनसुखप्रदः स कौमुदीमहोत्सवः अनिच्छतोऽनभिलषतस्तस्य चन्द्रगुप्तस्य कौमुदीमहोत्सवप्रतिषेधमनभिलषन्तं चन्द्रगुप्तमनादृत्येत्यर्थः ( षष्ठी चानादरे इति षष्ठी ) चाणक्यहतकेन दुष्टेन कौटिल्येन निवारितः प्रतिषिद्धः । अत्रान्तरे एतन्मध्ये स्तनकलशेन तन्नाम्ना राक्षसदूतेन चन्द्रगुप्तस्य समुत्तेजिका मौर्योद्दीपनकरी श्लोकस्य परिपाटी श्लोकपरिपाटी पद्यरचनापद्धतिः प्रवर्तिता कृता ।

सद्य इति । प्राकृतोऽपि पामरोऽपि जनः

प्राकृतः पामरो नीच इत्यमरः ।

सद्यः हेतुमन्तरा क्रीडायां रसः क्रीडारसस्तस्य छेदो भङ्गस्तं क्रीडारसच्छेदं क्रीडास्वादभङ्गं न मर्षयेत् न सहेत, लोकेभ्योऽधिकं लोकाधिकं लोकोत्तरमलौकिकमित्यर्थः । धाम तेजो बिभ्राणो धारयन् पृथिवीपतिः क्षितीशः किमु मर्षयेत नैव

करभकः—तदो, चन्दउत्तेण आणाभङ्गकलुसिदहिअएण, सुइर अमच्च गुणं पसंसिअ, पब्भंसिदो अहिआरादो चाणक्कहदओ। (१)

मलयकेतुः—सखे भागुरायण! गुणप्रशंसया दर्शितः चन्द्रगुप्तेन राक्षसे भक्तिपक्षपातः।

भागुरायणः—कुमार! न तथा गुणप्रशंसया, यथा चाणक्यवटोर्निराकरणेन।

राक्षसः—भद्र! किमयमेवैकः कौमुदीमहोत्सवप्रतिषेधश्चन्द्रगुप्तस्य चाणक्यं प्रति कोपकारणमुतान्यदप्यस्ति?

मलयकेतुः—सखे भागुरायण! चन्द्रगुप्तस्य अपरकोपकारणान्वेषणे किं फलमेष पश्यति?

(१) ततश्चन्द्रगुप्तेनाज्ञाभङ्गकलुषितहृदयेन, सुचिरममात्यगुणं प्रशस्य, प्रभ्रंशितोऽधिकारात चाणक्यहतकः।

मर्षयेदित्यर्थः। अतिसाधारणोऽपि जनः उत्सवप्रतिषेधं न सहते नृपस्तु तं नैव सहेत इत्यर्थः।

दण्डापूपिकयाऽन्यार्थाऽगमोऽर्थापत्तिरिष्यते।

इति दर्पणोक्तलक्षणात् पृथिवीपतिस्तु निर्हेतुकं क्रीडारसोपरमं नैव सहेतेत्यन्यार्थप्रतीत्या श्लोकेऽस्मिन्नर्थापत्तिनामालङ्कारः। अनुष्टुप् वृत्तम्।

तत इति। आज्ञाया भङ्गस्तेन कलुषितं हृदयं यस्य स तथोक्तस्तेन आज्ञाभङ्गकलुषितहृदयेन निदेशोच्छेदाप्रसन्नचित्तेन चन्द्रगुप्तेन मौर्येण अमात्यगुणं राक्षसस्य सौशील्यादिकं प्रशस्य सुचिरं बहुकालं संस्तुत्य संवर्ण्येत्यर्थः, अधिकारात् साचिव्यपदात् चाणक्यहतको दुष्टचाणक्यः प्रभ्रंशितश्च्यावितः।

गुणप्रशंसयेति। गुणानां सौशील्यादीनां प्रशंसा संस्तुतिः गुणप्रशंसा तया गुणप्रशंसया सौशील्यादिसंस्तुत्या (करणतृतीयान्तम्) चन्द्रगुप्तेन मौर्येण राक्षसे नन्दामात्ये भक्तिरनुराग एव पक्ष आश्रयस्तस्मिन् पात आसक्तिः भक्तिपक्षपातः अनुरागाश्रयासक्तिः दर्शितः प्रकटितः।

न तथेति। चाणक्यवटोः अल्पबुद्धेः कौटिल्यस्य निराकरणेन तिरस्कारेण यथा मौर्येण राक्षसेऽनुरागो दर्शित इति शेषः, न तथा गुणप्रशंसया सौशील्यादिगुणवर्णनेन राक्षसे तादृशोऽनुरागो न दर्शित इत्यर्थः। सौशील्यादिगुणवर्णनापेक्षया

भागुरायणः—कुमार ! एतत् फलं पश्यति,—अतिमतिमान् चाणक्यः निष्प्रयोजनमेव किमिति चन्द्रगुप्तं कोपयिष्यति । न च कृतवेदी चन्द्रगुप्त एतावता गौरवमुल्लङ्घयिष्यति । सर्वथा चाणक्य-चन्द्रगुप्तयोः पुष्कलात् कारणाद् यो विश्लेष उत्पद्येत स आत्यन्तिको भविष्यति इति ।

करभकः—अमच्च ! अत्थि अणदपि चन्दउत्तस्स कोवकारणं चाणक्के । ( १ )

राक्षसः—किं किम् ?

करभकः—जधा पढमं दाव उवेक्खिदो अणेण अवक्कमन्तो कुमारो मलयकेदू अमच्चरक्खसो अ ।

राक्षसः—( सहर्षम् । ) सखे शकटदास !!! हस्ततलगतो मे चन्द्रगुप्तो भविष्यति । इदानीं चन्दनदासस्य बन्धनान्मोक्षः, तव च पुत्रदारैः सह समागमः, जीवसिद्धिप्रभृतीनां क्लेशच्छेदः ।

( १ ) अमात्य ! अस्त्यन्यदपि चन्द्रगुप्तस्य कोपकारणं चाणक्ये ।

( २ ) यथा प्रथमं तावदुपेक्षितः अनेन अपक्रामन् कुमारो मलयकेतुः अमात्यराक्षसश्च ।

कौटिल्यनिराकरणेनैव विशेषतोऽनुरागो दर्शित इति भावः ।

**अतिमतिमानिति** । अतिमतिमान् प्रशस्तधीशाली चाणक्यः कौटिल्यः निष्प्रयोजनं निर्हेतुकमेव किमिति कुतः कारणादित्यर्थः । चन्द्रगुप्तं मौर्यं कोपयिष्यति । कृतं वेत्तुं शीलमस्य कृतवेदी कृतज्ञश्चन्द्रगुप्तो मौर्यः एतावता अल्पेन कारणेन गौरवं महत्त्वं कौटिल्यस्येति शेषः । न चोल्लङ्घयिष्यति, नैवातिक्रामिष्यति । सर्वथा सर्वतः चाणक्य-चन्द्रगुप्तयोः कौटिल्य-मौर्ययोः पुष्कलात् महतः कारणात् हेतोः यो विश्लेषो भेद उत्पद्येत जायेत स विश्लेष इत्यर्थः । आत्यन्तिकः प्रवृद्धः प्रतीकारायोग्य इत्यर्थः । भविष्यति सम्पत्स्यते ।

**हस्ततलगत इति** । चन्द्रगुप्तो मौर्यः मे मम हस्ततलगतः करतलप्राप्तः आयत्त इत्यर्थः । भविष्यति, चाणक्य-चन्द्रगुप्तयोरात्यन्तिकभेदे सति चन्द्रगुप्तः सुखेन जेयो मयेति भावः । इदानीं साम्प्रतं चन्दनदासस्य मम सहृदयस्य बन्धनात् कारागृहात् मोक्षः मोचनं बहिर्निष्कासनमित्यर्थः, तव भवतश्च पुत्रदारैः सुत-

भागुरायणः—( आत्मगतम् । ) जातः सत्यं जीवसिद्धेः क्लेशच्छेदः ।

मलयकेतुः—सखे भागुरायण ! "हस्ततलगतो मे सम्प्रति चन्द्रगुप्तो भविष्यति" इति व्याहरतः कोऽयमस्याभिप्रायः ?

भागुरायणः—किमन्यत् ? चाणक्यादपकृष्टस्य चन्द्रगुप्तस्योद्धरणान्न किञ्चित्कार्य्यमवश्यं पश्यति ।

राक्षसः—भद्र ! हृताधिकारः साम्प्रतं क्वासौ वटुः ?

करभकः—तहिं ज्जेव पाडलिपुत्ते पडिवसदि । ( १ )

राक्षसः—( सावेगम् ) भद्र! तत्रैव प्रतिवसति, न तपोवनं गतः प्रतिज्ञां वा न पुनः समारूढवान् ?

करभकः—अमच्च ! तपोवणं गमिस्सदि त्ति सुणीअदि । ( २ )

(१) तस्मिन्नेव पाटलिपुत्रे प्रतिवसति ।

( २ ) अमात्य ! तपोवनं गमिष्यतीति श्रूयते ।

कलत्रादिभिः सह सार्द्धं समागमः सम्मेलनम्, जीवसिद्धिप्रभृतीनां जीवसिद्ध्यादीनां क्लेशच्छेदः दुःखव्यावृत्तिः ।

हस्ततलेति । चाणक्य-चन्द्रगुप्तयोर्भेदे चन्द्रगुप्तः सुखेन वश्यः स्यादिति व्याहरतः कथयतः ।

व्याहार उक्तिर्लपितं भाषितं वचनं वच इत्यमरः

अस्य-राक्षसस्य कोऽयमभिप्रायः किं तात्पर्यम् ।

चाणक्यादिति । भागुरायणः शुद्धमपि राक्षसतात्पर्यमन्यथा व्याख्याति । तथाहि चाणक्यात्कौटिल्यात् अपकृष्टस्य-पृथग्भूतस्य चन्द्रगुप्तस्य मौर्यस्योद्धरणादुन्मूलनात् राक्षसः किञ्चित्किमपि कार्यं कृत्यं नावश्यं पश्यति, नास्यातिशयाभीष्टसिद्धिः । हस्ततलकरणाद् वशीकरणात् आत्मनो मन्त्रित्वप्राप्त्या सर्वथा चन्दनदासप्रभृतीनां दुःखोच्छेदः स्वार्थसिद्धिरित्यस्याशयः ।

हृताधिकार इति । हृतो दूरीकृतोऽधिकारो नियोगो यस्य स हृताधिकारः दूरीकृतनियोगः असौ वटुश्चाणक्यः साम्प्रतमिदानीं क्व वर्तत इति शेषः । च्युतसाचिव्यपदः कौटिल्य इदानीं कुत्र तिष्ठतीत्यर्थः ।

सावेगमिति । तत्रैवावस्थितौ चन्द्रगुप्तप्रतिकूलत्यविधाने वा कदाचित्सन्धिः

राक्षसः—( सावेगम् )। शकटदास ! नेदमुपपद्यते । पश्य;—

देवस्य येन पृथिवीतलवासवस्य
स्वाऽग्रासनापनयजा निकृतिर्न सोढा ।
साऽयं स्वयङ्कृतनराधिपतेर्मनस्वी,
मौर्यात्कथं नु परिभूतिमिमां सहेत ? ॥ ११ ॥

मलयकेतुः—सखे भागुरायण ! चाणक्यस्य तपोवनगमने पुनः प्रतिज्ञारोहणे वा काऽस्य स्वार्थसिद्धिः ?

भागुरायणः—कुमार ! नात्यन्तदुर्बोधोऽयमर्थः यावद्यावत् चाणक्य-

---

स्यादित्यावेगहेतुः । ( क्रियाविशेषणम् ) सावेगं सरभसं यथा स्यात्तथा ब्रवीतीति शेषः । तत्रैव पाटलिपुत्र एवाधिवसति संतिष्ठते तपोवनम् अरण्यं न गतो नाश्रितः वा प्रतिज्ञां प्रतिश्रुतिं न समारूढवान् न कृतवान् ।

देवस्येति । येन चाणक्येन पृथिव्यास्तलं तत्र वासवः श्रेष्ठत्वात्तत्सदृशः तस्य वासवस्य क्षितीन्द्रस्य देवस्य नन्दस्य ( अत्र कृद्योगा षष्ठी ) स्वस्याऽग्रासनं स्वाग्रासनं तस्मादपनयस्तस्माज्जाता स्वाग्राऽसनापनयजा आत्मश्रेष्ठासननिष्कासनसमुत्पन्ना निकृतिः अनादरः न सोढा न क्षान्ता । मनस्वी प्रशस्तमनाः मानशीलो वा सोऽयं चाणक्यः स्वयंकृतश्चासौ नराधिपतिः स्वयंकृतनराधिपतिस्तस्मात्स्वयं कृतनराधिपतेः आत्मसम्पादितनृपतेः मौर्यात् चन्द्रगुप्तात् इमां परिभूतिं पराभवं कथं नु सहेत न कथमपि सहेतेत्यर्थः । यश्चाणक्यो नन्देन श्राद्धे भोजनार्थमागत आसनोपविष्टश्चानादृतः सन् अनादरं न सोढवान् स स्वसम्पादितराज्यस्य मौर्यस्याऽनादरं कथं सहेत नैव सहेतेत्यर्थः । चाणक्ये निकृतिसम्बन्धेऽप्यसम्बन्धद्योतनात्सम्बन्धेऽसम्बन्धरूपातिशयोक्त्यलंकारेण संसृष्टः कथं नु सहेतेत्यतः कथमपि नव सहेतेत्यर्थान्तरावगमादर्थापत्तिरलंकारः । वसन्ततिलकं वृत्तम् ॥ ११ ॥

चाणक्यस्येति । चाणक्यस्य कौटिल्यस्य तपोवनगमनेऽरण्यानुसरणे वाऽथवा पुनः प्रतिज्ञारोहणे मौर्योन्मूलनाय पुनः प्रतिश्रुत्यङ्गीकरणे अस्य राक्षसस्य का स्वार्थसिद्धिः आत्माभिप्रेतनिष्पत्तिः मन्त्रित्वपदप्राप्तिरित्यर्थः । भविष्यतीति क्रियाशेषः ।

नात्यन्तेति । अयमर्थः इदं वस्तु नात्यन्तदुर्बोधो नातिदुरवगमः । याव-

हतकश्चन्द्रगुप्ताद्दूरीभवति तावत्तावदस्य स्वार्थसिद्धिः ।

शकटदासः—अमात्य ! अलमत्यन्तविकल्पितेन एतदुपपद्यत एव ! कुतः ? पश्यत्वमात्यः,—

राज्ञां चूडामणीन्दुद्युतिखचितशिखे मूर्ध्नि विन्यस्तपादः
स्वैरेवोत्पाद्यमानं किमिति विषहते मौर्य आज्ञाविघातम् ? ।
कौटिल्यः कोपनोऽपि स्वयमभिचरणज्ञातदुःखः प्रतिज्ञां,
दैवात् पूर्णप्रतिज्ञः पुनरपि न करोत्यायतिज्यानिभीतः ॥ १२ ॥

राक्षसः—सखे शकटदास ! एवमेतत् , तद्गच्छ, विश्रामय करभकम् ।

यावत्कालं चाणक्यहतको दुष्टश्चाणक्यः चन्द्रगुप्तान्मौर्यात् दूरीभवति असान्निध्ये वर्तते तावत्तावत्कालम् अस्य राक्षसस्य स्वार्थसिद्धिः अभीष्टलाभः सचिवपदप्राप्तिरित्यर्थः ।

अलमिति । अत्यन्तविकल्पितेन अतिशयसन्देहेन अलं व्यर्थम् नातिसन्देहो विधेयः, एतत् चन्द्रगुप्तकर्तृकानादरासहनं चाणक्ये उपपद्यते युज्यते ।

राज्ञामिति । मौर्यश्चन्द्रगुप्तः राज्ञां भूपतीनां चूडायां स्थिता मणयः चूडामणयस्ते इन्दव इवेति चूडामणीन्दवस्तेषां द्युतिभिः कान्तिभिः खचिता संश्लिष्टा शिखा यस्य यस्मिन् वा स तथोक्तस्तस्मिन् चूडामणीन्दुद्युतिखचितशिखे मूर्ध्नि शिरसि न्यस्तौ पादौ येन स न्यस्तपादः स्थापितचरणः तेषामधीश इत्यर्थः, अत स्वैरात्मीयैरेव जनैः अनुचरैरित्यर्थः । उत्पाद्यमानं क्रियमाणम् आज्ञाभङ्गं किमिति कथं विषहते नैव सहते इत्यर्थः । स्वयमभिचरणे ज्ञातं दुःखं येन स स्वयमभिचरणज्ञातदुःखः आत्माभिचारावगतक्लेशः कोपनोऽपि क्रुद्धोऽपि कौटिल्यश्चाणक्यो दैवात् भाग्यात् पूर्णा प्रतिज्ञा यस्य स पूर्णप्रतिज्ञः सफलप्रतिश्रुतिरपि पुनर्भूयः आयतेर्ज्यानिस्तस्माद्भीतः आयतिज्यानिभीतः उत्तरकालिकफलहानिशङ्कः सन् प्रतिज्ञां प्रतिश्रुतिं न करोति न विदधाति । पूर्वकृतप्रतिश्रुतौ क्लेशाधिक्यमनुभूय निष्फलत्वशङ्कया पुनः प्रतिश्रुतिं न करोतीत्यर्थः । चाणक्यस्य पुनः प्रतिज्ञाकरणे कारणान्तरस्य सत्वेऽपि निःशङ्कोऽपि चाणक्यसाशङ्कः इवेति मिथ्या साशङ्कत्वस्य तन्नोत्प्रेक्षणादिवशब्दाप्रयोगेण प्रतीयमानोत्प्रेक्षालङ्कारः । आयतिफलाप्राप्तिभिया प्रतिश्रुत्यकरणायोगेऽपि तद्योगोक्तेरतिशयोक्तिरिति कश्चित् ॥ स्रग्धरावृत्तम् ॥ १२ ॥

शकटदासः—यदाज्ञापयत्यमात्य इति । ( करभकेण सह निष्क्रान्तः । )

राक्षसः—अहमपि कुमारं द्रष्टुमिच्छामि ।

मलयकेतुः—अहमेवार्य्यं द्रष्टुमागतः ।

राक्षसः—( नाट्येनावलोक्य । ) अये ! कुमार एवागतः ।

( आसनादुत्थाय । इदमासनमुपवेष्टुमर्हति कुमारः ।

मलयकेतुः—अहमुपविशामि । उपविशत्वार्य्यः । ( इत्युभौ यथासनमुपविष्टौ । ) आर्य्य ! अपि सह्या शिरोवेदना ?

राक्षसः—कुमारस्याधिराजशब्देनातिरस्कृते कुमारशब्दे, कुतः शिरोवेदनायाः सह्यता ?

मलयकेतुः—स्वयमूरीकृतमेतदार्य्येण, न दुष्प्रापं भविष्यति । तत् कियन्तं कालमस्माभिरेवं सम्भृतबलैरपि शत्रुव्यसनमवेक्षमाणैरुदासितव्यम् ।

राक्षसः—कुमार ! कुतोऽद्यापि कालहरणस्यावकाशः ? प्रतिष्ठस्व रिपुजयाय ।

---

आर्येति । आर्य श्रीमन् , शिरसो वेदना शिरोवेदना शीर्षव्यथा अपि सह्या सोढुं योग्या किम् । स्त्रियामधिकारविहितेन कर्मार्थकत्वता सह्येति प्रयोगसिद्धिः ।

कुमारस्येति । कुमारस्य शिशोर्भवतः अधिको राजाऽधिराजः ( राजाहःसखिभ्यष्टच् ) इति टच् । स चासौ शब्दोऽधिराजशब्दस्तेनाऽधिराजशब्देनाऽतिरस्कृतोऽपरिभूते कुमारशब्दे सतीति शेषः । शिरोवेदनायाः शीर्षव्यथायाः कुतः सह्यता कथं शान्तिः । अधिराजशब्दपूर्वककुमारशब्दश्रवणमन्तरा न मे शिरोव्यथाशान्तिसम्भव इति भावः ।

स्वयमिति । स्वयं साक्षादात्मनेत्यर्थः । आर्येण भवता एतत् मयि अधिराजशब्दप्रयोगविधानम् ऊरीकृतम् , न दुष्प्रापं भविष्यति न दुर्लभं भविष्यति । तत्तस्मात् एवमित्थं सम्भृतानि सञ्चितानि बलानि सैन्यानि येषां ते सम्भृतबलास्तैः सम्भृतबलैः एकत्रीकृतसैन्यैरपि शत्रुव्यसनं रिपुविपत्कालम् अवेक्षमाणैः प्रतीक्षमाणैरस्माभिः कियन्तं कालं किमवधिकं समयम् उदासितव्यम् जोषं वर्त्तितव्यम् ।

कुतोऽद्यापीति । अद्यापि इदानीमपि कालहरणस्य समययापनस्याऽवका-

मलयकेतुः—अमात्य ! अपि किञ्चिच्छत्रुव्यसनमुपलब्धम् ?

राक्षसः—बाढमुपलब्धम् ?

मलयकेतुः—कीदृशम् ?

राक्षसः—सचिवव्यसनं, किमन्यत् । अपकृष्टश्चाणक्याच्चन्द्रगुप्तः ।

मलयकेतुः—अमात्य ! सचिवव्यसनमेव ।

राक्षसः—कुमार ! अन्येषां भूपतीनां कदाचिदमात्यव्यसनमव्यसन-मपि स्यात् , न पुनश्चन्द्रगुप्तस्य ।

मलयकेतुः—आर्य ! ननु विशेषतश्चन्द्रगुप्तस्येति ।

राक्षसः—किं कारणं यदस्यामात्यव्यसनमव्यसनम् ?

मलयकेतुः—चन्द्रगुप्तप्रकृतीनां हि चाणक्यदोषा एव रागहेतवः । तस्मिन्निराकृते प्रथममपि चन्द्रगुप्तानुरक्ताः प्रकृतयः । इदानीं पुनः सुतरामेव तत्रानुरागं दर्शयिष्यन्ति ।

राक्षसः—कुमार ! नैतदेवं, इह द्विप्रकाराः प्रकृतयः,-चन्द्रगुप्तस-होत्थायिन्यो नन्दकुलानुरक्ताश्च । तत्र चन्द्रगुप्तसहोत्थायिनीनां प्रकृ-तीनां चाणक्यदोषा एव विरागहेतवः, न नन्दकुलानुरक्तानाम् । तास्तु खलु नन्दकुलमनेन पितृकुलभूतं कृत्स्नं कृतघ्नेन घातितमित्यपरागा-

शोऽवसरः कुतः कस्मात् नास्तीत्यर्थः रिपुविजयाय रिपुं विजेतुमित्यर्थः, ( तुमर्थाच्च भाववचनादिति चतुर्थी ) प्रतिष्ठस्व याहि ।

अपि किञ्चिदिति । अपिशब्दोऽत्र प्रश्नार्थकः किञ्चित् शत्रुव्यसनं रिपु-क्लेशमुपलब्धमवगतं किम् ।

चन्द्रगुप्तप्रकृतीनामिति । चन्द्रगुप्तस्य प्रकृतयश्चन्द्रगुप्तप्रकृतयस्तासां चन्द्रगुप्तप्रकृतीनां मौर्यप्रजानां चाणक्यस्य दोषाश्चाणक्यदोषाः कौटिल्यौद्धत्यादय एव अपरागस्य हेतवोऽपरागहेतवो विरागकारणानि सन्तीति शेषः । तस्मिन् चा-णक्ये निराकृते दूरीकृते सति प्रथममपि प्रागपि प्रकृतयः चन्द्रगुप्तेऽनुरक्ताश्चन्द्रगुप्ता-नुरक्ताः मौर्याऽनुरागिण्यः इदानीं सम्प्रति पुनर्भूयः सुतरामेव सर्वथैव तत्र चन्द्रगुप्ते राज्ञि अनुरागं स्नेहं दर्शयिष्यन्ति अनुरागयुक्ता भविष्यन्तीत्यर्थः ।

नैतदेवमिति । एतत् भवदुक्तं नैवं न युक्तमित्यर्थः, अयुक्तत्वे हेतुं प्रदर्श-यति—इहेति । इह लोके प्रकृतयः प्रजाः द्विप्रकाराः द्विविधाः सन्तीति शेषः,

मर्षाभ्यां विप्रकृताः सत्यः स्वाश्रयमलभमानाश्चन्द्रगुप्तमेवानुवर्त्तन्ते। त्वादृशं पुनः प्रतिपक्षोद्धरणे सम्भावितशक्तिमभियोक्तारमासाद्य, क्षिप्रमेनं परित्यज्य त्वामेवाश्रयिष्यन्ते इति। अत्र कुमारस्य वयमेव निदर्शनम्।

मलयकेतुः—अमात्य! किमेतदेवैकं सचिवव्यसनमभियोगकारणं चन्द्रगुप्तस्य? आहोस्विदन्यदप्यस्ति?

राक्षसः—कुमार! किमन्यैः बहुभिरपि? एतद्धि तत्र प्रधानतमम्।

मलयकेतुः—अमात्य! कथं प्रधानतमं नाम? किमिदानीं चन्द्रगुप्तः

---

चन्द्रगुप्तेन सह सार्द्धमुत्थातुं शीलमासां ताश्चन्द्रगुप्तसहोत्थायिन्यः मौर्याऽनुरक्ता इत्यर्थः, नन्दकुलाऽनुरक्ताः नन्दान्वयानुरागिण्यश्च। तत्रोभयविधप्रकृतिमध्ये चन्द्रगुप्तसहोत्थायिनीनां मौर्यानुरक्तानां प्रकृतीनां प्रजानां चाणक्यदोषाः कौटिल्यदूषणान्येव विरागहेतवः अपरागकारणानि न नन्दकुलानुरक्तानां नन्दान्वयानुरागवतीनां न चाणक्यदोषा विरागहेतव इत्यर्थः। तास्तु खलु खलुशब्दो वाक्यालंकारे नन्दकुलानुरक्ता इत्यर्थः। कृतघ्नेन अकृतज्ञेन अनेन चाणक्येन चन्द्रगुप्तेन वा पितृकुलेन भूतं पितृकुलभूतं पितृवंशसमं ( समानार्थकोऽत्र भूतशब्दः )।

युक्तं क्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु। इत्यमरकोशोक्तेः

कृत्स्नं सकलं नन्दकुलं नन्दान्वयं घातितं विनाशितमुन्मूलितमिति यावत् इत्यस्माद्धेतोः समुत्पन्नाभ्याम् अपरागामर्षाभ्यां विरागक्रोधाभ्यां विप्रकृताः विरक्तीकृताः सत्यः स्वाश्रयं स्वाधिपम् अलभमाना अप्राप्ताः चन्द्रगुप्तं मौर्यमेवाऽनुवर्त्तन्तेऽनुगच्छन्ति। पुनर्भूयः त्वादृशं भवत्सदृशं प्रतिपक्षोद्धरणे शत्रुनिराकरणे सम्भावितशक्तिं निश्चितसामर्थ्यम् अभियोक्तारं शत्रुपराभवकारिणम् आसाद्य प्राप्य क्षिप्रं शीघ्रमेनं चन्द्रगुप्तं परित्यज्य विहाय त्वामेव भवन्तमेव आश्रयिष्यन्ते सेविष्यन्ते।

**किमेतदिति।** किम्। एतदेकं सचिवव्यसनं मन्त्रिविरोध एव चन्द्रगुप्तस्य मौर्यस्य अभियोगकारणं पराभवहेतुः आहोस्वित् अथवाऽन्यदपि हेत्वन्तरमपीत्यर्थः,

**कथमिति।** राज्यस्य कार्याणि राज्यकार्याणि स्वस्य राज्यकार्याणि स्वरा-

स्वराज्यकार्य्यधुरामन्यत्र मन्त्रिणि आत्मनि वा समासज्य प्रतिविधातुमसमर्थः स्यात् ?

राक्षसः—बाढ़म्, असमर्थ एव ।

मलयकेतुः—किं कारणम् ?

राक्षसः—स्वायत्तसिद्धिषु, उभयायत्तसिद्धिषु वा भूमिपालेषु कदाचिदेतत्सम्भवति, न तु चन्द्रगुप्ते । चन्द्रगुप्तस्तु दुरात्मा, नित्यं सचिवायत्तसिद्धावेवावस्थितश्चक्षुर्विकल इवाप्रत्यक्षसर्वलोकव्यवहारः कथमिव स्वयं प्रतिविधातुं समर्थः स्यात् ? कुतः ?—

अत्युच्छ्रिते मन्त्रिणि पार्थिवे च
विष्टभ्य पादावुपतिष्ठते श्रीः ।

---

ज्यकार्याणि तेषां धूस्तां स्वराज्यकार्यधुराम् निजराज्यकृत्यभारमन्यत्रान्यस्मिन् मन्त्रिणि सचिवे आत्मनि आत्मीये वा समासज्य विन्यस्य स्वयमात्मना प्रतिविधातुं प्रतिकर्तुमसमर्थोऽक्षमः ।

स्वायत्तसिद्धिष्विति । स्वेषु आत्मसु आयत्ता अधीना सिद्धिर्येषां ते तथोक्तास्तेषु स्वायत्तसिद्धिषु आत्माधीनराज्यकार्यसम्पादनेषु उभयोरायत्ता सिद्धिर्येषां ते तथोक्तास्तेषु उभयायत्तसिद्धिषु मन्त्रिपार्थिवाधीनराज्यकार्यसम्पादनेषु वा भूमिपालेषु क्षितिपतिषु एतत् अभियोगप्रतिविधानं सम्भवति न तु चन्द्रगुप्ते मौर्ये अस्मदभियोगप्रतिविधानं सम्भवतीति शेषः । चन्द्रगुप्ते मौर्यस्तु दुरात्मा दुर्हृदयः नित्यं प्रतिक्षणं सचिवायत्तसिद्धौ मन्त्रिस्थितकार्यचिन्तने एवावस्थितः वर्तमानः चक्षुर्विकल इव नेत्ररहित इव अप्रत्यक्षाऽगोचरः सर्वलोकानां व्यवहारो यस्य सोऽप्रत्यक्षसर्वलोकव्यवहारः लोकव्यवहारानभिज्ञ इत्यर्थः कथमिव स्वयमात्मना प्रतिविधातुं प्रतिकर्त्तुं समर्थः क्षमः स्याद्भवेत् ।

अत्युच्छ्रित इति । श्रीः राज्यलक्ष्मीः अत्युच्छ्रितेऽत्युन्नते मन्त्रिणि सचिवे पार्थिवे नृपे च पादौ चरणौ मन्त्रशक्ति-प्रभुशक्तिरूपौ विष्टभ्य संस्थाप्य तयोरेकैकस्मिन्नेकैकं पादं धृत्वेत्यर्थः। उपतिष्ठते सङ्गतो भवतीत्यर्थः ( उपाद्देवपूजासंगतिकरणदानेष्विति उपपूर्वकात्तिष्ठतेःसङ्गतिकरणे आत्मनेपदम् ) सा श्रीः राज्यलक्ष्मीः स्त्रीस्वभावात् नारीजनसुलभत्वात्-नारीणां दौर्बल्यं चापल्यं च प्रसिद्धमिति तात्पर्यम्; भारस्य मन्त्रि-पार्थिवोभयत्र स्थितिरूपक्लेशस्याऽसहा सोढुमसमर्थाऽक्षमा

सा स्त्रीस्वभावादसहा भरस्य
तयोर्द्वयोरेकतरं जहाति ॥ १३ ॥

अपि च,—

नृपोऽपकृष्टः सचिवात्तदर्पणः
स्तनन्धयोऽत्यन्तशिशुः स्तनादिव ।
अदृष्टलोकव्यवहारमन्दधी-
र्मुहूर्तमप्युत्सहते न वर्त्तितुम् ॥ १४ ॥

सती तयोर्द्वयोर्मन्त्रि-पार्थिवयोर्मध्ये एकतरं मन्त्रिणं पार्थिवं वा जहाति त्यजति । अत्युन्नतसमानवंशस्तम्भद्वयमङ्घ्रिद्वयेनावलम्ब्य सुस्थितापि वंशस्तम्भद्वयवैषम्यप्रयुक्तपादच्युत्या कार्यभारस्याक्षमत्वादेकं विहायापरमवलम्बमाना तेन सह पतन्ती काचिन्नर्तकीव श्रीः मन्त्रि-पार्थिवोभयमवलम्ब्य स्थिता चापल्याद्भारस्याक्षमा सती तयोरन्यतरं परित्यजतीत्यर्थः । एवमुन्नतो मौर्योऽनुन्नतेऽन्यसचिवे भारमाधायाक्षमः स्यादिति भावः । प्रस्तुतराजलक्ष्म्यामप्रस्तुतनायिकाव्यवहारसमारोपणेन समासोक्तिरलङ्कारः ।

समासोक्तिः समैर्यत्र कार्यलिङ्गविशेषणैः ।
व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः ॥

इति दर्पणोक्तः । प्रसादगुणः । वैदर्भी रीतिः । उपजातिवृत्तम् ॥ १३ ॥

नृप इति । स्तनन्धयतीति स्तनन्धयः स्तनपायी ( स्तनशब्दादुपपदाद्धेटः 'नासिकास्तनयोर्ध्माधेटोः' इति खशि, 'अरुर्द्विषदजन्तस्य मुम्' इति मुमि च रूपम् ) अत एवात्यन्तशिशुः अतिबालः स्तनात्पयोधरादिव सचिवादमात्यात् अपकृष्टः पृथग्भूतः तस्मिन्नेव सचिवेऽर्पणं राज्यभारसमर्पणं यस्य स तदर्पणः सचिवाधीनसिद्धिः । तथा न दृष्टो लोकानां व्यवहारो येन सोऽदृष्टलोकव्यवहारः अत एव मन्दा धीर्यस्य स मन्दधीः अदृष्टलोकव्यवहारश्चासौ मन्दधीः अदृष्टलोकव्यवहारमन्दधीः अप्रत्यक्षजनाचाराल्पबुद्धिः नृपो राजा मुहूर्तमपि क्षणमपि वर्तितुं स्थातुं नोत्सहते न क्षमते । अमात्यात् पृथग्भूतो नृपः स्वयं राज्यकार्यं सम्पादयितुमसमर्थो भवतीति भावः । अत्रोपमालङ्कारः । वृत्तञ्च वंशस्थविलं नाम ॥ १४ ॥

मलयकेतुः—( आत्मगतम् । ) दिष्ट्या न सचिवायत्ततन्त्रोऽस्मि ( प्रकाशम् ) अमात्य! यद्यप्येवं तथापि खलु बहुष्वभियोगकारणेषु सत्सु सचिवव्यसनमभियुञ्जानस्य शत्रुमभियोक्तुः नैकान्तिकी सिद्धिर्भवति।

राक्षसः—ऐकान्तिकीमेव सिद्धिमवगन्तुमर्हति कुमारः। कुतः?—

त्वय्युत्कृष्टबलेऽभियोक्तरि नृपे, नन्दानुरक्ते पुरे,
चाणक्ये चलिताधिकारविमुखे, मौर्ये नवे राजनि।
स्वाधीने मयि—" ( इत्यर्द्धोक्ते लज्जां नाटयन् )।

आत्मगतमिति। आत्मगतमप्रकाशं यथा तथा ब्रवीतीत्यर्थः। दिष्ट्या! ( हर्षसूचकमव्ययम् ) भाग्येनेत्यर्थः। सचिवस्य मन्त्रिण आयत्तं तन्त्रम् यस्य स सचिवायत्ततन्त्रः अमात्याधीनराष्ट्रः नास्मि अहमिति शेषः। अमात्ये त्वयि विरुद्धेऽपि न मे स्वतन्त्रस्य कापि हानिरिति भावः। यद्यप्येवं स्वाधीनराष्ट्रस्य क्षत्यभावे सतीत्यर्थः। अभियोगकारणेषु अपकारवाञ्छयाऽऽक्रमणहेतुषु सत्सु विद्यमानेषु सचिवव्यसनम् मन्त्रिविपदमभियुञ्जानस्यानुसंदधानस्य शत्रुं रिपुम् अभियोक्तुः आक्रमितुमुद्युक्तस्य मृगयत इति यावत् ऐकान्तिकी अवश्यम्भाविनी सिद्धिर्न भवति न जायते।

त्वयीति। हे विभो हे राजन्! उत्कृष्टानि बलानि यस्य स उत्कृष्टबलस्तस्मिन्नुत्कृष्टबले बलवत्सैन्ये त्वयि भवति नृपे राजनि अभियोक्तरि योद्धुमुद्यते सति तथा पुरे कुसुमपुरे नन्दानुरक्ते नन्दस्नेहिनि सति चाणक्ये कौटिल्ये चलितश्चासावधिकारश्चलिताधिकारस्तस्माद्विमुखस्तस्मिन् चलिताधिकारविमुखे मन्त्रिपदच्युते सति मौर्ये चन्द्रगुप्ते नवे नूतने राजनि नृपे सति तथा मार्गमात्रकथनमेव व्यापारस्तस्य योगस्तत्रोद्यमो यस्य स तथोक्तस्तस्मिन् मार्गमात्रकथनव्यापारयोगोद्यमे रणपथमात्रोपदेशात्मकव्यापारोपाय यत्ने स्वाधीने स्वतन्त्रे मयि सति सम्प्रति इदानीं नोऽस्माकं साध्यानि वाञ्छितकार्याणि त्वद्वाञ्छान्तरितानि त्वदिच्छामात्रान्तर्हितानि तिष्ठन्ति वर्तन्ते। वाञ्छितकार्यसम्पादने भवदनुमतिप्रतीक्षणमेव विलम्ब इति तात्पर्यम्।

समुच्चयोऽयमेकस्मिन् सति कार्यस्य साधके।
खले कपोतिकन्यायात् तत्करः स्यात्परोऽपि चेत्।

इत्यादि दर्पणस्थलक्षणादेकस्येप्सितकार्यस्यानेककारणसत्वात्समुच्चयालङ्कारः।

त्वद्बाहुच्छायान्तरितानि सम्प्रति विभो ! तिष्ठन्ति साध्यानि नः ॥१५॥

मलयकेतुः—अमात्य ! यद्येवमभियोगकालममात्यः पश्यति, तत्किमास्यते ? पश्य,—

उत्तुङ्गास्तुङ्गकूलं स्रुतमदसलिलाः प्रस्यन्दिसलिलं
श्यामाः श्यामोपकण्ठद्रुममलिमुखराः कल्लोलमुखरम् ।
स्रोतःखातावसीदत्तटमुरुदशनैरुत्सादिततटाः
शोणं सिन्दूरशोणा मम गजपतयः पास्यन्ति शतशः ॥ १६ ॥

अपि च,—

गम्भीरगर्जितरवाः स्वमदाम्बुमिश्र-
मासारवर्षमिव शीकरमुद्गिरन्त्यः ।

---

प्रसादगुणः । पाञ्चाली रीतिः । शार्दूलविक्रीडितं वृत्तम् ॥ १५ ॥

यद्येवमिति । आर्यो भवान् यदि एवमित्थम् अभियोगकालं शत्रोराक्रमणसमयं पश्यति तत्तस्मात्किं किमर्थमास्यते विलम्बते ।

उत्तुङ्गेति । उत्तुङ्गाः अत्युन्नताः स्रुतं मदसलिलं येषां ते स्रुतमदसलिलाः क्षरद्दानवारयः श्यामाः कृष्णवर्णाः अलिभिर्मुखराः अलिमुखराः भ्रमरझङ्कारवन्तः उरुदशनैः विशालदन्तैः उत्सादितं विनाशितं तटं कूलं यैस्ते उत्सादितकूलाः अतिपराक्रमशालिनः सिन्दूरैस्तद्वद्रक्तबिन्दुभिः शोणा रक्तवर्णाः मम शतशो गजपतयः तुङ्गमुन्नतं कूलं तटं यस्य स तथोक्तस्तं तुङ्गकूलमुन्नततटं प्रस्यन्दीनि सलिलानि यस्य स तथोक्तस्तं प्रस्यन्दिसलिलं प्रवहमाणजलं श्यामाः श्यामवर्णाः उपकण्ठे तटप्रदेशे द्रुमा यस्य स तथोक्तस्तं श्यामोपकण्ठद्रुमं उपतटश्यामवृक्षं कल्लोलैर्मुखरं कल्लोलमुखरं तरङ्गशब्दयुतं स्रोतसा खातमत एवावसीदत्तटं यस्य स तथोक्तस्तं स्रोतःखातावसीदत्तटं शोणं शोणनामपाटलिपुत्रसमीपवर्त्तिनदविशेषं पास्यन्ति पानेन शोषयिष्यन्ति । कुसुमपुरप्रान्तीयकूलं शोण इवास्मत्करिवर्गः कुसुमपुरं नाशयिष्यतीत्यर्थः । शोणो यथा तथा गजपतय इत्यर्थप्रतीत्या शोणगजपतीनां गम्यौपम्येन शोणशब्दस्य श्लिष्टत्वेन च श्लेषानुप्राणितोपमालंकारः । गजपतिशोणाभयविशेषवर्गस्य यथासंख्यमन्वयेन यथासंख्यमलङ्कारश्च । ओजो गुणः । गौडी रीतिः । सुवदनावृत्तम् ।

ज्ञेया सप्ताश्वषड्भिर्मरभनययुता म्लौगः सुवदना ॥ १६ ॥

गम्भीरेति । गम्भीरञ्च तद्गर्जितं गम्भीरगर्जितं तद्वद्रवो येषां ते गम्भीरग-

विन्ध्यं विकीर्णसलिला इव मेघमाला
रोत्स्यन्ति वारणघटा नगरं मदीयाः ॥ १७ ॥

( इति भागुरायणेन सह निष्क्रान्तो मलयकेतुः ) ।

राक्षसः—कः कोऽत्र भोः ?

पुरुषः—( प्रविश्य ) आणवेदु अमच्चो ! ( १ )

राक्षसः—प्रियंवदक ! ज्ञायतां सांवत्सरिकाणां द्वारि कस्तिष्ठति ।

प्रियंवदकः— जं अमच्चो आणवेदि । ( इति निष्क्रम्य क्षपणकं दृष्ट्वा

( १ ) आज्ञापयत्वमात्यः ।

जितरवाः सान्द्रगर्जनध्वनयः आसार एव वर्षं वर्षणमासारवर्षं धारासम्पातवर्षणमिव स्वस्य मदाम्बु स्वमदाम्बु तेन मिश्रं स्वमदाम्बुमिश्रं निजदानजलमिश्रितं शीकरम् अम्बुकणम् ।

शीकरोऽम्बुकणः स्मृतः ।

अद्रिरन्त्यः उद्गमन्त्यः ।

निष्ठयतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम् ।
अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते ॥

इति दण्ड्युक्त्या गिरतेरप्रधानार्थतया न ग्राम्यदोषः मदीयाः मामकीनाः वारणघटा गजसमूहाः विकीर्णं विक्षिप्तं सलिलं याभिस्ता विकीर्णसलिला विक्षिप्तजलाः मेघमालाः घनपङ्क्तयः विन्ध्यं विन्ध्यपर्वतमिव नगरं पुष्पपुरं रोत्स्यन्ति आवरिष्यन्ति ।

करि-घनयोरुपमानोपमेययोरौपम्यवाचकेशब्दस्य गम्भीरगर्जितघनवत्त्वादिसामान्यधर्मस्य चोपादानादत्र पूर्णोपमाऽलंकारः । ओजो गुणः । पाञ्चाली रीतिः । वसन्ततिलकं वृत्तम् ॥ १७ ॥

कः कोऽत्रेति । नात्र ( कस्कादिषु चे ) ति सत्वं शंक्यम् वाक्ये संहिताया विवक्षाधीनत्वात्सत्वात्मकसन्धौ तदनभ्युपगमात् ( कस्कोऽत्रेति पाठस्यैव सम्यक्त्वमभ्युपगच्छन्ति केचित् ) ।

ज्ञायतामिति । साम्वत्सरिकाणां दैवज्ञानां मध्ये द्वारि प्रतीहारभूमौ कः किंनामधेयस्तिष्ठति वर्तते ।

पुनः प्रविश्य च ) अमच्च ! एसो क्खु संवत्सरिओ क्खवणओ । ( १ )

राक्षसः— ( स्वगतमनिमित्तं सूचयित्वा ) । कथं प्रथममेव क्षपणकदर्शनम् ?

प्रियंवदकः—जीवसिद्धी । ( २ )

राक्षसः—( प्रकाशम् ) अबीभत्सदर्शनं कृत्वा प्रवेशय ।

प्रियंवदकः—जं अमच्चो आणवेदि । ( ३ )

( इति निष्क्रान्तः ) ।

( ततः प्रविशति क्षपणकः )

क्षपणकः—

सासणमलिहन्ताणं पडिवज्जह, मोहवाहिवेज्जाणं ।

( १ ) यदमात्य आज्ञापयतीति । अमात्य ! एष खलु सांवत्सरिकः क्षपणकः ।

( २ ) जीवसिद्धिः ।

( ३ ) यदमात्य आज्ञापयति ।

सांवत्सरो ज्योतिषिको दैवज्ञगणकावपीत्यमरः ।

स्वगतमिति । स्वस्मिन्नात्मनि गतं प्राप्तं स्वगतं तद्यथा स्यात्तथाऽनिमित्तमशुभलक्षणं सूचयित्वाऽभिनीय । प्रथमं पूर्वमेव कथं कुतः क्षपणकदर्शनं नग्नसन्न्यासिनिरीक्षणं जातमिति शेषः । क्षपणकस्य नग्नत्वात्तद्दर्शनमशुभसूचकमिति भावः ।

अबीभत्सदर्शनमिति । न बीभत्सं विधाय दर्शनं यस्य सोऽबीभत्सदर्शनस्तमबीभत्सदर्शनम् अनिन्दितवेषं कृत्वा विधाय प्रवेशय आलयमिति शेषः । प्राक्क्षपणकसामान्यज्ञानेनाशुभसंशयः पश्चाज्जीवसिद्धिं ज्योतिश्शास्त्रवेत्तारमनुमाय गृहप्रवेशानुमतिः ।

शासनमिति । मोह एव व्याधिस्तस्य वैद्यास्तेषां मोहव्याधिवैद्यानाम् अज्ञानरोगचिकित्सकानां ज्ञानप्रदानामित्यर्थः । अर्हतां पूज्यानां बौद्धविशेषाणाञ्च शासनमुपदेशं प्रतिपद्यध्वं प्रतिपालयत । ये अर्हन्तः मान्याः बौद्धसन्न्यासिविशेषाश्च प्रथममात्रकटुकं प्रागेव विरसं पश्चात् पथ्यं हितं वचनमिति शेषः। उपदिशन्ति शिक्षयन्ति । येषां वचनं प्राग्विरसं पश्चात्परिणामहितं च तेषां वचनमवश्यं प्रतिपालनीयमित्यर्थः। इदानीं स्वयमभिधास्यमानवचनस्य विरसत्वेऽपि परिणामे राक्षसकल्याणो-

जे पढ़ममेत्तकडुअं, पच्छा पत्थं उवदिसन्ति ॥१८॥ (१)

( उपसृत्य । ) धम्मलाहो सावका ! भोदु । (२)

राक्षसः—भदन्त ! निरूप्यतां, तावदस्मत्प्रस्थानयोग्यदिवसः ।

क्षपणकः—( नाट्येन चिन्तयित्वा । ) सावका ! णिलुविदे मुहुत्ते । आ मज्झणादो णिव्वुत्तसत्तसकला सोहणा तिही संपुणचन्दा पुण्णमासी तुह्माणं उत्तलाए दिसाए दक्खिणं दिसं पत्थिदाणं दक्खिणदुवालिओ णक्खत्तओ । अवि अ,—

अत्थाहिमुहे सूले, उदिदे संपुण्णमण्डले चन्दे ।

( १ ) शासनमर्हतां प्रतिपद्यध्वं मोहव्याधिवैद्यानाम् ।
ये प्रथममात्रकटुकं पश्चात् पथ्यमुपदिशन्ति ॥

( २ ) धर्म्मलाभ उपासक ! भवतु ।

---

त्पादकत्वमिति बोधितमेतेनेति बोध्यम् । अप्रस्तुतमोहव्याधिवैद्यार्हद्वचनप्रतिपालनस्यावश्यकत्वोक्त्या प्रस्तुतात्मवचनप्रतिपालनस्यावश्यकत्वावगतावप्रस्तुतप्रशंसाऽलङ्कारः । अर्हत्सु मोहव्याधिवैद्यत्वारोपाद्रूपकालङ्कारसंकीर्णः । आर्यावृत्तम् ॥ १८ ॥

भदन्तेति । भदन्तेति बौद्धमन्न्यासिनां सम्बोधनम् मान्येति तदर्थः । ज्योतिश्शास्त्रज्ञस्य वा नाम ज्योतिश्शास्त्रज्ञैर्जैनस्य व्यवहृतत्वात् । तावत्प्रथमम् अस्माकं प्रस्थानमस्मत्प्रस्थानं तस्य योग्यो दिवसोऽस्मत्प्रस्थानयोग्यदिवसोऽस्मद्रणयात्राऽनुरूपकालो निरूप्यतां निश्चीयतां यस्मिन्काले रणयात्रायाः प्राशस्त्यं स्यात्स कालस्त्वया निर्णेय इत्यर्थः ।

शारदपूर्णचन्द्रोत्सवनिराकरणान्नेदानीमुत्सवकालोऽपि तु संग्रामकाल इति चाणक्येनाभिधानात्तत्प्रभृतिमासद्वयं यावत्कौटिल्यराक्षसोभयप्रयुक्तारिवश्यतासाधकोपायेन भेदसाधनम् । साम्प्रतं मार्गशीर्ष्यां कुसुमपुरमवरोद्धुं जिगमिषुणा राक्षसेन प्रस्थानदिवसः पृष्टो जीवसिद्धिरभिदधाति-निरूपित इति । मुहूर्तः प्रस्थानकालो निरूपितो निर्णीतः । आमध्याह्नात मध्याह्नकालमारभ्य निवृत्तं सप्तशकलं विष्टिभद्रात्मकः सप्तमतिथ्यंशो यस्याः सा निवृत्तसप्तशकला ( निवृत्तसर्वकल्याणेति पाठेऽप्रशस्ताखिलमङ्गलक्रियेत्यर्थः ) सम्पूर्णश्चन्द्रो यस्यां सा सम्पूर्णचन्द्रा पूर्णेन्दुः अत एव शोभना शुभप्रदा पूर्णमासी पूर्णिमा तिथिः, उत्तरस्याः कौबेर्याः ( अपादानप-

गमणं बुहस्स लग्गे, उदिदत्थमिदे अ केदुम्मि ॥१९॥(१)

राक्षसः—भदन्त ! तिथिरेव तावन्न शुध्यति ।

---

( १ ) उपासक ! निरूपिता मुहूर्त्तः । आ मध्याह्नात् निवृत्तसम्पूर्णकला शोभना तिथिः सम्पूर्णचन्द्रा पौर्णमासी, युष्माकमुत्तरस्या दिशो दक्षिणां दिशं प्रस्थितानां दक्षिणद्वारिकं नक्षत्रम् ।

अपि च,—अस्ताभिमुखे शूरे, उदिते सम्पूर्णमण्डले चन्द्रे ।
गमनं बुधस्य लग्ने, उदितास्तमिते च केतौ ॥

---

आम्यन्तम् ) दिशः ककुभः दक्षिणां याम्यां दिशं ककुभं प्रस्थितानां कृतयात्राणां युष्माकं भवतां दक्षिणद्वारि याम्यदिग्वर्त्ति नक्षत्रम् 'अस्ती'ति क्रियाशेषः । अद्य पौर्णमासी पञ्चचत्वारिंशन्नाडिका मध्याह्नपर्यन्तं विष्टिभद्रा नामकरणं तत्र प्रस्थानमशुभप्रदमित्यर्थः ।

न गच्छेद्विष्टिभद्रायाम् । इति निषेधवचनम् ।

षष्ठ्यष्टमीद्वादशेषु न गच्छेत्रिद्युदिनस्पृशि ।

पूर्णिमाप्रतिपद्दर्शरिक्तावमदिनेषु चे

ति च निषेधवचनम् ।

प्रस्थानसमयमाह—अस्ताभिमुख इति । शूरे सूर्य-

शूरः सूरोऽपि चादित्य-

इति कोषः । अस्ताभिमुखेऽस्ताचलशिखराश्रयिणि सति एतेन समयो दर्शितः सम्पूर्णं मण्डलं यस्य स सम्पूर्णमण्डलस्तस्मिन् संपूर्णमण्डले परिपूर्णबिम्बे चन्द्रे निशाकरे उदिते प्रादुर्भूते सति ( एतेन लग्नबलप्रदर्शनम् ) । बुधस्य लग्ने बुधस्वामिके राशौ कन्यालग्न इत्यर्थः । ( एतेन लग्नविशेषाऽभिधानम् ) । केतौ केतुग्रहे च उदितास्तमिते उदितालग्नादस्तमिते सप्तमस्थानवर्तिनि सति गमनं प्रशस्तमिति शेषः । ( एतेन लग्नस्यादुष्टत्वकथनम् ) । पक्षान्तरे शूरे बलवति राक्षसे इत्यर्थः । अस्ताभिमुखे विनाशोन्मुखे चन्द्रे चन्द्रगुप्ते सम्पूर्णमण्डले समृद्धप्रकृतिसमुदाये उदिते उत्थिते सति बुधस्य चाणक्यस्य लग्ने सम्पर्कं ेतुभूते केतौ मलयकेतौ गमनं मलयकेतुनिग्रहार्थमस्माकं प्रस्थानं युक्तमित्यर्थः । अत्र श्लेषालंकारः । आर्याछन्दः ॥ १९ ॥

क्षपणकः—सावकाः !—

एक्कगुणा होइ तिह्रो, चउग्गुणे होइ णक्खत्ते ।
चउसत्तिगुणे लग्गे, एसे जोइ सतन्त सिद्धंते ॥२०॥ (१)

तस्मात । लग्गे होइ सुलग्गे, कूलग्गहं पलिहलिज्जासु ।

---

( १ ) उपासक !—

एकगुणा भवति तिथिश्चतुर्गुणं भवति नक्षत्रम् ।
चतुःषष्टिगुणं लग्नम् , एतद्दृश्यते ज्योतिषसिद्धान्ते ॥

---

एकगुणेति । तिथिः एकगुणा एको गुणो यस्याः सा एकगुणा नक्षत्रं तारा चतुर्गुणं चत्वारो गुणा यस्य तच्चतुर्गुणम् तिथ्यपेक्षया नक्षत्रस्य चतुर्गुणफलदायित्वेन चतुर्गुणत्वमपेक्षितम् । लग्नं चतुःषष्टिगुणं चतुःषष्टिर्गुणा यस्य तत् चतुःषष्टिगुणं नक्षत्रापेक्षया लग्नस्य चतुःषष्टिगुणफलदायकत्वेन तत्त्वमपेक्षितम्, एष ज्योतिषतन्त्रसिद्धान्तः ज्योतिश्शास्त्रमीमांसेत्यर्थः ॥ २० ॥

लग्नमिति । लग्नं राश्युदयः ।

राशीनामुदयो लग्नं ते तु मेषवृषादयः ।

इत्यमरः । हीनमपि इतिशेषः । सुलग्नं भवति शुभफलप्रदं भवति, दुष्टलग्नस्य शुभफलप्रदत्वे हेतुं दर्शयति—क्रूरग्रहमिति । आशु शीघ्रं क्रूरग्रहं मन्दग्रहसम्बन्धं परिहर परित्यज लग्नस्य क्रूरसम्बन्धाभावे सुतरां शुभफलप्रदत्वं भवतीत्यर्थः ।

तारास्तत्र न गण्यन्ते यत्र चन्द्रो बलान्वितः ।
शुभे चन्द्रे प्रणश्यन्ति वृक्षा वज्रहता इव ॥
सहस्रेणाधिकः सूर्यश्चन्द्रोल क्षगुणाधिकः

इत्यादिवचनाच्चन्द्रस्यैव प्राबल्यबोधनात् विशेषयोगं दर्शयति—चन्द्रस्येति । चन्द्रस्येन्दोर्बलेन सम्बन्धेन गच्छन् त्वं दीर्घं चिरकालस्थायिनं लाभं सिद्धिं प्राप्नुहि लभस्व ।

( पक्षान्तरे )—हे क्रूर ! राक्षस ग्रहम् आग्रहं चाणक्यपराजयविषयकोद्योग मित्यर्थः । परिहर त्यज । चन्द्रस्य चन्द्रगुप्तस्य बलेन सैन्येन भद्रभटप्रभृतिना सह गच्छन् चलन् त्वं दीर्घं चिरकालव्यापिनं लाभं चन्द्रगुप्तामात्यपदवीं प्राप्नुहि लभ-

पाविहि दीहं लाहं चन्दस्स बलेण गच्छन्ते ॥२१॥ (१)

राक्षसः—भदन्त ! अपरैः सांवत्सरिकैः सार्द्धं संवाद्यताम् ।

क्षपणकः—संवादेदु सावके। अहं णिअं गेहं गमिस्सं । (२)

राक्षसः—न खलु कुपितो भदन्तः ?

क्षपणकः—ण कुविदे तुह्माणं भदन्ते । ( ३ )

राक्षसः—कस्तर्हि ?

क्षपणकः—भअवं कअन्तो । जेण अत्तणो पक्खं उज्झिअ परपक्खं प्पमाणीकलेसि । ( ४ )

( इति निष्क्रान्तः क्षपणकः )

राक्षसः—प्रियंवदक ! ज्ञायतां का वेला वर्त्तत इति ।

---

( १ ) लग्नं भवति सुलग्नं, क्रूरग्रहं परिहर आशु ।
प्राप्नुहि दीर्घं लाभं चन्द्रस्य बलेन गच्छन् सन् ॥

( २ ) संवादयतु उपासकः । अहं निजं गेहं गमिष्यामि ।

( ३ ) न कुपितो युष्माकं भदन्तः ।

( ४ ) भगवान् कृतान्तः । येन आत्मनः पक्षमुज्झित्वा परपक्षं प्रमाणीकरोषि ।

---

स्वः अतो लग्नं दुष्टमपि सुलग्नं शुभफलदायकमित्यर्थः । अत्रापि श्लेषालङ्कारः॥२१॥

भदन्तेति । भदन्त ज्योतिषिक ! अपरैरन्यैः साम्वत्सरिकैः ज्योतिश्शास्त्रविद्भिः सह सार्द्धं सम्वाद्यतां विचार्यताम् लग्नशुद्धिः प्रस्थानसमयो वेति शेषः ।

येनेति । येन त्वयाऽऽत्मनः स्वस्य पक्षः स्वपक्षस्तं स्वपक्षं ज्योतिश्शास्त्रवेत्तारं मामुज्झित्वा परित्यज्य परस्य पक्षः परपक्षस्तं परपक्षमन्यं ज्योतिस्तन्त्रविदं प्रमाणीकरोषि प्रमाणत्वेनाङ्गीकरोषि अतो भगवान् कृतान्तो ज्योतिस्तन्त्रसिद्धान्तो व्याकुपितः । ( पक्षान्तरे )—येन त्वयाऽऽत्मपक्षं नन्दवंशोद्भवं मौर्यमुज्झित्वा परित्यज्य परपक्षं शत्रुपक्षं मलयकेतुं प्रमाणीकरोषि आत्मीयत्वेन जानासि अतो भगवान् कृतान्तो यमः व्याकुपितः इति गूढार्थः ।

कृतान्तौ यमसिद्धान्तावित्यमरः ।

ज्ञायतामिति । का वेला कियान् कालो वर्ततेऽस्ति ।

प्रियंवदकः—जं अमच्चो आणवेदि। (इति निष्क्रम्य पुनः प्रविश्य च)। अत्थाहिलासी भअवं सुले। (१)

राक्षसः—(आसनादुत्थाय विलोक्य च।) अये। अस्ताभिलाषी भगवान् सहस्रदीधितिः। तथाहि,—

आविर्भूतानुरागाः क्षणमुदयगिरेरुज्जिहानस्य भानोः
पत्रच्छायैः पुरस्तादुपवनतरवो दूरमाश्वेव गत्वा।
एते तस्मिन् निवृत्ताः पुनरपरककुप्प्रान्तपर्यस्तबिम्बे
प्रायो भृत्यास्त्यजन्ति प्रचलितविभवं स्वामिनं सेवमानाः॥२२॥

(इति निष्क्रान्ताः सर्वे)

इति चतुर्थोऽङ्कः॥४॥

---

(१) यत् अमात्य आज्ञापयति। अस्ताभिलाषी भगवान सूर्यः। (पद्मान्तरीयसंस्कृतं यथा—"अर्थाभिलाषी भगवान् शूरः" इति);

काले च सामायामब्दः कूलविकारयोरिति मेदिनी।

अस्ताभिलाषीति। सूरः सूर्योऽस्ताभिलाषी अस्ताचलगमनोत्सुकः। यद्वा सूरो राक्षसोऽर्थाभिलाषी मौर्यमाचिव्यं प्राप्तुकाम इति च ध्वन्यर्थः।

प्रियम्वदोक्तिमन्यथयति राक्षसः—अस्ताभिलाषी सहस्रदीधितिरिति। अस्ताभिलाषी सूर इत्युक्तौ सूरशब्दस्यार्थेतिप्राकृतशब्दस्य चानेकार्थत्वमतोऽस्ताभिलाषी सहस्रदीधितिरित्युक्त्या तदन्यथाकरणम्।

आविर्भूतानुरागा इति। एते इमे उपवनतरवः आरामवृक्षाः।

आरामः स्यादुपवनं कृत्रिमं वनमेव यत्। इत्यमरः

क्षणं मुहूर्तं व्याप्योदयकाल इत्यर्थः। आविर्भूतोऽनुरागो येषां ते आविर्भूतानुरागाः सञ्जातप्रीतयश्च, उदयगिरेः उदयपर्वतात् उज्जिहानस्योद्गच्छतो भानोः सूर्यस्य पुरस्तादग्रे पर्णच्छायैः पत्रच्छायारूपेण आशु शीघ्रमेव दूरं गत्वा पुनर्भूयः तस्मिन् भानौ अपरा चासौ ककुप् अपरककुप् तस्याः प्रान्ते पर्यस्तमवलम्बितं बिम्बं मण्डलं यस्य स तथोक्तस्तस्मिन्नपरककुप्प्रान्तपर्यस्तबिम्बे इतरदिक्शृङ्गावलम्बिनि अस्ताचलशिखराश्रयिणीति यावत्। सति निवृत्ताः परावृत्ताः, सेवमानाः

# पञ्चमोऽङ्कः ।

( ततः प्रविशति लेखमलङ्करणस्थगिकाञ्च मुद्रितामादाय सिद्धार्थकः । )

सेवां कुर्वन्तो भृत्याः प्रचलितविभवं विनष्टैश्वर्यं स्वामिनं प्रभुं सेवमानाः सेवका विनष्टसम्पदं तं परित्यजन्ति तथोपवनतरवः उदीयमानस्य भानोरग्रे पर्णच्छायारूपेण गत्वाऽस्ताचलाभिलाषिणं तं परित्यजन्तीवेति भावः । चतुर्थपादप्रतिपाद्यसामान्यार्थेन पादत्रयप्रतिपाद्यविशेषार्थस्य समर्थनादत्र सामान्येन विशेषसमर्थनात्मकोऽर्थान्तरन्यासोऽलङ्कारः । तदुक्तं साहित्यदर्पणे—

सामान्यं वा विशेषेण विशेषस्तेन वा यदि ।
कार्यञ्च कारणेनेदं कार्येण च समर्थ्यते ।
साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः ॥

स चाऽर्थान्तरन्यासः उपवनतरवो भानावस्ताचलशिखरावलम्बिनि सति प्रतिनिवृत्ता इवेत्युत्प्रेक्षणादिवशब्दाप्रयोगेण प्रतीयमानयोत्प्रेक्षयोत्थापितः । स्रग्धरावृत्तम् ॥ २२ ॥

इत्थं नियताप्तिप्रकरीरूपो विमर्शसन्धिः तस्याङ्गान्यपवादादीनि च निरूपितानि ।

इति मैथिलश्रीकनकलालठक्कुरविरचितायां मुद्राराक्षसभावबोधिनीव्याख्यायां चतुर्थोऽङ्कः ।

---

बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् ।
ऐकार्थ्यमुपनीयन्ते यत्र निर्वहणं हि तत् ॥

इत्युक्तलक्षणेन फलागमकार्योभययोगो निर्वहणसन्धिरङ्कत्रयेणारभ्यते । बीजवन्तः सञ्जातबीजाः मुखसन्ध्यादीनामर्था आरम्भबीजयोगादयो यथायथं तत्तत्प्रसङ्गेन विप्रकीर्णा वैशद्येन यद्यपि प्रकान्ताः सन्तः ऐकार्थ्यमुपनीयन्ते तस्य फलागमयोगिनः कार्यस्य यत्र निर्वाहः स निर्वहणसन्धिः । कार्यफलागमद्वयमभिधास्ये । अङ्गानि चास्य फलागमानुरूपेण कर्तव्यानि । तदुक्तम्—

सन्धिर्विरोधो ग्रथनं निर्णयः परिभाषणम् ।
प्रसादानन्दसमयाः कृत्याभाषोपगूहनम् ।
पूर्वभावोपसंहारौ प्रशस्तिश्च चतुर्दश ॥ इति ।

**तत इति । ततस्तदनन्तरं राक्षसप्रियम्वदकादिनिष्क्रमणानन्तरमित्यर्थः ।**

सिद्धार्थकः—ही हीमाणहे हीमाणहे !!—
बुद्धिजलणिज्झरेहिं सिञ्चन्ती देशकालकलसेहिं ।
दंसइस्सदि कज्जफलं गुरुअं चाणक्कणीदिलदा ॥१॥ (१)
गहीदो मए अज्जचाणक्केण पढ़मलेहिदो लेहो, अमच्चरक्खसस्स

(१) आश्चर्यम् आश्चर्यम् !—
बुद्धिजलनिर्झरैः सिच्यमाना देशकालकलशैः ।
दर्शयिष्यति कार्यफलं गुरुकं चाणक्यनीतिलता ॥

सिद्धार्थको मलयकेतुमित्रवेशो चाणक्यप्रणिधिः लेखं पत्रं मुद्रा सञ्जाताऽस्या इति मुद्रिता तां मुद्रितां सञ्जातमुद्रां राक्षसाङ्गुलिमुद्राङ्किताामित्यर्थः । अलङ्करणस्थगिकां भूषणपेटिकामादाय गृहीत्वा प्रविशति रङ्गस्थानमिति शेषः ।

ही हीमाणहे इति । आश्चर्यसूचकोऽयं निपातसमुदायः,वीप्सायां द्विरुक्तिः ।

बुद्धिजलेति । बुद्धय एव जलानि बुद्धिजलानि तेषां निर्झरा येभ्यस्ते तथोक्तास्तैर्बुद्धिजलनिर्झरैः धीपयःप्रवाहैः देशश्च कालश्च देशकालौ तावेव कलशास्तैर्देशकालकलशैः स्थानसमयकुम्भैः सिच्यमाना आर्द्रीक्रियमाणा चाणक्यस्य नीतिश्चाणक्यनीतिः सैव लता चाणक्यनीतिलता कौटिल्यनयव्रततिः गुरुकमधिकं कार्यफलमीप्सितनिष्पत्त्यात्मकं दर्शयिष्यति प्रकटयिष्यति । उपयुक्तस्थाने सुसमये विवेकपुरस्सरं क्रियमाणं कार्यं सफलं भवत्येवेति भावः । प्रथमाङ्के शकटदासनामकायस्थद्वारा चाणक्येन लिखितलेखस्य राक्षसभेदात्मकं फलमचिरमेव भविष्यतीति गूढाभिप्रायः । बुद्धयो जलानीव बुद्धय एव जलानीति वा देशकालौ कलशा इव देशकालावेव कलशा वा चाणक्यनीतिर्लतेव चाणक्यनीतिरेव लतेति वेति तत्तत्पदेपूभयविधसमाससम्भवात् चाणक्यनीतौ लतात्वारोपेण तदङ्गबुद्धौ जलत्वारोपणादुपमासाङ्करूपकयोः सन्देहसङ्करः ॥ १ ॥

गृहीत इति । मया आर्यचाणक्येन पूज्यकौटिल्येन प्रथमलेखितः प्रथमाङ्के शकटदासेन लेखितः अमात्यराक्षसस्य मुद्रालाञ्छितः राक्षसनामाङ्कितमुद्राङ्कितो लेखः पत्रं गृहीतं तस्यैवाऽमात्यराक्षसस्यैव मुद्रालाञ्छिताऽङ्गुलिमुद्राचिह्निता इयं प्रत्यक्षदृश्यमानाऽऽभरणपेटिका अलङ्करणमञ्जूषा । किलेत्यव्ययमलीकार्थकम् पाटलिपुत्रं तदाख्यनगरं चलितोऽस्मि मत्पाटलिपुत्रगमनमलीकमित्यर्थः । या-

मुद्दालंच्छिदो । तस्स ज्जेव्व मुद्दालंच्छिदा इअं आहरणपेडिआ । चलिदेह्मि किल पाडलिउत्तं, ता जाव गच्छह्मि । (परिक्रम्य अवलोक्य च ।) कहं खवणओ आअच्छदि ? जाव मे असउणभूदं इमस्स दंसणं, ता आदिच्चदंसणेण पडिहणामि । ( १ )

( ततः प्रविशति क्षपणकः । )

क्षपणकः—अलिहन्ताणं प्पणमामो, जे दे गंभीलदाए बुद्धीए ।
लोउत्तलेहि लोए सिद्धि मग्गेहि मग्गन्ति (२) ॥२॥

---

( १ ) गृहीतो मयाऽऽर्यचाणक्येन प्रथमलेखितो लेखः, अमात्यराक्षसस्य मुद्रालाञ्छितः । तस्यैव मुद्रालाञ्छितेयमाभरणपेटिका । चलितोऽस्मि किल पाटलिपुत्रं, तद्यावत् गच्छामि । कथं क्षपणक आगच्छति ? यावन्मेऽशकुनभूतमस्य दर्शनं, तस्मादादित्यदर्शनेन प्रतिहन्मि ।

( २ ) अर्हतां प्रणमामो ये ते गम्भीरतया बुद्धेः ।
लोकोत्तरलोंके सिद्धिं मार्गैर्मार्गयन्ति ॥

---

वत प्रथमम् मे अशकुनभूतम् अमङ्गलसूचकम् अस्य क्षपणकस्य बौद्धसंन्यासिनः दर्शनमवलोकनं जातमिति शेषः, तत्तस्मादादित्यदर्शनेन सूर्यावलोकनेन प्रतिहन्मि अशकुनभूतक्षपणकदर्शनजन्यामाङ्गल्यं दूरीकरोमीत्यर्थः । एतदशकुनभूतदर्शनं न मे जात्वशुभफलजनकमादित्यदर्शनेन तत्परिहारात् पाटलिपुत्रगमनस्य कपटरूपत्वेन निर्बाधगमनेन ममाभीष्टसिद्ध्यभावेन च गमनप्रतिबन्धस्येष्टत्वाद्वेति भावः । ( इदं बीजोपगमनं सन्धिनामाङ्गम् ) ।

अर्हतामिति । ( अर्हतामिति कर्मणः शेषत्वविवक्षायां षष्ठी ) अर्हतो बौद्धसंन्यासिनः मान्यांश्च प्रणमामो नमस्कुर्मः, ये ते अर्हन्तो मान्याश्च बुद्धेः मत्यादिपञ्चात्मकज्ञानस्य ( तन्मते मतिश्रुतावधिमनःपर्यायकेवलेति पञ्चानां ज्ञानत्वाभ्युपगमात् ) गम्भीरतया दुरूहतया ( पक्षे ) बुद्धेर्धियो गम्भीरतया धीरतया लोके संसारे लोकोत्तरैः लोकातिगैः प्रशस्तैरित्यर्थः । मार्गैः मोक्षसाधकव्यवहारैः (पक्षे) कार्यसाधकोपायैः सिद्धिं मोक्षं ( पक्षे ) कार्यसाफल्यं मार्गयन्ति अन्वेषयन्ति

सिद्धार्थकः—भदन्त ! पणमामि । ( १ )

क्षपणकः—सावका ! धम्मलाहो दे होदु । ( सिद्धार्थकं निर्वर्ण्य ) सावका ! पत्थाणसमुव्वहणे किदव्ववसाअं विअ दे हिअअं पेक्खामि । ( २ )

सिद्धार्थकः—कहं भदन्तो जाणादि ? ( ३ )

क्षपणकः—सावका ! किं एत्थ जाणिदव्वं ? एसो दे देसकुसलो सउणो करगदो लेहो अ सूचेदि । ( ४ )

सिद्धार्थकः—जाणिदं भदन्तेण देसन्तलं चलिदोह्मि । ता कधेदु भदन्तो कादिसो अज्ज दिअसो ? ( ५ )

---

( १ ) भदन्त ! प्रणमामि ।

( २ ) उपासक ! धर्मलाभस्ते भवतु । उपासक ! प्रस्थानसमुद्वहने कृतव्यवसायमिव ते हृदयं पश्यामि ।

( ३ ) कथं भदन्तो जानाति ?

( ४ ) उपासक ! किमत्र ज्ञातव्यम् ? ननु एष ते मार्गादेशकुशलः शकुनः करगतो लेखश्च सूचयति ।

( ५ ) ज्ञातं भदन्तेन देशान्तरं चलितोऽस्मि । तत् कथयतु भदन्त कीदृशोऽद्य दिवसः ?

---

( पक्षे ) साधयन्ति । एतेन चाणक्यनीतिगाम्भीर्यस्य लोकोत्कृष्टकार्यनिष्पादकत्वं चाणक्यस्यैव प्रणतियोग्यत्वञ्च ध्वनितम् । अप्रस्तुतबौद्धसन्न्यासिस्तुत्या प्रस्तुतचाणक्यस्तुत्यवगमात् बहूनाम्पदानां श्लिष्टार्थत्वाच्चाप्रस्तुतप्रशंसाश्लेषयोः सङ्करः । आर्या वृत्तम् ॥ २ ॥

**प्रस्थानेति।** प्रस्थानसमुद्वहने यात्रासम्पादने विषये इत्यर्थः। कृतो व्यवसायो येन तत्कृतव्यवसायं कृतोद्योगमिव ते तव हृदयं चेतः पश्यामि प्रेक्षे ।

**किमत्रेति ।** अत्रास्मिन् विषये किं ज्ञातव्यमवगन्तव्यमस्तीति शेषः। एषोऽयमेव मार्गस्यादेशो मार्गादेशस्तस्मिन्कुशलो मार्गादेशकुशलोऽध्वसूचननिपुणः शकुनः प्रस्थानसामयिकमुहूर्तविशेष इत्यर्थः । करंगतः प्राप्तः करगतो हस्तस्थितो लेखः पत्रं च सूचयति ज्ञापयति । ( मार्गनौकर्णधार इति पाठे मार्ग

क्षपणकः--( विहस्य ) सावका ! मुण्डिअ मुण्डो तुमं णक्खत्ताइं पुच्छसि ? ( १ )

सिद्धार्थकः--भदन्त ! सम्पदं पि किं जादं ? ता कधेहि, जइ अत्तणो अणुऊलं भविस्सदि, ता गमिस्सं, अणधा णिवत्तिस्सं । ( २ )

क्षपणकः--सावकाणं सम्पदं एदस्सिं मलयकेदुकडए अणुऊलेण अणणुऊलेण वा, अगहीदमुद्देण ण गच्छीअदि । ( ३ )

सिद्धार्थकः—भदन्त ! कहेहि कुदो क्खु अअं ? ( ४ )

---

( १ ) उपासक ! मुण्डितमुण्डस्त्वं नक्षत्राणि पृच्छसि ?

( २ ) भदन्त ! साम्प्रतमपि किं जातम् ? तत् कथय, यद्यात्मनोऽनुकूलं भवेत् , तदा गमिष्यामि, अन्यथा निवर्तिष्ये ।

( ३ ) उपासकानां साम्प्रतमेतस्मिन् मलयकेतुकटके अनुकुलेनाऽननुकूलेन वा, अगृहीतमुद्रेण न गम्यते ।

( ४ ) भदन्त ! कथय कुतः खल्वयम् ?

---

एव नौ तत्र कर्णधारो नाविक इव लेख इत्यर्थः ) ।

मुण्डितमुण्ड इति । मुण्डितो लूनकेशो मुण्डो यस्य स मुण्डितमुण्डः लूनकेशमस्तकः सन् नक्षत्राणि प्रस्थानदिवसं पृच्छसि जिज्ञाससे मुण्डनात्प्राक् नक्षत्रप्राशस्त्यपृच्छेव प्रस्थानात्प्राक् दिवसप्राशस्त्यजिज्ञासा युक्ता पश्चान्निष्फलैवेत्यर्थः ।

साम्प्रतमिति । साम्प्रतम् अधुना किं जातं किं भूतमित्यर्थः । नाहं प्रस्थितोऽस्मि किन्तु प्रस्थातुकाम इति साम्प्रतमपि प्रस्थानयोग्यदिवसनिर्णये न कोऽपि बाधक इति भावः ।

साम्प्रतमिति । अनुकूलेन प्रशस्तेन अननुकूलेनाऽप्रशस्तेन वा प्रस्थानदिवसेन न किञ्चित्प्रयोजनं यतः साम्प्रतमिदानीम् एतस्मिन् मलयकेतुकटके मलयकेतुशिबिरे ( सैन्यावासे ) अगृहीता मुद्रा येन सोऽगृहीतमुद्रस्तेनाऽगृहीतमुद्रेण अप्राप्तमुद्राङ्केन पुरुषेणेति शेषः । न गम्यते न प्रविश्यते । अप्राप्तराक्षसनामाङ्कितमुद्राङ्कानां पुरुषाणां मलयकेतुशिबिरेऽप्रवेशात्तव प्रस्थानदिवसाऽऽनुकूल्याऽऽननुकूल्यजिज्ञासा व्यर्थैवेति भावः ।

कथयेति । कुतः कस्माद्दिवसादारभ्य अयं नियमो जात इत्यर्थः ।

क्षपणकः--सावका ! णिसामेहि, पढ़मं दाव एत्थ मलअकेदुकडए लोअस्स अणिवालिअणिक्कमणप्पवेसो आसो। दाणों इदो पच्चास-रणे कुसुमउरे, ण कोवि अमुद्दालंच्छिदो णिक्कमिदुं प्पविसिदुं वा अ-णुमोदीअदि। ता जइ भाउराअणस्स मुद्दालंच्छिदोसि, तदो गच्छ वोसत्थो, अण्णधा णिव्वत्तिअ णिउक्कण्ठं चिट्ठ। मा तुमं गुम्मट्ठाणा-धिवेहि संजमिदकलचलणो राअउलं प्पवेसीअसि। ( १ )

सिद्धार्थकः—किं ण आणादि भदन्तो, जधा अमच्चरक्खसस्स के-लिअरो अन्तिओ सिद्धत्थओ अहं त्ति ? ता अमुद्दालंच्छिदं पि मं णि-क्कमन्तं कस्से मत्ती णिवारेदुं ? ( २ )

---

( १ ) उपासक! निशामय, प्रथमं तावदत्र मलयकेतुकटके लोक-स्यानिवारितनिष्क्रमणप्रवेशावास्ताम् इदानीमितः प्रत्यासन्ने कुसुमपुरे, न कोऽप्यमुद्रालाञ्छितो निष्क्रमितुं प्रवेष्टुं वाऽनुमोद्यते। तद् यदि भागु-रायणस्य मुद्रालाञ्छितोऽसि, तदा गच्छ विश्वस्तः, अन्यथा निवृत्य निरु-त्कण्ठं तिष्ठ। मा त्वं गुल्मस्थानाधिपैः संयमितकरचरणो राजकुलं प्रवेश्यसे।

( २ ) किं न जानाति भदन्तः, यथा अमात्यराक्षसस्य केलिकरोऽ-

---

निशामयेति। निशामय आकर्णय त्वमिति शेषः। प्रथमं तावत् ( तावच्छ-ब्दो वाक्यालंकारे) पूर्वम् मलयकेतुकटके मलयकेतुशिबिरे लोकस्य जनस्य अनिवा-रितनिष्क्रमणप्रवेशावप्रतिषिद्धनिर्गमागमावास्ताम्। इदानीं साम्प्रतम् इतः प्रत्यासन्ने अस्मान्निकटे कुसुमपुरे तन्नामनगरे न मुद्रालाञ्छितोऽमुद्रालाञ्छितः अप्राप्तनिष्क्रमणप्रवेशनिदेशः कोऽपि पुरुषः निष्क्रमितुं निर्गन्तुं प्रवेष्टुमन्तर्गन्तुं वा नानुमोद्यते नानुमन्यते। तत्तस्माद्यदि चेत् भागुरायणस्य मलयकेतुमित्रवेशिनश्चाण-क्यप्रणिधेर्मुद्रालाञ्छितो मुद्राङ्कितोऽसि त्वमिति शेषः, तदा विश्वस्तो निर्भीकः सन् गच्छ याहि, अन्यथा मुद्राङ्कनाऽभावे निवृत्य परावृत्य निरुत्कण्ठं निरुत्सुकं यथा स्यात्तथा तिष्ठ वर्तस्व। गुल्मस्थानाधिपैः प्रहरिभिः संयमितकरचरणः सम्बद्धहस्तपादः सन् त्वं राजकुलं नृपालयं मा प्रवेश्यसे अन्तर्नीयसे। अमुद्राङ्क-नस्य तत्र गमने राजकीयशासनागारे हस्तपादौ संयम्य वासः स्यादिति भावः।

किमिति। भदन्तो ज्योतिषिको भवान् किं न जानाति किं नावगच्छति,

क्षपणकः—सावका ! रक्खसस्स पिसाचस्स वा केलिअरो होहि । णत्थि उण दे अमुद्दालंच्छिदस्स इदो णिक्कमणोवाओ । (१)

सिद्धार्थकः- भदन्त ! ण कुप्य, भण मे कज्जसिद्धी होदुत्ति । (२)

क्षपणकः—सावका ! गच्छ होदु दे कज्जसिद्धी । अहंपि भागुराअणादो पाडलिउत्तं गन्तुं मुद्दं पडिच्छेमि । (३)

( इत्युभौ निष्क्रान्तौ ) ।

( इति प्रवेशकः ) ।

---

न्तिकः सिद्धार्थकोऽहमिति ? तद् अमुद्रालाञ्छितमपि मां निष्क्रामन्तं कस्य शक्तिर्निवारयितुम् ?

( १ ) उपासक ! राक्षसस्य पिशाचस्य वा केलिकरो भव। नास्ति पुनस्ते अमुद्रालाञ्छितस्य निष्क्रमणोपायः ।

( २ ) भदन्त ! न कुप्य, भण मे कार्य्यसिद्धिर्भवतु इति ।

( ३ ) उपासक गच्छ, भवतु ते कार्य्यसिद्धिः । अहमपि भागुरायणात् पाटलिपुत्रं गन्तुं मुद्रां प्रतीच्छामि ।

---

यथा यत्र अमात्यराक्षसस्य मन्त्रिराक्षसस्य केलिकरः हास्यकरः रहस्यवित् अन्तिको निकटवर्त्ती अहं सिद्धार्थको नामेति, तत्तस्मात्कारणात अमुद्रालाञ्छितमलब्धाङ्गुलिमुद्राङ्कनमपि निष्क्रामन्तं निर्गच्छन्तं मां निवारयितुं प्रतिषेद्धुं कस्य जनस्येति शेषः । शक्तिः सामर्थ्यमस्तीति शेषः ।

राक्षसस्येति । राक्षसस्य रक्षसो निशाचरस्येत्यर्थः।वाऽथवा पिशाचस्य भूतयोनेः। केलिकरो निकटवर्त्तीत्यर्थः। भव वर्त्तताम् पुनर्भूयः अमुद्रालाञ्छितस्याऽऽप्रासमुद्राङ्कनस्य ते तव इतः कुसुमपुरात् निष्क्रमणोपायो निर्गमोद्योगो नास्ति न वर्तते ।

अहंपीति । अहमपि भागुरायणात् मुद्रामंगुलिमुद्रां याचे भिक्षे ईप्सितकार्यसम्पादनायेति शेषः । मुद्रायाचककपटेन भागुरायणम्प्रति गमिष्यामीति भावः । ( इदं कार्यमार्गणं नाम विरोधोऽङ्गम् ) । निष्क्रान्तौ रङ्गशालातः सिद्धार्थकक्षपणकौ निर्गतावित्यर्थः ।

प्रवेशक इति । वृत्ताश्च वर्त्तिष्यमाणाश्च वृत्तवर्त्तिष्यमाणास्तेषां वृत्तवर्त्ति-

( ततः प्रविशति पुरुषेणानुगम्यमानो भागुरायणः ) ।

भागुरायणः—( आत्मगतम् । ) अहो !! विचित्रताऽस्य चाणक्यनीतेः । कुतः ?—

मुहुर्लक्ष्योद्भेदा मुहुरधिगमाभावगहना
मुहुः सम्पूर्णाङ्गी, मुहुरतिकृशा कार्य्यवशतः ;
मुहुर्भ्रश्यद्बीजा, मुहुरपि बहुप्रापितफले-
त्यहो !! चित्राकारा नियतिरिव नीतिर्नयविदः ॥ ३ ॥

---

ष्यमाणानां प्रथमाङ्के चाणक्यलेखितपत्रवृत्तान्तानां वृत्तानां, भागुरायणसकाशान्मुद्रायाचनादिवृत्तान्तानां वर्त्तिष्यमाणानां च कथांशानां नीचपात्राभ्यां क्षपणकसिद्धार्थकाभ्यां प्रयोजितत्वात् संसूचनादयं प्रवेशक इत्यर्थः । तदुक्तम् ।

वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः ।
प्रवेशकस्तु नाटयेऽङ्के नीचपात्रप्रयोजितः ॥ इति ।

मुहुरिति । मुहुर्वारंवारं लक्ष्योऽनुमेय उद्भेदः आविर्भावो यस्याः सा लक्ष्योद्भेदा अनुमेयाविर्भावा मुहुः कदाचित् अधिगमस्याभावोऽधिगमाभावस्तेन गहना अधिगमाभावगहना ज्ञानाभावदुर्बोधा मुहुः कदाचित् सम्पूर्णान्यङ्गानि यस्याः सा सम्पूर्णाङ्गी प्रचितावयवा मुहुः कदाचित् कार्यवशतः कृत्यानुरोधात् अतिकृशाऽतिक्षीणा स्तोकरूपगम्येत्यर्थः । मुहुः कदाचित् भ्रश्यद्बीजं यस्याः सा भ्रश्यद्बीजा नश्यत्कारणा मुहुः कदाचिदपि बहु विशेषं यथा स्यात्तथा प्रापितानि फलानि यया सा बहुप्रापितफला साफल्यमुपगता नियतिर्दैवमिव ( पक्षान्तरे ) मुहुर्लक्ष्योद्भेदा मुखसन्धावल्पोद्दिष्टा सती बहुधा विस्तारिणी मुहुरधिगमाभावगहना प्रतिमुखे लक्ष्यालक्ष्यव्यक्तेर्दुर्बोधाऽतिक्षीणा च मुहुः सम्पूर्णाङ्गी विमर्शे बीजस्य स्पष्टदर्शनात्परिपूर्णावयवा मुहुरतिकृशा कार्यवशतः, प्रतिमुखे लक्ष्यालक्ष्यव्यक्तेरतिक्षीणा च मुहुर्भ्रश्यद्बीजा कदाचिद्दृष्टनष्टान्वेषणान्नश्यदुद्योगा मुहुरपि बहुप्रापितफला निर्वहणे सर्वार्थोपसंहारादुपगतसाफल्या नयविदो नीतिज्ञस्य नीतिर्नयः चित्राकारा बहुप्रकारा अहो आश्चर्यम् । यथा विधेर्वैचित्र्यं तथा नीतिज्ञनीतेरिति भावः । असकृन्मुहुःशब्दपाठादनवीकृतत्वदोषः । काव्यलिङ्गानुप्राणितोपमाऽप्रस्तुतप्रशंसयोः संसृष्टिः । नियति—नीत्योरुपमानोपमेययोरिवशब्दस्यौपम्यवाचकस्य चित्राकारत्वरूपसाधारण-

( प्रकाशम् ) भद्र भासुरक ! न मां दूरीभवन्तमिच्छति कुमारः । अतोऽस्मिन्नेवास्थानमण्डपे विन्यस्यतामासनम् ।

पुरुषः—एदं आसनं, उपविसदु अज्जो । ( १ )

भागुरायणः—( उपविश्य । ) भद्र भासुरक ! यः कश्चिन्मुद्रार्थी मां द्रष्टुमिच्छति, स त्वया प्रवेशयितव्यः ।

पुरुषः—जं अज्जो आणवेदि । ( २ )

( इति निष्क्रान्तः । )

भागुरायणः—( स्वगतम् । ) कष्टमेवमप्यस्मासु स्नेहवान् कुमारो मलयकेतुरतिसन्धातव्य इत्यहो दुष्करम् । अथवा—

कुले, लज्जायाञ्च, स्वयशसि च, माने च, विमुखः
शरीरं विक्रीय क्षणिकधनलाभाद्धनवति ।

( १ ) एतदासनम् , उपविशत्वार्य्यः ।
( २ ) यदार्य्य आज्ञापयति ।

धर्मस्य चोपादानाच्छ्रौती पूर्णोपमा, लक्ष्योद्भेदादीनां चित्राकारत्वे हेतुत्वेन काव्यलिङ्गम्, सामान्यरूपेण नीतिज्ञनीत्याधिक्यकथनाद्विशेषरूपेण चाणक्यनीत्याधिक्यप्रतीतेरप्रस्तुतप्रशंसेत्यलङ्कारत्रयसंघटनप्रकारः । प्रसादगुणः । पाञ्चाली रीतिः । शिखरिणीवृत्तम् ॥ ३ ॥

न मामिति । कुमारः शिशुर्मलयकेतुर्मां दूरीभवन्तमनिकटवर्त्तिनं नेच्छति नाभिलषति । मुद्रां दातुं शिविरद्वार्येवस्थानरूपदूरीभवनं न मे कुमाराय रोचत इति भावः । अतोऽस्माद्धेतोः अस्मिन्नेव आतिष्ठन्ति जना अत्रेत्यास्थानं तदेव मण्डपमास्थानमण्डपं तस्मिन्नास्थानमण्डपे सदोरूपजनाश्रये ।

मण्डपोऽस्त्री जनाश्रय इत्यमरः ।

आसनं विन्यस्यतां संस्थाप्यताम् ॥

एवमपीति । कष्टं खेदः एवमपि क्षणमात्रं मदनिकटवर्तनात्मकविरहासहनेऽपीत्यर्थः। अस्मासु प्रियपात्रेषु स्नेहवान् अनुरागयुक्तः कुमारो मलयकेतुः पर्वतकपुत्रः अतिसन्धातव्यः प्रतारणीयः इति मलयकेतुप्रतारणं दुःखेन कर्तुं योग्यं दुष्करं कठिनमित्यर्थः । अहो आश्चर्यम् । तदेव कष्टं निराकरोति अथवेति ।

कुल इति । परतन्त्रोऽस्यायत्तः पुरुषः कुले वंशे लज्जायां त्रपायां स्वयशसि

तदाज्ञां कुर्वाणो हितमहितमित्येतदधुना,
विचारातिक्रान्तः, किमिति परतन्त्रो विमृशति ॥४॥

( ततः प्रविशति प्रतीहार्य्यनुगतो मलयकेतुः ) ।

मलयकेतुः—( स्वगतम् । ) अहो ! राक्षसं प्रति मे विकल्पबाहुल्या-दाकुला बुद्धिर्न निश्चयमधिगच्छति । कुतः ?—

भक्त्या नन्दकुलानुरागदृढया नन्दान्वयालम्बिना,
किं चाणक्यनिराकृतेन कृतिना मौर्य्येण सन्धास्यते ? ।
स्थैर्य्यं भक्तिगुणस्य वा विगणयन् किं सत्यसन्धो भवे-
दित्यारूढकुलालचक्रमिव मे चेतश्चिरं भ्राम्यति ॥ ५ ॥

आत्मकीर्त्तौ माने प्रतिष्ठायां च विमुखः विरक्तः सन् क्षणिकधनलाभात् अल्पकालिकवित्तप्राप्त्याशया धनवति वित्तशालिनि जने शरीरं कायं विक्रीय तदायत्तं कृत्वा तदाज्ञां कुर्वाणः तन्नियोगं सम्पादयन् अत एव विचारातिक्रान्तः परित्यक्तसदसद्विवेकः अधुना साम्प्रतम् एतत् हितमेतत् अहितमिति उचितमनुचितमित्यर्थः । किमिति विमृशति कथं विचारयति नैव विचारयतीत्यर्थः । परायत्तस्यास्वाधीनत्वान्नैव सदसद्विवेको भवतीति भावः । परतन्त्रस्य हिताहितयोरविमर्शे कुत्कादिषु वैमुख्यस्य धनाप्तिवाञ्छाहेतुकशरीरविक्रयणस्य स्वाम्यादेशपालनकर्तृत्वस्य विचारातिक्रान्तस्य चैतेषां पदार्थानां हेतुत्वेन पदार्थहेतुकं काव्यलिङ्गमलंकारः । कथं विमृशतीत्यनेन नैव विमृशतीत्यर्थान्तरावगमादर्थापत्तिरलंकारो येन सन्देहसङ्करः सापेक्षत्वात् । प्रसादगुणः । वैदर्भी रीतिः । शिखरिणीवृत्तम् ॥ ४ ॥

( मलयकेतुवचनेन राक्षसायत्तीकरणात्मककार्यस्योपक्षेपणादिदं कार्योपक्षेपणं नाम सन्ध्यङ्गम् ) ।

तत इति । ततस्तदनन्तरं भागुरायणविमर्शोत्तरमित्यर्थः । प्रतीहार्या अनुगतः प्रतीहार्यनुगतो दौवारिक्यनुस्रियमाणो मलयकेतुः प्रविशति रङ्गस्थानमिति शेषः । रङ्गशालाभ्यन्तरगतो भवतीत्यर्थः ।

स्वगतमिति । अन्तर्निस्पष्टं यथा तथा प्रवीतीत्यर्थः । अहो आश्चर्यम् सम्प्रति सुबुद्धयपराख्यमन्त्रिणं प्रति विकल्पबाहुल्यात्सन्देहाधिक्यात् आकुला संक्षुब्धा मे मम बुद्धिर्मतिः निश्चयं न गच्छति न प्राप्नोति तदेव दर्शयति कुत इति ।

भक्त्येति । नन्दस्य कुलं नन्दकुलं तत्रानुरागो नन्दकुलानुरागस्तेन दृढा

( प्रकाशम् ) विजये ! क भागुरायणः ?

प्रतीहारी—कुमार ! एसो क्खु कडआदो णिक्कमिदुकामाणं मुद्दासंपदाणं अणुचिट्ठदि । ( १ )

( १ ) कुमार ! एष खलु कटकान्निष्क्रमितुकामानां मुद्रासम्प्रदानमधितिष्ठति ।

तया नन्दकुलानुरागदृढया नन्दान्ववायस्नेहस्थिरया भक्त्या सेवया अनुरागेणेति यावत्। हेतुना (निराकृतमिति भावे क्तः,) चाणक्यस्य निराकृतं निराकरणं येन स तथोक्तस्तेन चाणक्यनिराकृतेन कौटिल्यस्य निराकरणेनेत्यर्थः (व्यधिकरणपदबहुव्रीहिः) नन्दान्वयमवलम्बते इति नन्दान्वयावलम्बी तेन नन्दान्वयावलम्बिना नन्दवंशाश्रयिणा कृतिना कुशलेन मौर्येण चन्द्रगुप्तेन सह किं सन्धास्यते सन्धिं करिष्यति राक्षस इति शेषः । वा अथवा भक्तिरेव गुणो यस्य स भक्तिगुणस्तस्य भक्तिगुणस्य अनुरागात्मकगुणशालिनो ममेति शेषः, स्थैर्यं दार्ढ्यमधिगणयन् विचारयन् सत्या सन्धा यस्य स सत्यसन्धः किं सत्यप्रतिज्ञो भवेत् , आरूढं कुलालचक्रं येन तदारूढकुलालचक्रम् अधिष्ठितकुम्भकारचक्रमिव मे मम चेतो हृदयं चिरं बहुकालं भ्राम्यति सन्देहास्पदं भवतीत्यर्थः । चन्द्रगुप्तस्य नन्दवंशीयत्वेन राक्षसस्य तत्रानुरागस्थैर्यमुत मयि राज्यप्रदानाय सत्यप्रतिज्ञत्वेन दृढानुराग इत्युभयविधसंशयापन्नं मे हृदयमिति भावः । राक्षसस्य चन्द्रगुप्तामात्यपदवीकामनाहेतुगर्भस्य चाणक्यनिराकृतेनेति विशेषणस्य चन्द्रगुप्तसन्धिपक्षप्राबल्यबोधकत्वं कृतेनेति विशेषणस्य च कृतकार्यस्य मौर्यस्य न पुनश्चाणक्येन सह सन्धिः स्यादित्यभिप्रायबोधकत्वम् इत्युक्तोभयविशेषणस्य साभिप्रायत्वेन परिकरालङ्कारः । तस्य चारूढकुलालचक्रमित्युत्प्रेक्षसंसृष्टस्य विकल्पनामाऽलङ्कारेण साङ्कर्यम् । विकल्पालंकारलक्षणं दर्पणोक्तं यथा—

विकल्पस्तुल्यबलयोर्विरोधश्चातुरीयुतः ।

इति प्रसादो गुणः । गौडी रीतिः । शार्दूलविक्रीडितं वृत्तम् ॥ ९ ॥

एष इति । एष भागुरायणः कटकात् शिबिरात् निष्क्रमितुं कामो येषां ते तथोक्तास्तेषां निष्क्रमितुकामानां निर्गन्तुमुत्सुकानां पुरुषाणामिति शेषः। मुद्राणां सम्प्रदानं मुद्रासम्प्रदानम् गमनागमनादेशपत्रवितरणमित्यर्थः । अनुतिष्ठति करोति ।

मलयकेतुः—विजये ! मुहूर्त्तं निभृतपदसञ्चारा भव, यावदस्य पराङ्मुखस्यैव पाणिभ्यां नयने पिदधामि ।

प्रतीहारी—जं कुमारो आणवेदि । ( १ )

भासुरकः—( प्रविश्य । ) अज्ज ! एसो क्खु खवणओ मुद्दाणिमित्तं अज्जं पेक्खिदुमिच्छदि । ( २ )

भागुरायणः—प्रवेशय ।

भासुरकः—जं अज्जो आणवेदि । ( ३ )

( इति निष्क्रान्तः )

क्षपणकः—( प्रविश्य । ) सावकाणं धम्मविद्धी होदु । ( ४ )

भागुरायणः—( नाट्येनावलोक्य स्वगतम् । ) अये राक्षसस्य मित्रं,

---

( १ ) यत् कुमार आज्ञापयति ।
( २ ) आर्य्य ! एष खलु क्षपणको मुद्रानिमित्तमार्य्यं प्रेक्षितुमिच्छति ।
( ३ ) यदार्य्य आज्ञापयति ।
( ४ ) उपासकानां धर्म्मवृद्धिर्भवतु ।

---

विजय इति । इदं मलयकेतुप्रतीहारीनाम, मुहूर्तं किञ्चित्कालपर्यन्तं निभृतः पदसञ्चारो यस्याः सा निभृतपदसञ्चारा त्यक्तचरणप्रक्षेपा निवृत्तगमनेति यावत् भव तिष्ठ, यावत् यत्कालपर्य्यन्तम् पराङ्मुखस्यपरावर्तमानस्य ( असंमुखाननस्य ) अस्य भागुरायणस्य नयने नेत्रे पाणिभ्यां कराभ्यां पिदधामि छादयामि पिदधामीत्यत्राप्युपसर्गाकारस्य—

वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।

इत्यनेन लोपः । ( मलयकेतुकर्तृकभागुरायणनयनपिधानान्मलयकेतु भागुरायणयोः शिशुत्ववशीकरणनैपुण्ययोरवगमः ) । तेनेदानीं महत्प्रयोजनमनुष्ठेयं भविष्यतीति पूर्वमुपक्षिप्तस्य सम्प्रति जीवसिद्धिना क्रियमाणस्य मलयकेत्वतिसन्धानरूपस्य महाप्रयोजनस्यावसरप्रदानाय च कविसंविधानमिदमित्यवसेयम् ) मलयकेतोर्विजयाम्प्रत्युक्तेः कविनिबद्धत्वे प्रागुक्तोभयतात्पर्यमेव बीजम् ।

नाट्येनेति । नाट्येन नटोचितव्यापारेण अनुकारात्मकेनेत्यर्थः । स्वगतं मनस्येव प्रतीतीत्यर्थः । अये ! ( कोमलालापे सम्बोधनम् ) राक्षसस्य नम्रसचिवस्य

जीवसिद्धिः!! (प्रकाशम्।) भदन्त! न खलु राक्षसस्य प्रयोजनमेव किञ्चिदुद्दिश्य गम्यते?

क्षपणकः—(कर्णौ पिधाय।) सन्तं पावं, सन्तं पावं, सावका! तहिं ज्जेव गमिस्सं, जहिं रक्खसस्स पिसाचस्स वा णामं पि ण सुणीअदि। (१)

भागुरायणः—भदन्त। बलीयांस्ते सुहृदि प्रणयकोपः। तत् किमपराद्धं राक्षसेन भदन्तस्य?

क्षपणकः—सावका! ण मम किं पि रक्खसेण अवलद्धं, सअं ज्जेव्व मन्दभाओ अत्तणो कम्मसु लज्जामि। (२)

भागुरायणः—भदन्त! वर्द्धयसि मे कुतूहलम्—"।

मलयकेतुः—(स्वगतम्।) मम च।

---

(१) शान्तं पापं शान्तं पापम् उपासक! तत्रैव गमिष्यामि, यत्र राक्षसस्य पिशाचस्य वा नामापि न श्रूयते।

(२) उपासक! न मे किमपि राक्षसेनापराद्धं, स्वयमेव मन्दभाग्य आत्मनः कर्मसु लज्जे।

---

मित्रं सुहृत जीवसिद्धिः क्षपणकवेशधारी जीवसिद्धिनामा समागतः। प्रकाशं व्यक्तं ब्रवीति, भदन्त ज्योतिर्विद्! राक्षसस्य नन्दसचिवस्य किञ्चित्किमपि प्रयोजनं कार्यमुद्दिश्य निमित्तीकृत्यैव न खलु गम्यते नैव गम्यते शिविरादिति शेषः। किन्तु राक्षसकार्यं निमित्तीकृत्यैव गम्यत इति काकुः। एतद्द्वारा मलयकेतवतिसन्धा विधेयमिति तात्पर्यम्।

बलीयानिति।सुहृदि मित्रे राक्षसे विषय इत्यर्थः। बलीयान् महान् प्रणयकोपः स्नेहेन क्रोधः, तत्तस्मात् राक्षसेन भदन्तस्य ज्योतिषिकस्य भवतः किमपराद्धं कोऽपराधः कृतः।

न मे इति। राक्षसेन किमपि नापराद्धं कोऽप्यपराधो न कृतः, किन्तु स्वयमेव मन्दभाग्यः भाग्यहीनोऽहम् आत्मनः कर्मसु स्वस्य कृत्येषु सुहृद्द्रोहात्मकेष्वित्यर्थः, (एतदव्यवहितक्षणमेवैतेन राक्षसकर्तृकपर्वतककर्मकहननस्याभिधास्यमानत्वादिति तदाशयः) लज्जे जिह्मेमि।

भागुरायणः—"-श्रोतुमिच्छामि ।

मलयकेतुः—( स्वगतम् ) । अहमपि ।

क्षपणकः—सावका ! किं एदिणा असुणिदव्वेण सुदेण ? (१)

भागुरायणः—भदन्त ! यदि रहस्यं, तदा तिष्ठतु ।

क्षपणकः—सावका ! ण हि रहस्सं । ( २ )

भागुरायणः—तर्हि कथ्यताम् ।

क्षपणकः—सावका ! णत्थि एदं, तधावि ण कधइस्सं अदिणिसंसं । ( ३ )

भागुरायण—भदन्त ! अहमपि मुद्रां न दास्यामि ।

क्षपणकः—( स्वगतम् । ) युक्तमिदानीमर्थिने कथयितुम् । (प्रकाशम्) का गदी ? एसे णिवेदेमि, सुणादु सावके । अत्थि दाव हगे अधणणा पढमं पाडलिउत्ते णिवसमाणो लक्खसस्स मित्तत्तणं उवगदे । तहिं अवसले लक्खसेण गूढं विसकण्णाप्पओअं समुप्पादिअ, घादिदे पव्वदीसले । ( ४ )

---

( १ ) उपासक ! किमेतेनाश्रोतव्येन श्रुतेन ?

( २ ) उपासक ! न हि रहस्यम् ।

( ३ ) उपासक ! नास्तीदं, तथापि न कथयिष्याम्यतिनृशंसम् ।

( ४ ) का गतिः ? एष निवेदयामि, शृणोतु उपासकः । अस्ति तावदहमधन्यः प्रथमं पाटलिपुत्रे निवसन् राक्षसस्य मित्रत्वमुपगतः । तस्मिन्नवसरे राक्षसेन गूढं विषकन्याप्रयोगं समुत्पाद्य घातितो देवः पर्वतेश्वरः ।

---

किमेतेनेति । एतेनानेन अश्रोतव्येन आकर्णनायोग्येन श्रुतेन श्रवणपथगतेन विषयेन ( उदन्तेन ) किं, न किमपि प्रयोजनमित्यर्थः ।

यदिति । यद्वृत्ताभिधाननिषेधोऽभिमतो भवतस्तत् यदि रहस्यमप्रकाश्यं तत्तदा तिष्ठतु नाभिधेहीत्यर्थः ।

नेति । तद्वृत्तं न रहस्यं न गोप्यं किन्तु अतिनृशंसमतिशयक्रूरमित्यर्थः । अतः क्रूरवृत्ताभिधाने जिह्रेमीति भावः ।

युक्तमिति । इदानीं अर्थिने श्रवणाभिलाषिणे प्रार्थनां कुर्वते च अस्मै भागु

मलयकेतुः—( सबाष्पमात्मगतम् । ) कथं, राक्षसेन घातितस्तातो न चाणक्येन ?

भागुरायणः—भदन्त ! ततस्ततः ?

क्षपणकः—तदो हगे लक्खसस्स मित्तं कदुअ, चाणक्कहदएण सणिकालं णअरादो णिव्वासिदो । दाणीं पि लक्खसेण अणेअकज्जकुसलेण किंपि तादिसं आलहीअदि, जेण हगे जीअलोआदो णिक्कासिज्जेमि । ( १ )

भागुरायणः—भदन्त ! प्रतिश्रुतराज्यार्द्धमयच्छता चाणक्यहतकेनेदमकार्य्यमनुष्ठितं, न राक्षसेनेति श्रुतमस्माभिः ।

क्षपणकः—( कर्णौ पिधाय । ) सन्तं पावं । सावका ! चाणक्को विसकण्णाए णामपि ण जाणादि । तेण ज्जेव दुट्ठबुद्धिणा लक्खसेण एसा अकज्जसिद्धी किदा । ( २ )

( १ ) ततोऽहं राक्षसस्य मित्रं कृत्वा, चाणक्यहतकेन सनिकारं नगरान्निर्वासितः । इदानीमपि राक्षसेनानेककार्य्यकुशलेन किमपि तादृशमारभ्यते, येनाहं जीवलोकान्निष्कासिष्ये ।

( २ ) शान्तं पापम् । उपासक ! चाणक्यो विषकन्याया नामापि न जानाति । तेनैव दुष्टबुद्धिना राक्षसेनैषाऽकार्य्यसिद्धिः कृता ।

रायणायेति शेषः । कथयितुमभिधातुं युक्तं समुचितम् मदुक्तमादरेण श्रुतं मन्येतेति भावः । प्रकाशं सुस्पष्टं ब्रवीति का गतिः क उपायः, एषोऽहं निवेदयामि कथयामि तद्वृत्तमिति शेषः । उपासको भवान् शृणोतु ( तावच्छब्दो वाक्यालंकारे ) प्रथमं प्राक् अधन्यो भाग्यहीनोऽहं पाटलिपुत्रे तदाख्यनगरे निवसन् तिष्ठन् राक्षसेन सह मित्रत्वं सख्यमुपगतः प्राप्तोऽस्मि । तस्मिन्नवसरे तत्क्षणे राक्षसेन नन्दसचिवेन गूढं गुप्तं यथा स्यात्तथा विषकन्याप्रयोगं विषकन्यात्मकाभिचारोपायं समुत्पाद्य कृत्वा देवो राजा पर्वतेश्वरो मलयकेतुतातो घातितो विनाशितः मम हस्तेनेति शेषः ।

तत इति । ततस्तदनन्तरम् अहं राक्षसस्य नन्दसचिवस्य मित्रं कृत्वा सुहृदित्युद्दिश्य यद्वा षष्ठ्यर्थस्याऽभेदत्वाद्राक्षसाऽभिन्नं (राक्षसं) मित्रं कृत्वेत्यर्थः । चाणक्यहतकेन दुष्टचाणक्येन सनिकारं सापमा ' था स्यात्तथा नगरात्पाटलिपुत्रनाम-

भागुरायणः—भदन्त ! कष्टमिदमियं मुद्रा दीयते, एहि कुमारं संश्रावयावः ।

मलयकेतुः—श्रुतं सखे ! श्रवणविदारणं वचः
सुहृन्मुखाद्रिपुमधिकृत्य भाषितम् ।
पितुर्वधव्यसनमिदं हि येन मे
चिरादपि द्विगुणमिवाद्य वर्द्धते ॥ ६ ॥

---

धेयात्पुरात् निर्वासितो निष्कासितः । इदानीमपि अनेकानि च तान्यकार्याणि अनेकाकार्याणि तेषु कुशलस्तेनानेकाकार्यकुशलेन बहुदुष्टकार्यकारिणा राक्षसेन किमपि तादृशं पर्वतेश्वरघातनसदृशं ( मलयकेतुनिग्रहमपीति गूढतात्पर्यम् ) आरभ्यते क्रियते येन यत्कार्यानुष्ठानेन अहं जीवलोकात् संसारात् निर्वासिष्ये निष्काशिष्ये । ( प्राक् राक्षसप्रयुक्तविषकन्यात्मकाभिचारोपायद्वारा पर्वतेश्वरघातनमुद्दिश्य नगरादहं निष्कासितश्चाणक्येन साम्प्रतं राक्षसकर्त्तृकाकार्यानुष्ठानद्वारा नान्यविनाशः किन्तु ममैव विनाश इत्यवगम्य प्रागेव स्थानान्तराश्रयणमुचितमिति भावः ) । ( इदं भागुरायण भदन्तयोरन्योन्यपरिभाषणं जल्पनम् । )

प्रतिश्रुतेति । प्रतिश्रुतं च तद्राज्यार्द्धं प्रतिश्रुतराज्यं अङ्गीकृतराज्यार्द्धभागम् । अयच्छता अददता चाणक्यहतकेन दुष्टचाणक्येन इदम् अकार्यं पर्वतेश्वरघातनात्मकं निन्दितं कर्म कृतमनुष्ठितं न राक्षसेन। राक्षसकर्त्तृकः पर्वतेश्वरवधो नेत्येवम् अस्माभिः श्रुतम् आकर्णितम् ।

श्रुतमिति । हे सखे सुहृत् ! रिपुं पर्वतविनाशेन कृत्रिमशत्रुं राक्षसमित्यर्थः । अधिकृत्योद्दिश्य भाषितं कथितं श्रवणविदारणं श्रोत्रपीडाजनकं वचो वाक्यं सुहृन्मुखात् क्षपणकाननात् श्रुतमाकर्णितम् । येन श्रवणेन मे मम इदं पितुर्वधव्यसनं तातविनाशजन्यदुःखं चिरादपि चिरकालजातमपि अद्य साम्प्रतं द्विगुणमिव अधिकमिव वर्द्धते वृंहते । राक्षसकृतकतातविनाशदुःखं चिरकालिकमपि क्षपणकमुखोदितं सद् द्विगुणमिव जातमिति भावः । द्विगुणमिवेत्यत्रोत्प्रेक्षासूचकेवशब्दसद्भावेन मलयकेतोस्तातविनाशजन्यदुःखस्याद्वैगुण्येऽपि द्वैगुण्योत्प्रेक्षणादुत्प्रेक्षालंकारः । प्रसादगुणः । पाञ्चाली रीतिः । रुचिरावृत्तम् । उक्तं तल्लक्षणं छन्दोमञ्जर्यां यथा—

नभौ सजौ गिति रुचिरा चतुर्थ हैः ॥ ६ ॥

क्षपणकः--( स्वगतम् ।) अये श्रुतं मलयकेतुहतकेन !! कृतार्थोऽस्मि ।

( इति निष्क्रान्तः ) ।

मलयकेतुः--( प्रत्यक्षवदाकाशे लक्ष्यं बद्ध्वा । ) राक्षस ! युक्तमिदम् ।

मित्रं ममायमिति निर्वृतचित्तवृत्ति
विश्रंभतस्त्वयि निवेशितसर्वकार्यम् ।
तातं निपात्य, सह बन्धुजनाक्षितोयै-
रन्वर्थतोऽपि ननु राक्षस ! राक्षसोऽसि ॥ ७ ॥

---

श्रुतमिति । मलयकेतुहतकेन दुष्टेन मलयकेतुना श्रुतं मदुक्तं राक्षसदूषणमाकर्णितम् । हन्त हर्षेऽव्ययम् ।

हन्त हर्षेऽनुकम्पायां दैन्ये इत्यमरः ।

मदुक्तराक्षसापराधस्य मलयकेतुना श्रुतत्वाद्धर्षो जातः । अतः कृतार्थोऽस्मि ( तेनेदानीं महत्प्रयोजनमनुष्ठेयं भविष्यती ) ति पूर्वोक्तप्रयोजनानुष्ठानेन कृतकृत्योऽस्मीत्यर्थः । ( सुहृन्मुखाद्रिपुमधिकृत्येत्युक्त्या स्वस्मिन् सहृदयत्वेन विश्रब्धवचनत्वं राक्षसस्य रिपुत्वञ्च मलयकेतुना चित्ते स्थिरीकृतमिति कृतार्थतेति भावः ) ।
इदं बीजानुगुणकार्थप्रख्यापननिर्णयः ) ।

मित्रमिति । अयं राक्षसो मम मित्रं सुहृत् इति हेतोः त्वयि भवति राक्षसे इत्यर्थः, विश्रम्भतो विश्वासात् निवेशितं सर्वं कार्यं येन स निवेशितसर्वकार्यः अर्पितसकलकार्यभारः अत एव निर्वृता चित्तवृत्तिर्यस्य सनिर्वृतचित्तवृत्तिः निश्चिन्तमनोव्यापारः आसीदिति शेषः। ननु भो राक्षस ! तं तातं जनकं बन्धुजनाक्षितोयैः आत्मीयजननेत्रजलैः सह सार्द्धं निपात्य पातयित्वा विनाश्येत्यर्थः । अन्वर्थतोऽपि योगार्थादपि राक्षसोऽसि निशाचरो भवसि । न केवलं नाम्ना त्वं राक्षसोऽपि तु क्रूरकर्मकरणाद्यथार्थतो राक्षसोऽसीति भावः। मारणात्मकतातनिपातनक्षारणात्मकाक्षितोयनिपातनयोर्भेदेऽप्यभेदाध्यवसायादतिशयोक्तिमूलकः, तातनिपातनबन्धुजनाक्षितोयनिपातनयोः साहित्येनाभिधानात् सहोक्तिरलंकारः ।

सहार्थस्य बलादेकं यत्र स्याद्वाचकं द्वयोः ।
सा सहोक्तिर्मूलभूताऽतिशयोक्तिर्यदा भवेत ॥

इति दर्पणोक्तलक्षणात । प्रसादगुणः । वैदर्भी रीतिः । वसन्ततिलकं वृत्तम् ।

ज्ञेयं वसन्ततिलकं तभजा जगौ गः ॥ ७ ॥

भागुरायणः--( स्वगतम् । ) रक्षणीया राक्षसस्य प्राणा इत्यार्य्यादेशः-भवत्वेवं तावत् । ( प्रकाशम् ) कुमार ! अलमावेगेन ? आसनस्थं कुमारं किञ्चिद्विज्ञापयितुमिच्छामि ।

मलयकेतुः—( उपविश्य ) सखे ! किमसि वक्तुकामः ?

भागुरायणः—कुमार ! खल्वर्थशास्त्रव्यवहारिणामर्थवशादरिमित्रोदासीनव्यवस्था न लौकिकानामिव स्वेच्छावशात् । यतस्तस्मिन् काले सर्वार्थसिद्धिं राजानमिच्छतो राक्षसस्य चन्द्रगुप्तादपि बलीस्तया सुगृहीतनामा देवः पर्वतेश्वर एवार्थपरिपन्थी महानरातिरासीत ।

रक्षणीयेति । राक्षसस्य नन्दसचिवस्य प्राणाः जीवनं रक्षणीया पालनीया इत्येष आर्यादेशः चाणक्याज्ञा, येनोपायेन राक्षसप्राणविनाशो न स्यात्तादृश उपायः करणीयस्त्वयेति चाणक्यनिदेश इति भावः । आवेगेन क्रोधेनालं व्यर्थं क्रोधो न कार्य इत्यर्थः । आसनस्थम् आसने समुपविष्टं कुमारं भवन्तं किञ्चित्किमपि कार्यं विज्ञापयितुं निवेदयितुम् इच्छामि अभिलषामि ।

खल्विति । ( खलुशब्दो वाक्यालङ्कारार्थको निश्चयार्थको वा बोध्यः ) अर्थशास्त्रेण व्यवहर्तुं शीलमेषामित्यर्थशास्त्रव्यवहारिणस्तेषामर्थशास्त्रव्यवहारिणां नीतितन्त्रानुसरणशीलानां जनानामिति शेषः । अर्थवशात् प्रयोजनानुरोधात् अरिश्च मित्रं चोदासीनश्चारिमित्रोदासीनास्तेषु व्यवस्था व्यवस्थितिर्भवतीति शेषः, अयमरिः शत्रुः अयं मित्रं सखा अयमुदासीनो मध्यो न शत्रुर्न मित्रमित्यर्थः । एषु व्यवस्था विचारः प्रयोजनानुरोधेन भवतीत्यर्थः । लौकिकानां लोकानुसरणशीलनामिव स्वेच्छावशात् निजमनोरथानुरोधेन न तेषु व्यवस्थेत्यर्थः । नीतितन्त्रानुसरणशीलाः कार्यानुरोधेन शत्रुमित्रोदासीनान् विचारयन्ति लोकानुसरणशीलास्तु स्वेच्छानुरोधेन तान्विचारयन्ति जानन्तीति नीतितन्त्रानुसरणशीलानां लोकानुसरणशीलानाञ्च परस्परं भेदः । यतो यस्मात् तस्मिन्काले सर्वार्थसिद्धिं राक्षसमित्रवेशिचाणक्यप्रणिधिं राजानं नृपतिमिच्छतः कामयमानस्य राक्षसस्य नन्दसचिवस्य चन्द्रगुप्तादपि मौर्यादपि बलीयस्तया बलवत्तया सुगृहीतनामा प्रातःस्मरणीयाभिधेयः देवो नृपः पर्वतेश्वरो मलयकेतुतात एव अर्थपरिपन्थी कार्यप्रतिद्वन्द्वी महान् प्रबलोऽरातिः शत्रुरासीत । तस्मिंश्च देवे पर्वतेश्वरे राक्षसेन इदमकार्यं विषकन्याप्रयोगरूपमनुष्ठितं कृतमित्यतो हेतोः अत्रास्मिन्विषये पर्वतकमारणात्मके इत्यर्थः । अतिदोषमाधिकापराधं

तस्मिंश्च काले, राक्षसेनेदमनुष्ठितमिति नातिदोषमत्र पश्यामि। पश्यतु कुमारः—

मित्राणि शत्रुत्वमपानयन्ती,
मित्रत्वमर्थस्य वशाच्च शत्रून्।
नीतिर्नयत्यस्मृतपूर्ववृत्तं,
जन्मान्तरं जीवत एव पुंसः॥ ८॥

तदत्र वस्तुनि नोपालभ्यो राक्षसः, आनन्दराज्यलाभादनुग्राह्यश्च, परतस्तस्य परिग्रहे, परित्यागे वा, कुमारः प्रमाणम्।

राक्षसस्येति शेषः। न पश्यामि न प्रेक्षे। तमेव (दोषाभावमेव) दर्शयति-पश्यत्वित्यादिना।

मित्राणीति। अर्थस्य प्रयोजनस्य वशादनुरोधात्कार्यानुरोधेनेत्यर्थः। मित्राणि सुहृदो बन्धूनिति यावत्। शत्रुत्वं रिपुत्वं, शत्रून् विपक्षांश्च मित्रत्वं बन्धुत्वमुपानयन्ती प्रापयन्ती नीतिः अर्थशास्त्रनियमः जीवत एव पुंसोऽमृतानेव पुरुषान् पूर्वञ्च तद्वृत्तं पूर्ववृत्तम् अस्मृतं पूर्ववृत्तं यस्मिन्तदस्मृतपूर्ववृत्तम् अचिन्तितपूर्ववृत्तान्तं जन्मान्तरम् अन्यजन्म नयति प्रापयति। यथा जन्मान्तरे (अन्यस्मिन् जन्मनि) पूर्वजन्मवृत्तान्तं न स्मर्यते तथा राजनीतिवशाज्जीवत एव पुंसः पूर्वकृतापकारादि न स्मर्यत इति भावः। पूर्वार्द्धे नीत्या मित्रेषु शत्रुत्वस्य शत्रुषु मित्रत्वस्य च प्रापणाद्विरूपयोः (असंभवतोः) उत्तरार्द्धेऽपि तयाऽजीवत एव पुंसो जन्मान्तरप्रापणाच्च विरूपयोश्च संघटनाद्विषमालंकारः। एवं मित्रत्वशत्रुत्वयोरन्योन्यविरोधात् जीवतः पुंसो जन्मान्तरेण (जन्मान्तरप्रापणेन) विरोधाच्च विरोधालंकारश्चेत्युभयालंकारसम्भवादनयोर्मध्ये कोऽत्रालंकार इति सन्देहोदयाच्च सन्देहसंकरालङ्कारः। केचित्तु (मित्राणि शत्रुत्वमिवानयन्ती)ति पाठमङ्गीकृत्योत्प्रेक्षाऽतिशयोक्त्योः संसृष्टिमाहुः। इन्द्रवज्रावृत्तम्॥ ८॥

तदत्रेति। तत्तस्मात्कारणात् अत्रास्मिन् वस्तुनि विषये राक्षसोऽमात्यः नोपालम्भनीयो न तिरस्कार्यः। आ नन्दराज्यलाभात् नन्दराज्यप्राप्ति यावत् अनुग्राह्योऽनुकम्प्यश्च अत्याज्य इति यावत्, राक्षस इति शेषः। परतश्च नन्दराज्यप्राप्त्युत्तरकाले च परिग्रहे ग्रहणे परित्यागेऽग्रहणे वा राक्षसस्येति शेषः, कुमारो भवानेव प्रमाणम् निदर्शनम् नन्दराज्यप्राप्त्युत्तरकाले यथा भवते रोचते (रोचेत) तथा

मलयकेतुः—एवं भवतु । सखे ! सम्यक् दृष्टवानसि । अमात्यस्य वधे प्रकृतिक्षोभः स्यात् । एवञ्च सन्दिग्धे विजयः स्यात् ।

पुरुषः—( प्रविश्य । ) जेदु कुमारो । अअं अज्जस्स गुम्मट्ठाणाधिकिदो दीहचक्खू अज्जं विण्णवेदि, एसो क्खु अह्मेहिं कडआदो णिक्कमन्तो अगहीदमुद्दो सलेहो पुलिसो गहीदो, ता पच्चक्खीकरेदु णं अज्जोत्ति । ( १ )

भागुरायणः—भद्र ! प्रवेशय ।

पुरुषः—जं अज्जो आणवेदि । ( २ ) ( इति निष्क्रान्तः । )

( ततः प्रविशति पुरुषेणाऽनुगम्यमानः संयतः सिद्धार्थकः ) ।

---

( १ ) जयति जयति कुमारः । अयमार्य्यस्य गुल्मस्थानाधिकृतो दीर्घचक्षुरार्य्यं विज्ञापयति, एष खल्वस्माभिः कटकान्निष्क्रामन्नगृहीतमुद्रः सलेखः पुरुषो गृहीतस्तत् प्रत्यक्षीकरोत्वेनमार्य्य इति ।

( २ ) यदार्य्य आज्ञापयति ।

---

करिष्यतीत्यर्थः । ( इदं कुपितस्य मलयकेतोः समाधानरूपं पर्युपासनम् ) ।

सम्यगिति । सम्यक् साधु दृष्टवान् विचारितवान् असि त्वमिति शेषः । अमात्यवधे मन्त्रिहिंसने प्रकृतीनां क्षोभः प्रकृतिक्षोभः प्रजाविरागः स्यात् , एवं च विजयः सन्दिग्धः सन्देहयुक्तः स्यात् ( अर्शाद्यजन्तः सन्दिग्धशब्दः ) ।

जयत्विति । आर्यस्य भवतः गुल्मस्थानाधिकृतः शिविरप्रधानद्वारपालकः अयमेष दीर्घचक्षुः एतदाख्यः आर्यं भवन्तं विज्ञापयति निवेदयति, कटकात् शिविरात् निष्क्रामन् निस्सरन् अगृहीता मुद्रा येन सोऽगृहीतमुद्रः अप्राप्तप्रवेशनिर्गमानुमतिपत्रः लेखेन सहितः सलेखः पत्रिकायुक्तः अयमेषः पुरुषो जनोऽस्माभिर्गृहीतः धृतः प्राप्त इति यावत् तत्तस्मात् एनं पुरुषम् आर्यो भवान् प्रत्यक्षीकरोतु स्वयं पश्यतु ।

तत इति । ततस्तदनन्तरं भागुरायणानुमतिमादाय निष्क्रमणोत्तरमित्यर्थः । पुरुषेण मलयकेतुचरेणाऽनुगम्यमानोऽनुस्रियमाणः संयतः पाशादिभिः संबद्धः सिद्धार्थकः एतदाख्यो राक्षसगुप्तप्रणिधिः प्रविशति मलयकेतु-भागुरायणालंकृतरङ्गशालाभ्यन्तरगतो भवतीत्यर्थः । तत्सान्निध्यं प्राप्नोतीति यावत् । (इत उर्ध्वम-

सिद्धार्थकः—( स्वगतम् । )—

तिप्पन्तीए गुणेसुं दोसेसुं परंमुहं करन्तीए ।
अह्मारिसजणणीए प्पणमामो सामिभत्तीए ( १ ) ॥ ९ ॥

पुरुषः—( उपसृत्य । ) अज्ज ! अअं सो पुलिसो । ( २ )

भागुरायणः—( नाट्येनावलोक्य । ) भद्र ! किमागन्तुकः, आहोस्विदिहैव कस्यचित्परिग्रहः ?

( १ ) तृप्यन्त्यै गुणेषु, दोषेषु पराङ्मुखं कुर्वन्त्यै ।
अस्मादृशजनन्यै प्रणमामः स्वामिभक्त्यै ॥

( २ ) आर्य्य ! अयं स पुरुषः ।

ङ्कावसानं यावत्प्रथमेऽङ्के किमत्राभिलिखामीत्यारभ्य कर्ण एवमेवमित्यन्तग्रन्थेनोपक्षिप्तबीजस्यानेकधा प्रकीर्णस्यैकार्थीकरणबीजोपगमनस्यैव सन्धेरङ्गस्य प्रपञ्च इत्यवसेयम् ) ।

तृप्यन्त्यै इति । ( गुणेष्वित्यतः प्रागनुचराणामित्याक्षेपः ) अनुचराणां सेवकानां गुणेषु उत्कर्षेषु कार्यसाधनक्षमत्व-चातुर्यादिरूपेषु विषये, वा दृष्टेषु सत्सु तृप्यन्त्यै सन्तुष्टायै ( तृपेरन्तर्भावितण्यर्थत्वात् ) तृप्तिप्रदायिन्यै वा दोषेषु अपराधेषु सत्सु पराङ्मुखं कुर्वन्त्यै विमुखं विदधत्यै अस्मादृशानां जननी अस्मादृशजननी तस्यै अस्मादृशजनन्यै मादृशानां भृत्यानां पालनकर्त्रीत्वेन जननीतुल्यायै इत्यर्थः । स्वामिनो भक्तिः स्वामिभक्तिस्तस्यै स्वामिभक्त्यै प्रभुसेवायै प्रणमामो नमस्कुर्मः । या स्वामिभक्तिः भृत्यगुणदर्शनात्स्वयं तृप्यन्ती भृत्यानां तृप्तिप्रदायिनी वा दोषनिरीक्षणाल्लज्जया तानधोमुखान् विदधती तद्दोषानगणयन्ती वा पालनकर्त्रीत्वेन मातृसदृशी तस्यै स्वामिभक्त्यै नमोऽस्त्वित्यर्थः । प्रभुसेवानुरोधेन तत्कार्यसम्पादनायायुक्तमपि क्रियमाणं कार्यं न दोषोद्घोषकरमपि तु गुणावहमेवेति भावः । ( स्वामिभक्त्यै इति क्रियया यमभिप्रैति स सम्प्रदानमिति विहितचतुर्थ्यन्तम् ) । स्वामिभक्तौ जननीत्वसमारोपणान्निरङ्गरूपकालङ्कारः ॥ ९ ॥

किमयमिति । अयं स पुरुषः भवता गृहीत इत्यर्थः । किम् आगन्तुकः अन्यस्थानात्साम्प्रतमभ्यागतः आहोस्विदथवा इहात्रैव स्थाने कस्यचिदिहत्यस्यैव परिग्रहः आश्रितोऽनुचर इति यावत् ।

भद्रेति । भद्र कल्याणिन् ! तत्तस्मात्कारणात् अगृहीतमुद्रोऽप्राप्तप्रवेशनिर्गमना-

सिद्धार्थकः—अज्ज ! अहं क्खु अमच्चरक्खसस्स सेवओ । ( १ )

भागुरायणः—भद्र ! तत् किमर्थमगृहीतमुद्रः कटकान्निष्क्रामसि ?

सिद्धार्थकः—अज्ज ! कज्जगोरवेण तुवराविदोह्मि ( २ )

भागुरायणः—कीदृशं तत्कार्य्यगौरवं, यद्राजशासनमुल्लङ्घयसि ?

मलयकेतुः—सखे भागुरायण ! लेखमुपानय ।

सिद्धार्थकः—( भागुरायणाय लेखमर्पयति ) ।

भागुरायणः—( सिद्धार्थकहस्ताल्लेखं गृहीत्वा मुद्रां दृष्ट्वा । ) कुमार ! अयं लेखः, राक्षसनामाङ्कितेयं मुद्रा ।

मलयकेतुः—मुद्रां परिपालयन्नुद्घाट्य दर्शय ।

भागुरायणः—( तथा कृत्वा दर्शयति ) ।

मलयकेतुः—( गृहीत्वा वाचयति । ) "स्वस्ति, यथास्थानं कुतोऽपि, कोऽपि, किमपि, पुरुषविशेषमवगमयति । अस्मद्विपक्षं निराकृत्य, दर्शिता कापि सत्यता सत्यवादिना । साम्प्रतमेषामपि प्रथममुपन्यस्त-सन्धीनामस्मत्सुहृदां, पूर्वप्रतिज्ञातसन्धिपरिपणवस्तुप्रतिपादनप्रोत्सा-हनेन सत्यसन्धः, प्रीतिमुत्पादयितुमर्हति । एते ह्येवमुपगृहीताः सन्तः

( १ ) आर्य्य ! अहं खल्वमात्यराक्षसस्य सेवकः ।

( २ ) आर्य्य ! कार्य्यगौरवेण त्वरायितोऽस्मि ।

नुमतिपत्रः सन् कटकात् शिविरात् किमर्थं कस्मै प्रयोजनाय निष्क्रामसि निर्गच्छसि त्वमिति शेषः ।

कार्येति । कार्यगौरवेण प्रयोजनप्राचुर्य्येण त्वरायितः शैघ्र्ययुक्तोऽस्मि ।

कीदृशमिति । तव भवदुक्तं कार्यगौरवं प्रयोजनप्राचुर्य्यं कीदृशं किम्भूतं येन कार्यगौरवेणेति शेषः । राजशासनं नृपादेशम् उल्लङ्घयसि अतिक्रामसि ।

मुद्रामिति । मुद्रां सिद्धार्थकहस्तस्थिताङ्गुलिमुद्रां परिपालयन् राक्षसनाम-चिह्नमन्यथा न भवेत्तथा संरक्षन् उद्घाट्य धारणपेटिकामिति शेषः । दर्शय मुद्रा-मिति शेषः । ( राक्षसमुद्रया सह सम्वादार्थं लेखधारणपेटिकयोर्मुद्रापरिपालनमि-त्यवगन्तव्यम् ) ।

स्वस्तीति । मङ्गलार्थकमव्ययमिदम् , पत्रिकादौ स्वस्तिशब्दलेखस्य प्रसि-

स्वाश्रयविनाशेनैवोपकारिणमाराधयिष्यन्ति । अविस्मृतमप्येतत्—सत्यवतः स्मारयामः । एतेषां मध्ये केचिदरेः कोषदन्तिभ्यामर्थिनः, केचिद्‌ विषयेणेति । अस्मान् प्रत्यलङ्कारत्रयञ्च, यत् सत्यवताऽनुप्रेषितं तदुपगतम् । अस्माभिरपि लेखस्याशून्यार्थं किञ्चिदनुप्रेषितं तदुपगमनीयं, वाचिकञ्चाप्ततमात् सिद्धार्थकाच्छ्रोतव्यम्" इति ।

---

ल्लस्थात । स्थानमनतिक्रम्य यथास्थानं ( विद्यमानमित्यवशिष्य कमपीत्यनेनान्वयो बोध्यः ) कुतोऽपि कस्मादपि स्थानादिति शेषः । कोऽपि कश्चिदपि जनः कमपि पुरुषविशेषं जनम् अवगमयति विज्ञापयति अस्माकं विपक्षोऽस्मद्विपक्षस्तमस्मद्विपक्षं मम विद्वेषिणम् ( कौटिल्यमित्यप्रकाशितोऽभिप्रायः ) । निराकृत्य निष्कास्य साचिव्यपदात्पृथक्कृत्येत्यर्थः । कौटिल्यनिराकरणस्य प्रागेव त्वया प्रतिश्रुतत्वादिति भावः । सत्यवादिना तथ्यवचनेन (मौर्येणेति ध्वन्यर्थः) कापि लोकोत्तरा सत्यता सत्यपालनकर्तृता दर्शिता प्रकटिता । साम्प्रतमिदानीं प्रथमं प्राक् उपन्यस्तः कृतः सन्धिर्भवता सह सम्मेलनं यैस्ते उपन्यस्तसन्धयस्तेषामुपन्यस्तसन्धीनां भवता सह कृतसम्मेलनानाम् एतेषाम् अस्मत्सुहृदामस्मन्मन्त्रिणां पूर्वं प्रतिज्ञातः पूर्वप्रतिज्ञातः स चासौ सन्धिः पूर्वप्रतिज्ञातसन्धिस्तस्य परिपणः प्रतिदानभूतं यद् वस्तु तस्य प्रतिपादनं तेन प्रोत्साहनं तेन पूर्वप्रतिज्ञातसन्धिपरिपणवस्तुप्रतिपादनप्रोत्साहनेन प्राक्प्रतिश्रुतसम्मेलनप्रतिदानभूतवस्तुप्रदानाश्वासनेन सत्या सन्धा यस्य स सत्यसन्धः सत्यप्रतिज्ञः प्रीतिं हर्षमुत्पादयितुं जनयितुम् अर्हति योग्यो भवति एते कौलूतप्रभृतयः एवमुक्तयुक्त्या समाश्वासने सतीत्यर्थः। अनुगृहीता अनुकम्पिताः सन्तः स्वाश्रयविनाशेन निजावलम्बविघातेनैव हेतुना उपकारिणं भवन्तमिति शेषः । आराधयिष्यन्ति आश्रयिष्यन्ति । एतत्पूर्वोक्तम् विस्मृतमर्थात्स्मृतमपीत्यर्थः। सत्यवतः सत्यवादिनो भवत इत्यर्थः ( इगर्थकस्मरतेः प्रयोगे 'अधीगर्थदयेशामि'ति कर्मणि षष्ठी ) स्मारयामः स्मृतिपथं प्रापयामो वयमिति शेषः । एतेषां कौलूतप्रभृतीनां मध्ये केचित् कियन्तो जना इति शेषः । अरेः शत्रोः कोषदन्तिभ्यां ( प्रकृत्यादिभ्य इति तृतीया ) धनसमूहहस्तिभ्यामर्थिनो धनवन्तः, केचित् कियन्तो जना विषयेण अर्थिनो विषयिणो वेति शेषः । जाता इत्यपि शेषः । अस्मान् प्रति अस्माकं सविधे त्रयोऽवयवा यस्येति त्रयम् अलंकाराणां त्रयमलंकारत्रयं त्रीणि भूषणानीत्यर्थः। यत् सत्यमस्त्यस्येति सत्यवान् तेन

मलयकेतुः—भागुरायण ! कीदृशो लेखः ।

भागुरायणः—भद्र सिद्धार्थक ! कस्यायं लेखः ?

सिद्धार्थकः—अज्ज ! ण आणामि । (१)

भागुरायणः—हे धूर्त्त ! लेखो नीयते, न च ज्ञायते कस्यायमिति । सर्वं तावत्तिष्ठतु, वाचिकं त्वत्तः केन श्रोतव्यम् ?

(१) आर्य्य ! न जानामि ।

सत्यवता सत्यवादिना भवतेति शेषः । अनुप्रेषितं मदन्तिके प्रहितं तत् अलङ्कारत्रयमित्यर्थः । उपगतम्प्राप्तम् मयेति शेषः । लेखस्य पत्रिकाया अशून्यार्थम् अरिक्तार्थं किञ्चित् किमपि वस्तु अस्माभिरपि अनुप्रेषितम् अनुप्रहितम् ।

रिक्तपाणिर्न पश्येत्तु राजानं देवतां गुरुमि—

त्याचाराल्लेखस्य सादृगुण्या( प्राशस्त्या )र्थं किमपि वस्तु प्रहितमिति भावः । ( इममेव लेखं शकटदासेन चाणक्यो लेखयित्वा तदङ्गुरीयस्थमुद्रयाऽङ्कयित्वा च सिद्धार्थकाय कर्णे एवमेवेत्युपदिश्य प्रागर्पितवानिति स्मरणीयम् ) तदुपगमनीयं तत्प्रापणीयम् । वाचिकं मदुक्तसन्देशवचनं च अतिशयेनाप्त आप्ततमस्तस्मादाप्ततमात् अतिविश्वासभाजनात् सिद्धार्थकात् एतदाख्यादस्मच्चरादित्यर्थः । श्रोतव्यमाकर्णितव्यम् (

कीदृश इति । भागुरायणपठितपत्रस्थलेखशब्दमाकर्ण्य मलयकेतुस्तं प्रति पृच्छति कीदृशो लेख इति । यस्य लेखस्य प्राशस्त्यार्थं किञ्चिद्वस्तु प्रहितं स लेखः कीदृशः किम्विषयक इत्यर्थः । इति सिद्धार्थकम्प्रति प्रष्टव्यं त्वयेति तात्पर्य्यम् ।

भद्रेति । भद्रमस्यास्तीति भद्रः ( अर्शआद्यजन्तः ) तत्सम्बुद्धौ हे भद्र कल्याणिन् सिद्धार्थक ! कस्यायं लेखः केन कम्प्रति लिखितमिदं पत्रमित्यभिधेहीत्यर्थः ।

आर्येति । आर्य श्रीमन् ! न जानामि कस्यायं लेख इति नावगच्छामीत्यर्थः । लोकैर्ज्ञातविषयोऽभिधीयते नाज्ञातविषय इति कस्य कम्प्रत्ययं लेख इत्येतद्विषयस्य मयाऽज्ञातत्वात्कथमभिधातुं युज्यत इति भावः ।

हेधूर्तेति । हेधूर्त्त शठ ! लेखः पत्रं नीयते नीत्वा स्थानान्तरं प्राप्यते तदेत्यध्याहारः । तदा कस्यायम् लेख इतिशेषः केन लिखितं पत्रमिति नावगच्छति ।

सिद्धार्थकः—( भयं नाटयन् ) तुह्मेहिं । ( १ )

भागुरायणः—किमस्माभिः ?

सिद्धार्थकः—मिस्सेहिं गहीदो, ण आणामि किं भणामित्ति ( २ )

भागुरायणः—( सक्रोधम् । ) एष ज्ञास्यसि । भद्र भासुरक ! बहिर्नीत्वा ताडयतां तावत् , यावत् सर्वमनेन कथितं भवेत ।

---

( १ ) युष्माभिः ।

( २ ) मिश्रैर्गृहीतो न जानामि कि भणामीति ।

---

सर्वं तावत् तिष्ठतु तावच्छब्दो वाक्यालंकारे, सर्वमुत्तरप्रत्युत्तरवचनं तिष्ठतु मास्तु वाचिकं सन्देशवचनं त्वत्तो भवतः सकाशात् केन श्रोतव्यम् आकर्णितव्यम् तत्कथयेति शेषः (त्वत्तः केनाकर्णितव्यमिति पृष्टे प्रसङ्गतश्चन्द्रगुप्तनामोच्चारणस्यप्रसक्तत्वेऽपि युष्माकमाकमणितुमेवायमखिलो व्यापार इति गूढाभिसन्धिः ) ।

भयमिति । भयं साध्वसं नाटयन् अभिनयन् कुर्वन्नित्यर्थः । ब्रवीति सिद्धार्थक इति शेषः । युष्माभिर्भवद्भिः, इदमद्धोक्त्या समुत्तरं, ( तस्य श्रोतव्यमिति वाक्यशेषो गूढः ) ।

किमस्माभिरिति । वाचिकं त्वत्तः केन श्रोतव्यमिति भागुरायणोक्तेर्युष्माभिरिति सिद्धार्थकोत्तराकर्णनात्कुपितो भागुरायणो ब्रवीति किमस्माभिरिति त्वत्तः सकाशात्सन्देशवचनं किमस्माभिः श्रोतव्यम् यतो ब्रवीषि । युष्माभिरितीत्यर्थः ।

मिश्रैरिति । मिश्रशब्दः पूज्यार्थकः मिश्रैः पूज्यर्भवद्भिरिति शेषः । गृहीतो वशीकृतः संयत इति यावत्।अहमिति शेषः किं भणामि किं ब्रवीमीति न जानामि नावगच्छामि । भवद्भिर्गृहीतस्य मे साध्वसबाहुल्याच्चित्तस्यास्थैर्येणावक्तव्यवचनस्यैव मदास्यान्निःसरणाद्युष्माभिरित्यभिधाने न मेऽपराध इति भावः ।

सक्रोधमिति । सक्रोधं सकोपं ( क्रियाविशेषणम् ) तद्यथा स्यात्तथा ब्रवीतीत्यर्थः । एष त्वं ज्ञास्यसि अवगमिष्यसि । ज्ञानसाधकमाह—भद्रेति । भद्र कल्याणिन् भासुरक ! एष पुरुषाधमः बहिर्नीत्वा गृहाभ्यन्तराद्बाह्यप्रदेशं प्राप्यमाणः तावत् तत्कालपर्यन्तं ताडयतामाहन्यतां त्वयेति शेषः।यावत् यत्कालपर्यन्तम् अनेन पुरुषाधमेन सर्वं निखिलं वृत्तमिति शेषः कथितं निवेदितं भवेत् स्यात् ।

भासुरकः— जं अज्जो आणवेदि । ( १ )

( इति सिद्धार्थकेन सह निष्क्रान्तः ) ।

( पुनः प्रविश्य ) । अज्ज ! इअं तस्स ताडीअमाणस्स कक्खादो मुद्दालंच्छिदा आहरणपेडिआ णिवडिदा । ( २ )

भागुरायणः—( विलोक्य । ) कुमार इयमपि राक्षसमुद्राङ्कितव ।

मलयकेतुः—अयं लेखस्याशून्यार्थो भविष्यति । इमान्यपि मुद्रां परिपालयन्नुद्घाट्य दर्शय ।

भागुरायणः—( तथा कृत्वा दर्शयति ) ।

मलयकेतुः—( विलोक्य । ) अये ! तदिदमाभरणं, यन्मया स्वशरीरादवतार्य्य राक्षसाय प्रेषितम् । व्यक्तं चन्द्रगुप्तस्यायं लेखः ।

( १ ) यदार्य्य आज्ञापयति ।

( २ ) आर्य्य ! इयं तस्य ताड्यमानस्य कक्षतः नाममुद्रालाञ्छिताऽऽभरणपेटिका निपतिता ।

---

यदार्य इति । आर्यः-श्रेष्ठो भवानिति शेषः । यत् यत्कार्यम् आज्ञापयति आदिशति तत्करोमीति शेषः।स्वामिनाऽऽदिश्यमानकार्यस्य भृत्यैरवश्यकर्तव्यत्वादार्येण भवताऽऽदिश्यमानैतत्पुरुषाधमताडनात्मककार्यमवश्यमचिरमेव सम्पादयामीति भावः ।

पुनर्भूयः । प्रविश्याऽभ्यन्तरमेत्य विज्ञापयतीति शेषः।किं तदाह इयमिति । मुद्रालाञ्छिता राक्षसनामाङ्कितमुद्राचिह्निता इयमेषाऽऽभरणपेटिकाऽलङ्करणमञ्जूषा । ताड्यमानस्याऽऽहन्यमानस्य तस्य सिद्धार्थकस्य कक्षतो भुजमूलात् निपतिता स्खलिता भूमाविति शेषः ।

विलोक्येति । विलोक्य दृष्ट्वा आभरणपेटिकां कुमारम्वा, इदमा पूर्वोक्ताभरणपेटिकापरामर्शः । इयमपि एषाऽपि आभरणपेटिका राक्षसमुद्राङ्कितैव राक्षसाऽङ्गुलिमुद्राचिह्नितैव अस्तीति क्रियाशेषः ।

अयमिति । अयमेषः लेखस्य पत्रिकायाः अशून्यार्थः अरिक्तार्थः । मुद्रां राक्षसाङ्गुलिमुद्रां परिपालयन् यथा व्याघातो न स्यात्तथा संरक्षन्नित्यर्थः। उद्घाट्योन्मुच्य इमान्येतान्यलङ्करणानि दर्शय अवलोकय मामिति शेषः ।

विलोक्येति । विलोक्य निरीक्ष्य भागुरायणमिति शेषः । अये ( कोमला-

भागुरायणः—कुमार ! एष निर्णीयते संशयः। भद्र ! पुनरपि ताड्य-
ताम् ।

पुरुषः—जं अज्जो आणवेदि । ( इति निष्क्रम्य पुनः प्रविश्य च । )
अज्ज ! एसो क्खु ताड़ीअमाणो विण्णवेदि कुमारस्स स्सअंज्जेव णि-
वेदेमित्ति । ( १ )

मलयकेतुः—प्रवेशय ।

( १ ) यदार्य्य आज्ञापयति । आर्य्य ! एष खलु ताड्यमानो विज्ञापयति
कुमारस्य स्वयमेव निवेदयामीति ।

लापे सम्बोधनमिदम् ) मयाऽऽत्मना स्वशरीरान्निजवर्ष्मणः सकाशात् यत् आभर-
णमिति शेषः । अवतार्य पृथक्कृत्य राक्षसस्य राक्षसमुद्दिश्य प्रेषितं प्रहितम् उपायन-
त्वेन प्रदत्तमित्यर्थः । तदिदमाभरणं तदेवैतदलङ्करणम् चन्द्रगुप्तस्य मौर्यस्याऽयमेष
लेखः पत्रिकेति व्यक्तं नृपयोग्यालङ्करणस्य मया राक्षसं प्रति प्रेषणात्तेन मौर्याय
प्रहितमित्येतद्वृत्तं स्फुटं सम्यगवगतमित्यर्थः ।

कुमारेति । कुमार शिशो मलयकेतो ! एषोऽसौ संशयः (संशय्यतेऽसाविति-
विग्रहे संपूर्वकशीङः 'एरजि' ति कर्मण्यचा निष्पन्नः संशयशब्दः) संशयविषयः मौ-
र्यस्याय लेखोऽन्यस्य वेतीत्येवंरूपसन्देहविषय इत्यर्थः। निर्णीयते मयेति शेषः। येनो-
पायेनोक्तविधसन्देहनिर्णयः स्यात् स उपायो मया विधीयत इत्यर्थः। तमाह—भद्रे-
त्यादिना । पुनरपि भूयोऽपि ताड्यतां दण्ड्यताम् । प्राग्यथा ताडनेन किञ्चित्कार्यं
साधितं तथैव साम्प्रतमपि ताडनेन लेखस्य याथार्थ्येनाभिधानात्मकं कार्यं सा-
धितं भविष्यतीति भावः ।

यदार्य इति । आर्यः पूज्यो भवान् यत्कार्यमाज्ञापयति आदिशति तत्क-
रोमीत्यर्थः। एषोऽसौ सिद्धार्थक इत्यर्थः । खलुशब्दो वाक्यालंकारे ताड्यमान आ-
हन्यमानो विज्ञापयति निवेदयति कुमारस्य शिशोर्मलयकेतोरित्यर्थः । स्वयमेव सा-
क्षादेव निवेदयामि ( भविष्यत्सामीप्ये लट् ) कथयिष्यामीत्यर्थः । ताडनजन्यक्ले-
शासहनापेक्षया यथार्थकथनमेवोचितमित्यङ्गीकृतमनेन यथार्थकथनमिति भावः ।

प्रवेशयेति । प्रवेशय रङ्गशालाभ्यन्तरमानय मत्सन्निधिं प्रापयेति यावत् ।
मदग्रेऽस्मै तदुदन्ताभिधानस्य याथातथ्येनाऽनभिप्रेतत्वात्तज्ज्ञानस्यावश्यकत्वादिति
मदन्तिकवर्त्तिनं तं विधेहीत्यर्थः ।

पुरुषः—जं कुमालो आणवेदि । ( १ )

( इति निष्क्रम्य सिद्धार्थकेन सह प्रविशति ) ।

सिद्धार्थकः—(पादयोर्निपत्य ।) अभएण मे कुमालो प्पसादं करेदु ।(२)

मलयकेतुः—भद्र! भद्र ! अभयमेव परायत्तजनस्य, तन्निवेद्यतां यथाऽवस्थितम् ।

सिद्धार्थकः—णिसामेदु कुमालो, अहं क्खु अमच्चरक्खसेण इमं लेहं देइअ, चन्दउत्तसआसं प्पेसिदोह्मि । ( ३ )

मलयकेतुः—भद्र ! वाचिकमिदानीं श्रोतुमिच्छामि ।

( १ ) यत् कुमार आज्ञापयति ।

( २ ) अभयेन मे कुमारः प्रसादं करोतु ।

( ३ ) निशामयतु कुमारः, अहं खल्वमात्यराक्षसेनेमं लेखं दत्वा, चन्द्रगुप्तसकाशं प्रेषितोऽस्मि ।

---

यदिति । कुमारो राजपुत्रो भवान् यदाज्ञापयति यदादिशति तत्करोमीति शेषः । कुमारस्य भवतो निदेशस्य शिरोधार्यत्वात्सिद्धार्थकानयनात्मकनिदेशं झटिति सम्पादयामीत्यर्थः ।

भद्रेति । भद्र भद्रेति सम्भ्रमे द्विरुक्तिः । परेषामायत्तः परायत्तः स चासौ जनस्तस्य परायत्तजनस्य अन्याधीनलोकस्य अभयमेव नास्ति साध्वसं किमपीत्यर्थः । तत्तस्मात्कारणात् यथाऽवस्थितं याथार्थ्येन सर्वं वृत्तमित्यर्थः । निवेद्यतामभिधीयताम् ।

निशामयत्विति । कुमारो भवान् निशामयतु शृणोतु, किं तदाह अहमिति । खलुशब्दो वाक्यालंकारे अमात्यराक्षसेन इमं लेखं पत्रं दत्वा समर्प्य अ चन्द्रगुप्तसकाशं मौर्यसन्निधिं प्रेषितः प्रहितोऽस्मि भवामि ।

भद्रेति । भद्रमस्त्यस्येति भद्रः ( अर्शआद्यजन्तः ) तत्सम्बुद्धौ हे भद्र कल्याणिन् ! इदानीं सम्प्रति वाचिकं वाक्सन्देशं श्रोतुमाकर्णितुमिच्छामि अभिलषामि लेखाभरणपेटिकाद्वयादानान्निखिलोदन्ताऽवगमात्सन्देहस्याऽपायाद्वाक्सन्देशश्रवणौत्सुक्यमिति मार्यान्तिकमेत्य कथयिष्यमाणं वाक्यमभिधेहीत्यर्थः ।

सिद्धार्थकः—कुमाल ! संदिट्टोह्मि अमच्चरक्खसेण, जहा,-"एदे मम पिअवअस्सा पञ्च राआणो तुए सह प्पढमसमुप्पण्णसन्धाणा । जहा,-कुलुदाहिवो चित्तवम्मा, मलअजणवदाहिवो सिंहणादो, कस्सीरदेसणाहो पुक्खरक्खो, सिन्धुराओ सिन्धुसेणो, पारसीआधिवदी मेहक्खो त्ति । एत्थ ज्जेव पढ़मभणिदा तिण्णि राआणो मलअकेदुणो विसअं अहिलसन्ति इदरे दुवे कोसं हत्थिबलं अ त्ति । ता जहा चाणक्कं णिराकरिअ महाराएण, मम प्पोदी उप्पादिआ, तहा एदाणं वाआसन्देसो त्ति । ( १ )

मलयकेतुः— ( स्वगतम् । ) कथं चित्रवर्मादयोऽपि मामभिद्रुह्यन्ति,

( १ ) कुमार ! संदिष्टोऽस्म्यमात्यराक्षसेन, यथा,—"एते मम प्रियवयस्याः पञ्च राजानस्त्वया सह प्रथमसमुत्पन्नसन्धानाः । यथा,—कुलूताधिपश्चित्रवर्मा, मलयजनपदाधिपः सिंहनादः, कश्मीरदेशाधिपः पुष्कराक्षः, सिन्धुराजः सिन्धुसेनः, पारसीकाधिपतिर्मेघाक्ष इति । अत्रैव प्रथमभणितास्त्रयो राजानः मलयकेतोर्विषयमभिलषंति इतरौ द्वौ कोषं हस्तिबलञ्चेति । तद्यथा चाणक्यं निराकृत्य महाराजेन मम प्रीतिरुत्पादिता, तथैतेषामपि प्रथमभणितोऽर्थः संपादयितव्यः" इत्येतावान् वाक्संदेश इति ।

सन्दिष्टोऽस्मीति । अमात्यराक्षसेन राक्षसनाम्ना नन्दसचिवेन सन्दिष्टोऽस्मि सन्देशवचनमभिहितोऽस्मि, यथा यत् एते इमे त्वया सह भवता सार्द्धं प्रथमसमुत्पन्नसन्धानाः प्राक्सञ्जातसौहार्दाः पञ्च तत्संख्यकाः राजानो नृपतयः मम मित्राणि सन्तीति शेषः । तन्नाम दर्शयति यथेत्यादिना । अत्रैव एतेषु परिगणितेषु पञ्चसु राजस्वेवेत्यर्थः प्रथमभणिताः प्रागुक्तास्त्रयो राजानो नृपतयः मलयकेतोः पर्वतकसुतस्य विषयं राज्यमभिलषन्ति वाञ्छन्ति इतरौ तदन्यौ द्वौ राजानाविति शेषः। कोषं द्रव्यगृहं हस्तिबलं गजसैन्यञ्च । तत्तस्मात् यथा येन प्रकारेण चाणक्यं कौटिल्यं निराकृत्य निष्कास्य महाराजेन चन्द्रगुप्तेन सहेति शेषः। मम प्रीतिः प्रणयः समुत्पादिता भवेदिति शेषः। तथा तेन प्रकारेण एतेषामपि राज्ञामिति शेषः। प्रथमभणितोऽर्थः प्रागुक्तकार्यं सम्पादयितव्यम् इत्येतावन्मात्रं वाचिकम् ।

स्वगतमिति । स्वस्मिन् गतं स्वगतं तद्यथा स्यात्तथा ब्रवीतीत्यर्थः। (क्रिया-

अत एवैतेषां राक्षसे निरतिशया प्रीतिः। ( प्रकाशम्। ) विजये! अमात्यराक्षसं द्रष्टुमिच्छामि।

प्रतीहारी—जं कुमालो आणवेदि। ( १ ) ( इति निष्क्रान्ता। )

( ततः प्रविशत्यासनस्थः स्वभवनगतः पुरुषेणानुगम्यमानः सचिन्तो राक्षसः )।

राक्षसः—( स्वगतम्। ) सम्पूर्णमस्मद्बलं चन्द्रगुप्तबलैरिति यत सत्यं न मे मनसः शुद्धिरस्ति। कुतः?—

साध्ये निश्चितमन्वयेन घटितं बिभ्रत् सपक्षे स्थितिं,
व्यावृत्तञ्च विपक्षतो भवति यत्, तत् साधनं सिद्धये।
यत् साध्यं स्वयमेव तुल्यमुभयोः पक्षे विरुद्धञ्च यत्
तस्याङ्गीकरणेन वादिन इव स्यात् स्वामिनो निग्रहः ॥१०॥

---

( १ ) यत् कुमार आज्ञापयति।

---

विशेषणम् ) चित्रवर्म्मप्रभृतयोऽपि कथं कुतो माम् अभिद्रुह्यन्ति जिघांसन्ति, अत एव चित्रवर्म्मादीनां मयि जिघांसुत्वादेव एतेषां चित्रवर्मादीनां राक्षसे नन्दसचिवे निर्नास्त्यतिशयो यस्याः सा निरतिशया अधिका प्रीतिः प्रणयोऽस्तीति शेषः।

तत इति ततस्तदनन्तरं मलयकेतुनिष्क्रमणानन्तरमित्यर्थः। आसनस्थः आसने समुपविष्टः स्वभवनगतः निजगृहवर्त्ती पुरुषेण सिद्धार्थकनाम्नाऽनुगम्यमानोऽनुस्रियमाणः सचिन्तः सखेदः राक्षसो नन्दसचिवः प्रविशति रङ्गशालाभ्यन्तरगतो भवतीत्यर्थः। मलयकेतुना राक्षसदर्शनोत्सुकत्वस्य प्रतीहारीम्प्रति प्रकटितत्वाद्राक्षसस्य मलयकेतुसन्निधावागमनस्यावश्यकत्वात्तत्प्रवेश इति भावः।

स्वगतमिति। स्वस्मिन् गतं स्वगतमात्मगतं ( क्रियाविशेषणम् ) तद्यथा स्यात्तथा वचनं ब्रवीति अनिसृष्टमर्थं परेणोच्चारयतीत्यर्थः। यत् यस्मात् अस्मद्बलमस्मत्सैन्यं चन्द्रगुप्तबलैर्मौर्यसैन्यैर्भद्रभटादिभिः पूर्णं व्याप्तमाक्रान्तमिति यावत्। इत्यतः सत्यं याथार्थ्येन मे मम मनसो हृदयस्य शुद्धिः असन्दिग्धत्वं नास्ति अस्मत्सैन्यस्य मौर्यसैन्यसमाक्रान्तत्वात्सन्दिग्धं मे हृदयमिति भावः।

साध्य इति साध्ये शत्रुविनाशनात्मके कार्ये निश्चितं निश्चितशक्तिकम् अन्वयेनाऽनुगमनेन घटितं युक्तं सपक्षे सहाये स्थितिमवस्थानमानुकूल्यं बिभ्रत् धा-

**अथवा तैस्तैर्विज्ञातापरागहेतुभिः प्राक्परिगृहीतोपजापैरापूर्ण-मिति न विकल्पयितुमर्हामि । ( प्रकाशम् । )**

---

रयत् विपक्षतः शत्रुवर्गात् व्यावृत्त निवृत्तश्च भवति तत् साधनं सैन्यादि सिद्धये कार्यसम्पादनाय शत्रुविनाशायेति यावत् । भवतीति शेषः । यत् साधनं सैन्यादि स्वयमेव साध्यं भीत्यादिप्रदर्शनद्वारा आत्मसात्करणीयं उभयोरात्मवर्गपरवर्गयो-स्तुल्यं समानम् उभयत्र स्थितमिति शेषः। यच्च साधनं ( पक्षे ) आत्मवर्गे विरुद्धं प्रतिकूलं तस्य साधनस्य तादृशस्य त्रिविधस्य सैन्यादेरित्यर्थः । अङ्गीकरणेन स्वीकारेण ( पक्षान्तरे ) यत् साधनं धूमादिरूपं हेतुः साध्ये सिद्धिविपर्यीभूते वह्न्यादौ निश्चितं निश्चितव्याप्तिकम् असन्दिग्धमिति यावत् । अन्वयेन तत्सत्त्वनियतसत्ताक-त्वरूपाऽन्वयव्याप्त्या घटितं विशिष्टं सपक्षे सन्दिग्धसाध्यके पर्वतादौ स्थितिं सत्त्वं बिभ्रत् विपक्षतः साध्याभावाधिकरणात् जलह्रदादेः व्यावृत्तं तत्रावृत्तीत्यर्थः । तत साधन धूमादिरूपं हेतुसिद्धये वह्न्यनुमानाय भवति ।

यत् साधनं हेतुः स्वयमेव साध्यं हेत्वन्तरेणाऽनुमेयम् उभयोः सपक्ष-परप-क्षयोः पर्वत—जल—ह्रदाद्योरित्यर्थः । तुल्यं विद्यमानं यत् साधनं ( पक्षे ) विरुद्धञ्च साध्यासामानाऽधिकरण्यविशिष्टं तस्य तादृशस्य त्रिविधस्य हेत्वाभास-स्याऽङ्गीकरणेनाऽभ्युपगमेन वादिनः असदर्थकरणेन विजयमाकांक्षतो जनस्येव तस्य तथाभूतस्य सैन्यादेरङ्गीकरणेन स्वामिनः प्रभोर्निग्रहः पराजयः स्यात् । मौर्यश्री-स्थैर्यसम्पादनात्मकसाध्ये साधकत्वेनाऽध्यवसितस्य मौर्यस्थिति-नन्दविनाशात्म-काभ्यामन्वय-व्यतिरेकव्याप्तिभ्यां दृष्टसारस्य भद्रभटभागुरायणप्रभृतिरूपयाव-त्सपक्षे स्थितिं बिभ्रतो मलयकेतुरूपविपक्षाद्व्यावृत्तस्य कौटिल्यनीतिरूपस्य साध-नस्य मौर्यश्रीस्थैर्यसम्पादकत्वम् , भद्रभटप्रभृतिभिरायत्तीकृतत्वादुभयत्र समाना-मासमानस्य मलयकेतुरूपपक्षे भद्रभटाद्यंशेन विरुद्धस्य मत्कार्यं साधयेन्नवेति सन्दि-ग्धस्य मलयकेतुसैन्यस्य ( तादृशसैन्याभासस्य ) अङ्गीकरणेन राक्षस-मलयके-त्वोरीशयोरवश्यं पराजयो भावीति दार्ष्टान्तिकपक्षाभिप्रायः वादिस्वामिनोरुपमानो-पमेययोः साधनगतनिश्चितत्वादिरूपसामान्यधर्माणां सादृश्यबोधकेवशब्दस्य चाऽ-भिधानाच्छ्रौतीपूर्णोपमालंकारः श्लिष्टविशेषणत्वाच्छ्लेषानुप्राणितः शार्दूलविक्री-डितं वृत्तम् ॥ १० ॥

इत्थं सन्दिह्य भूयः समाधत्ते —अथवेति । विज्ञाता अस्माभिस्तात्पर्यसूच-

प्रियंवदक! उच्यन्तामस्मद्वचनात् कुमारानुयायिनो राजानः, सम्प्रति दिने दिने प्रत्यासीदति कुसुमपुरम्। अतः परिकल्पितविभागैर्भवद्भिः प्रयाणे प्रस्थातव्यम्। कथमिति ?—

प्रस्थातव्यं पुरस्तात् खसमगधगणैर्मामनुव्यूह्य सैन्यै-
र्गान्धारैर्मध्ययाने सयवनपतिभिः संविधेयः प्रयत्नः।
पश्चाद् गच्छन्तु वीराः, शकनरपतयः, संवृताश्चेदिहूणैः,
कौलूताद्यश्च शिष्टः पथि परिवृणुयाद्राजलोकः कुमारम्॥ ११॥

---

केङ्गितादिभिरनुमिता अपरागहेतवश्चन्द्रगुप्तविरागकारणानि येषां ते तथोक्तास्तैः विज्ञातापरागहेतुभिः अनुमितविरागकारणैः प्राक् अस्मत्पक्षावलम्बनात्पूर्वं परिगृहीतो ज्ञातोऽस्माकमुपजापो यैस्ते तथोक्तास्तैः प्राक्परिगृहीतोपजापैः पूर्वज्ञातास्मद्भेदैः तैस्तैर्भद्रभटप्रभृतिभिः प्रधानपुरुषैः आपूर्णं व्याप्तमिति हेतोः विकल्पयितुं नार्हामि न योग्यो भवामि। प्रकाशं स्पष्टं ब्रवीतीत्यर्थः। अस्मद्वचनान्मदुक्त्या कुमारानुयायिनः कुमारानुसरणशीला राजानो नृपतयः उच्यन्तामभिधीयन्ताम्। सम्प्रति इदानीं दिने दिने क्षणे क्षणे कुसुमपुरं तन्नामनगरं प्रत्यासीदति निकटवर्ति भवतीत्यर्थः, अतोऽस्मात्कारणात् परिकल्पितो विभागो यैस्ते तथोक्तास्तैः परिकल्पितविभागैः कृतसैन्यविभागैर्भवद्भिर्युष्माभिः प्रयाणे रणयात्रायां प्रस्थातव्यं गन्तव्यम्।

प्रस्थातव्यमिति। माम् अनु (अनोः कर्मप्रवचनीयत्वेन तद्योगे द्वितीया) मम पश्चादित्यर्थः। खसाश्च मगधाश्च खसमगधास्तेषां गणा येषु तानि खसमगधगणानि तैः खसमगधगणैः (येषु सैन्येषु प्राग्ज्योतिषान्तर्वर्तिपार्वत्या मगधदेशवर्तिनश्च राजानः सन्ति तादृशैः सैन्यैरित्यर्थः) व्यूह्य विभागं कृत्वा पुरस्तात् संग्रामोद्यतसैन्यसमुदायाग्रे प्रस्थातव्यं गन्तव्यम्, यवनानां पतयो यवनपतयस्तैः सहिताः सयवनपतयस्तैः सयवनपतिभिः यवनपतिसहितैर्गान्धारैर्गान्धारदेशवर्तिभिः सैन्यैरिति शेषः। मध्ययाने सैन्यमध्यगमने प्रयत्न उद्योगः संविधेयः कर्तव्यः। पश्चात् तदनु चेदिहूणैश्चेदिदेशाधम्लेच्छविशेषैः संवृताः संमिलिता वीराः पराक्रमशालिनः शकनरपतयः शकदेशाधिराजानो गच्छन्तु प्रयान्तु, शिष्टोऽवशिष्टः कौलूत आद्यः प्रथमो यस्य स कौलूताद्यः चित्रवर्मप्रभृतिः राजलोको नृपवर्गः पथि मार्गे कुमारं मलयकेतुं परिवृणुयात् शरीररक्षणार्थं परितो वेष्टयेदित्यर्थः।

प्रियंवदकः—जं अमच्चो आणवेदि। (१) (इति निष्क्रान्तः)।

प्रतीहारी—(प्रविश्य।) जेदु जेदु अमच्चो। अमच्च! इच्छदि तुमं कुमालो प्पेक्खिदुं। (२)

राक्षसः—भद्रे! मुहूर्त्तं तिष्ठ। कः कोऽत्र भोः?

पुरुषः—(प्रविश्य।) आणवेदु अमच्चो। (३)

राक्षसः—भद्र! उच्यतां शकटदासः, यथा परिधापिता वयमाभरणं कुमारेण, तन्न युक्तमिदानीमस्माभिरनलंकृतैः कुमारदर्शनमनुभवितुम्, अतो यदलङ्करणत्रयं क्रीतं तन्मध्यादेकं दीयतामिति।

पुरुषः—जं अमच्चो आणवेदि। (इति निष्क्रम्य पुनः प्रविश्य च) अमच्च! इदं तं अलङ्करणं। (४)

---

(१) यदमात्य आज्ञापयति।
(२) जयति जयत्यमात्यः। अमात्य! इच्छति त्वां कुमारः प्रेक्षितुम्।
(३) आज्ञापयत्वमात्यः।
(४) यदमात्य आज्ञापयति। अमात्य! इदं तदलङ्करणम्।

---

युद्धार्थमुद्युक्तानां राज्ञां सैन्यविभागपूर्वकसमावेशस्य स्वभावसिद्धत्वादत्र स्वभाववर्णनात्स्वभावोक्तिरलङ्कारः। तदुक्तमलङ्कारसर्वस्वे—

सूक्ष्मवस्तुस्वभावयथावद्वर्णनं स्वभावोक्तिः।

सूक्ष्मस्य कविमात्रगम्यस्य वस्तुनो यः स्वभावस्तस्य यथावद्वर्णनं स्वभावोक्तिरलङ्कार इत्यर्थः। प्रकृते उक्तविधराजकर्तृकसैन्यविभागपूर्वकयुद्धार्थप्रेषणात्मकसमावेशरूपकविमात्रगम्यवस्तुनो यथावद्वर्णनादुक्तालंकारसङ्घटनमुपपन्नम्। वृत्तमिदं स्रग्धरानाम ॥ ११ ॥

उच्यतामिति। शकटदासस्तन्नामा कायस्थजातीयो मन्मित्रमुच्यतामभिधीयताम् मदुक्त्येति शेषः, यथा यत् वयं कुमारेण मलयकेतुना आभरणमलङ्करणं परिधापिता परिधारिताः (प्राहिताः) प्रागिति शेषः, तत्तस्मात् इदानीं साम्प्रतम् अनलङ्कृतैराभरणशून्यैः अस्माभिः कुमारदर्शनं कुमारावलोकनम् अनुभवितुं कर्तुं न युक्तम् असाम्प्रतमित्यर्थः, अतोऽस्माद्धेतोः यत् अलङ्करणत्रयं क्रीण्यलङ्करणानीत्य-

राक्षसः—( नाट्येनावलोक्यात्मानमलंकृत्योत्थाय च ) । भद्रे ! राजकुलगामिनं मार्गमादेशय ।

प्रतीहारी—एदु एदु अमच्चो । ( १ )

राक्षसः—( स्वगतम् । ) अधिकारपदं नाम निर्दोषस्यापि पुरुषस्य महदाशङ्कास्थानम् । कुतः ?—

भयं तावत् सेव्यादभिनिविशते सेवकजनं
ततः प्रत्यासन्नाद् भवति हृदयेष्वेव निहितम् ।

( १ ) एतु एत्वमात्यः ।

र्थः । क्रीतं मूल्यदानपूर्वकमात्मसात्कृतं तन्मध्यात् अलङ्करणत्रयमध्यात् एकमलङ्करणं दीयतां समर्प्यताम् ।

नाट्येनेति । नाट्येन नटोचितव्यापारेण अवलोक्य दृष्ट्वाऽलङ्करणमिति शेषः । आत्मानं स्वशरीरमलंकृत्य भूषयित्वा उत्थाय गमनोत्सुको भूत्वा ब्रवीतीति शेषः । भद्रे ! ( प्रतीहारीसम्बोधनम् ) राजकुलगामिनं नृपसमीपप्रापकं मार्गं पन्थानमादेशय दर्शय ।

अधिकारपदमिति । कार्ये नियोजनमधिकारः स पदं स्थानम् अधिकारपदं दासत्वं निर्दोषस्यापि निरागसोऽपि पुरुषस्य महदाशङ्कास्थानम् परमभयकारणम् ।

भयमिति । भयं साध्वसं ( कर्तृ )

भीतिर्भीः साध्वसं भयमित्यमरः ।

सेव्यात् स्वामिनः तावत् प्रथमं सेवकजनम् अनुचरम् अभिनिविशते सर्वतः प्राप्नोति ( अभिनिपूर्वकविशतेरात्मनेपदविधायकसूत्रं तु 'नेर्विशः' इति, ('अभिनिविशश्चे'त्यधिकरणस्य कर्मत्वम् ) ततस्तदनन्तरं प्रत्यासन्नात् राजनिकटवर्तिनो जनात् अमात्यप्रभृतेरित्यर्थः । हृदयेष्वेव सेवकजनस्य चित्तेष्वेव निहितं स्थिरं भवति भयमिति शेषः । अध्यारूढानामुच्चपदप्राप्तानां भृत्यानामिति शेषः । पदं स्थानं (कर्तृ वा) असुजनद्वेषजननं दुर्जनक्रोधवर्द्धकं भवतीति क्रियाशेषः । सोच्छ्रायाणामत्युन्नतानां पुरुषाणामिति शेषः । मतिर्बुद्धिः पतनमधोगमनम् अनुकूलमुचितं कलयति अवगच्छति । अनुचराणां प्राक् राज्ञो भयं ततस्तत्पार्श्ववर्त्यमात्यादिभ्यश्च भयं भवति महामहिमशालिनामनुचराणामुत्तमपदावलोकनात्खलानां क्रोध उत्पद्यते अत उन्नत

अतोऽध्यारूढानां पदमसुजनद्वेषजननं
मतिः सोच्छ्रायाणां पतनमनुकूलं कलयति ॥ १२ ॥

प्रतीहारी—( परिक्रम्य ) अमच्च ! अअं कुमालो चिट्ठदि, ता उवसप्पदु णं अमच्चो। ( १ )

राक्षसः—( नाट्येनावलोक्य। ) अये ! अयं कुमारस्तिष्ठति य एषः,—

पादाग्रे दृशमवधाय निश्चलन्तीं
शून्यत्वादपरिगृहीततद्विशेषाम्।
वक्त्रेन्दुं वहति करेण दुर्वहाणां
कार्य्याणां कृतमिव गौरवेण नम्रम् ॥ १३ ॥

---

( १ ) अमात्य ! अयं कुमारस्तिष्ठति, तदुपसर्पत्वेनममात्यः।

---

पदस्थितानां पुरुषाणां बुद्धिः स्वपतनमवश्यम्भावित्वेनोचितमेव विचारयतीति सरलार्थः। अत्युन्नतपदात् भीता बुद्धिमन्तोऽहर्निशमात्मनस्ततः पतनमेव चिन्तयन्तीति भावः। तुरीयपादप्रतिपाद्यात्युन्नतपदावलम्बि भृत्यपतनमवश्यम्भावीत्यर्थे पादत्रयगतवाक्यार्थसमुदायस्य हेतुत्वेनाभिधानाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः। तदुक्तं पण्डितराजजगन्नाथप्रणीते रसगङ्गाधरे—

अनुमितिकरणत्वेन सामान्यविशेषभावाभ्याञ्चाऽनालिङ्गितः प्रकृतार्थोपपादकत्वेन विवक्षितोऽर्थः काव्यलिङ्गम्।

अलङ्कारसर्वस्वोक्तञ्चैतल्लक्षणं यथा—
हेतोर्वाक्यपदार्थता काव्यलिङ्गम्।

उन्नतपदारूढानां बुद्धिरात्मनोऽधोगमनमुचितमेवावगच्छतीति तुरीयपादप्रतिपाद्यसामान्यार्थेन पादत्रयप्रतिपाद्यविशेषार्थस्य समर्थनादर्थान्तरन्यासश्चेत्यनयोः संसृष्टिः। प्रसादो गुणः। वैदर्भी रीतिः। शिखरिणी वृत्तम् ॥ १२ ॥

पादाग्र इति। य एष कुमारः शून्यत्वाच्चित्तव्यापारहीनत्वात् हेतोः न परिगृहीतो ज्ञातस्तद्विशेषः पादाग्ररूपाद्यात्मकविशेषो यया सा तथोक्ता तामपरिगृहीततद्विशेषाम् अज्ञातपादाग्ररूपाद्यात्मकविशेषाम् अत एव निश्चलन्तीं विषयान्तरानासक्तां दृशं दृष्टिमवधाय सम्यग्रूपेण संस्थाप्य दुर्वहाणां महतां कार्याणां गौरवेण गुरुत्वेन नम्रमानतं कृतमिव विहितमिव वक्त्रमिन्दुमिव वक्त्रेन्दुम् ( उपमितं व्या-

( उपसृत्य । ) विजयतां विजयतां कुमारः ।

मलयकेतुः—आर्य्य ! अभिवादये । इदमासनमास्यताम् ।

राक्षसः—( उपविशति । )

मलयकेतुः—अमात्य ! चिरदर्शनेनार्य्यस्य वयमुद्विग्नाः ।

राक्षसः— कुमार ! प्रयाणे प्रतिविधानमनुतिष्ठता मया कुमारादयमुपालम्भोऽधिगतः ।

मलयकेतुः—अमात्य ! प्रयाणे कथं प्रतिविहितमिति श्रोतुमिच्छामि ।

राक्षसः—कुमार ! एवमादिष्टाः कुमारस्यानुयायिनो राजानः ।

( प्रस्थातव्यमित्यादिश्लोकं पुनः पठति ) ।

मलयकेतुः—( स्वगतम् । ) विज्ञायते, कः ' य एव मद्विनाशेन चन्द्र-

---

प्रादिभिः सामान्याऽप्रयोगे इति समासः ) मुखचन्द्रं करेण हस्तेन वहति धारयति। कार्यगौरवेण करे मुखं संस्थाप्य पादाग्रे दृशं निधाय किमपि चिन्तयति कुमार इति भावः । वक्त्रेन्दुमित्यत्र वक्त्रमेवेन्दुर्वक्त्रेन्दुः वक्त्रमिन्दुरिव वक्त्रेन्दुरित्युभयविधसमासाभ्यां रूपकोपमयोः सन्देहसङ्करः । कृतमिवेत्यत्रोत्प्रेक्षणार्थकेवशब्दसद्भावाद्वाच्योत्प्रेक्षया संसृष्टः । प्रहर्षिणी वृत्तम् ।

त्र्याशाभिर्मनजरगाः प्रहर्षिणीयम् ।

इति लक्षणात् ॥ १३ ॥

अमात्येति । अमात्य प्रधानसचिव, आर्यस्य पूज्यस्य भवतश्चिरदर्शनेन बहुकालोत्तरमवलोकनेन वयमुद्विग्ना उत्कण्ठिताः कार्यशैघ्र्याद्व्यग्राः स्म इति क्रियाशेषः ( भवदवलोकनमरुन्तुदं मे साम्प्रतमिति गूढोऽर्थः ) ।

कुमारेति । कुमार मलयकेतो ! प्रयाणे युद्धयात्रायां प्रतिविधानं प्रयत्नमनुतिष्ठता विदधता मया कुमाराद्भवतः सकाशादयमेव उपालम्भोऽनादरोऽधिगतः प्राप्तः ।

अमात्येति । अमात्य मन्त्रिन् ! प्रयाणे युद्धयात्रायां कथं केन प्रकारेण प्रतिविहितमुद्युक्तं व्यवस्था कृतेति श्रोतुमिच्छामि ।

कुमारेति । कुमारस्यानुयायिनः भवतोऽनुगमनशीला राजानः एवमित्थं प्रस्थातव्यं पुरस्तादित्याद्युक्तरीत्येत्यर्थः । आदिष्टा आज्ञप्ता मयेति शेषः ।

स्वगतमिति । स्वगतमनतिस्पष्टं यथा तथा प्रतीतोत्यर्थः । विज्ञायतेऽवग-

गुप्तमाराधयितुमुद्यताः त एव मां परिवृण्वन्ति ( प्रकाशम् ) आ-र्य्य ! अस्ति कश्चिद् यः कुसुमपुरं प्रति गच्छति, तत आगच्छति वा ?

राक्षसः—कुमार ! अवसितमिदानीं गतागतप्रयोजनम्। ननु पञ्च-षैरहोभिर्वयमेव तत्र गन्तास्मः।

मलयकेतुः—( स्वगतम्। ) विज्ञायते ( प्रकाशम्। ) यद्येवं, तत् किमयमार्य्येण सलेखः पुरुषः कुसुमपुरं प्रस्थापितः ?

राक्षसः—( विलोक्य। ) अये ! सिद्धार्थकः। भद्र ! किमिदम् ?

सिद्धार्थकः— ( सबाष्पं लज्जां नाटयन्। ) पसीददु पसीददु अम-च्चो। अमच्च ! अतिताडीअन्तेण मए ण पारिदं अमच्चस्स रहस्सं

---

म्यते तवाऽभिप्राय इति शेषः, कथं कुतः य एव मद्विनाशेन मां भिदन्तुमित्यर्थः चन्द्रगुप्तं मौर्यमाराधयितुं सेवितुमुद्यतास्तत्पराः त एव ते राजान एव मां परिवृण्व-न्ति मच्छरीररक्षणार्थं पथि मां परितो वेष्टय गमिष्यन्ति। प्रकाशं सुस्पष्टं यथा तथा ब्रवीति। आर्य पूज्य ! यः कुसुमपुरं प्रति गच्छति तत आगच्छति वा कुसुमपुरं गत्वा ततोऽप्यागच्छेदित्यर्थः। एतादृशः कश्चित्पुरुषोऽस्ति।

अवसितमिति। इदानीं साम्प्रतं गतागतप्रयोजनम् गमनागमनप्रयोजनम् अवसितं समाप्तम् पञ्च षट् वा परिमाणमेषां ते पञ्चषास्तैः पञ्चषैः (बहुव्रीहौ संख्ये-ये डज् बहुगणादिति डच् ) अहोभिर्दिवसैः पञ्चषड्दिवसाऽभ्यन्तर एवेत्यर्थः। वयमेव तत्र कुसुमपुरे गन्तास्मः कुसुमपुरं गमिष्याम इत्यर्थः (भविष्यदनद्यतनेऽर्थे लुट्)।

स्वगतमिति। राक्षसोक्तिमाकर्ण्य मलयकेतुर्मनस्येव ब्रवीति किन्तदाह—विज्ञायत इति। मौर्यनिग्रहार्थं वयमेव कुसुमपुरं गमिष्याम इति राक्षसाऽभिप्रायः मलयकेतुना मौर्य्यामात्यकार्यकरणाय तव कुसुमपुरे गमनमित्येवं रूपेणावगत इत्य-भिप्रायेणैव विज्ञायत इत्युक्तिः प्रकाशं सर्वैः श्राव्यं यथा तथा ब्रवीति। यद्येवं कुसुमपुरगमनेऽभिमते सति तत्तस्मात् अयमेषः सलेखः पत्रिकायुक्तः पुरुषोऽनुचरः किं किमर्थमार्येण पूज्येन भवता कुसुमपुरम्प्रति प्रस्थापितः प्रेषितः।

सबाष्पमिति। वाष्पेण नेत्रजलेन सहितं सवाष्पं सरोदनं यथा तथा लज्जां त्रपां नाटयन्नभिनयन् कथयतीति क्रियाशेषः। प्रसीदतु प्रसन्नो भवतु ( त्वरासंसू-चनाय द्विरुक्तिः ) अमात्य मन्त्रिन् ! अतिताड्यमानेन मया अमात्यस्य भवतो रहस्यं गोप्यं धारयितुं गोप्तुं न पारितं न शक्तम्।

धारिदुं। (१)

राक्षसः—भद्र! कीदृशं तत् रहस्यं न खल्ववगच्छामि।

सिद्धार्थकः—ननु विण्णवेमि. ताडीअन्तेण मए ‥ ‥‥(२)

(इत्यर्धोक्ते सभयमधोमुखस्तिष्ठति)।

मलयकेतुः—भागुरायण! स्वामिनः पुरस्ताद् भीतो लज्जितश्च नैव कथयिष्यति। अतः स्वयमेवार्याय कथय।

भागुरायणः—यदाज्ञापयति कुमारः। अमात्य! एष कथयति, यथा-"अहममात्यराक्षसेन लेखं दत्त्वा वाचिकञ्च सन्दिश्य, चन्द्रगुप्तसकाशं प्रेषितः" इति।

राक्षसः—भद्र सिद्धार्थक! अपि सत्यम्?

सिद्धार्थकः—(लज्जां नाटयन्।)"‥‥‥‥‥एव्वं अतिताडीअन्तेण मए णिवेदिदं। (३)

राक्षसः—कुमार! अनृतमेतत्। ताड्यमानः किं न ब्रूयात्?

मलयकेतुः—भागुरायण! दर्शय लेखं, वाचिकञ्चायमस्मै स्वभृत्यः कथयिष्यति।

---

(१) प्रसीदतु प्रसीदत्वमात्यः। अमात्य! अतिताड्यमानेन मया न पारितममात्यस्य रहस्यं धारयितुम्।

(२) ननु विज्ञापयामि, ताड्यमानेन मया‥‥‥‥‥‥।

(३) "‥‥‥एवमतिताड्यमानेन मया निवेदितम्।

---

कीदृशमिति। तत् सिद्धार्थकोक्तं रहस्यं गोप्यं कीदृशं किं विषयकमिति न खल्ववगच्छामि नैव जानामि।

स्वामिन इति; स्वामिनः मम पुरस्तादग्रे भीतस्त्रस्तो लज्जितस्त्रपायुक्तश्च एष सिद्धार्थकः न कथयिष्यति रहस्यं नाऽभिधास्यति, अतोऽस्मात् स्वयमेव साक्षादेव आर्याय राक्षसाय कथय इति।

कुमारेति। कुमार मलयकेतो! एतत् सिद्धार्थकोक्तमनृतमसत्यम्। ताड्यमानो दण्ड्यमानः पुरुषः किं न ब्रूयात् अलीकमपि ब्रूयादित्यर्थः।

भागुरायणः—( लेखमवलोकयन् ) "स्वस्ति यथास्थाने कुतोऽपि पुरुषविशेष-मवगमयति" इति वाचयति ) ।

राक्षसः—कुमार ! शत्रोः प्रयोग एषः ।

मलयकेतुः—लेखस्याशून्यार्थमार्य्येणेदमाभरणमनुप्रेषितमिति, तत्त कथं शत्रोः प्रयोग एष स्यात् ? ( इत्याभरणं दर्शयति ) ।

राक्षसः—( आभरणं निर्वर्ण्य । ) कुमार ! नैतन्मयाऽनुप्रेषितम् , एत-द्धि कुमारेण मह्यं दत्तं, मया च परितोषस्थाने सिद्धार्थकाय दत्तम् ।

भागुरायणः—भो अमात्य ! ईदृशस्याभरणविशेषस्य, विशेषतः कु-मारेण स्वगात्रादवतार्य्य दत्तस्येयं परित्यागभूमिः ?

मलयकेतुः—वाचिकमप्याप्ततमात्सिद्धार्थकाच्छ्रोतव्यमिति लिखि-तमार्य्येण ।

---

शत्रोरिति । शत्रोर्भवदरिभूतस्य चन्द्रगुप्तस्यैषोऽयं प्रयोगः पत्रादिप्रेषण-मित्यर्थः ।

लेखस्येति । आर्येण पूज्येन भवता लेखस्य पत्रिकाया अशून्यार्थं पूर्त्यर्थं विश्रम्भार्थमिति यावत् । इदमेतदाभरणमलङ्करणमनुप्रेषितमनुप्रहितम् , तत्तस्मात् शत्रोः रिपोः कथं कुत एष प्रयोगः पत्रादिप्रेषणम् ।

आभरणमिति । आभरणमलङ्करणं निर्वर्ण्य दृष्ट्वा ब्रवीतीति शेषः, मया एतदलङ्करणं नानुप्रेषितं नानुप्रहितम् एतद्धि एतदलङ्करणं हि कुमारेण मलयकेतुना मह्यं दत्तं ( मह्यमिति सम्प्रदानचतुर्थ्यन्तम् ) मया च मया तु परितोषस्थाने पा-रितोषिकरूपेण सिद्धार्थकाय दत्तम् ।

ईदृशस्येति । कुमारेण मलयकेतुना स्वगात्रान्निजशरीरादवतार्य पृथक्कृत्य विशेषतो विशेषरूपेण बहुमानपुरस्सरमित्यर्थः । दत्तस्य ईदृशस्य महार्घस्याऽऽभर-णस्य इयं दानभूमिः एष दानपात्रम् सिद्धार्थकोद्देश्यकदानमित्यर्थः । वस्तुविशे-षस्य पात्रविशेषस्य पात्रविशेषार्पणमेव युक्तमिति भावः ।

वाचिकमिति । अतिशयेनाप्त आप्ततमस्तस्मादाप्ततमात् अतिविश्वासभा-जनात् अस्मात् सिद्धार्थकात् सकाशात् श्रोतव्यमाकर्णितव्यम् । इत्येतदुक्तमार्येण पूज्येन भवता लिखितम् ।

राक्षसः—कुतो वाचिकम्? कस्य वा लेखः? अयमेवास्मदीयो न भवति।

मलयकेतुः—इयं तर्हि कस्य मुद्रा??

राक्षसः—कुमार! कपटमुद्रामप्युत्पादयितुं शक्नुवन्ति धूर्त्ताः।

भागुरायणः—कुमार! सम्यगमात्यो विज्ञापयति। सिद्धार्थक! केनायं लिखितो लेखः?

सिद्धार्थकः—(राक्षसमुखमवलोक्य तूष्णीमधोमुखस्तिष्ठति)।

भागुरायणः—अलं पुनरात्मानं ताडयित्वा, कथय।

---

कुत इति। वाचिकं वाग्सन्देशः कुतः कस्मात् क वा कस्य वा लेखः पत्रम्, अयमेव लेख एव अस्मदीयो मामकीनो न भवति। यल्लेखदर्शनान्मयि सन्देहसमुदयादभिभवितुं मामुपस्थितः स लेख एव मल्लिखितो नेत्यर्थः।

इयमिति। तर्हि तदा इयमेषा मुद्राऽङ्कनं कस्य पुरुषस्यास्तीति शेषः। इति पश्येति च क्रियाशेषः। लेखस्यातथ्यत्वेऽपि मुद्राया अतथ्यत्वं न सम्भवतीति मुद्रादर्शनात्त्वयि सन्देहः समुचित एवेत्यर्थः।

कुमारेति। कुमार मलयकेयो! धूर्त्ता वञ्चकाः परप्रतारणशीला इति यावत्। जना इति शेषः। कपटमुद्रां कृत्रिममुद्रामपि; उत्पादयितुं निर्मातुं शक्नुवन्ति समर्था भवन्ति। परप्रतारणशीलानां कल्पितमुद्रानिर्माणेऽपि सौकर्यमेव नान्याधीनत्वापेक्षेति भावः।

सम्यगिति। अमात्यः सचिवो राक्षसः सम्यक् विज्ञापयति याथातथ्येनाभिदधाति। भद्र कल्याणिन् सिद्धार्थक! केनायं लिखितो लेखः किन्नामधेयेन पुरुषेण पत्रिकेयं लिखितेत्यर्थः। इहाऽमात्यागमनात् प्राक् त्वदीरितवचने तथ्यत्वाऽतथ्यत्वयोर्द्वयोरपि सम्भवः सन्देहश्च, साम्प्रतं तु राक्षसस्यात्र विद्यमानत्वाद्वचनं तथ्यमेव वा भवितुमर्हति नोभयोः सम्भवः सन्देहश्चेति भावः।

अलं पुनरिति। राक्षसस्यैव लेख इत्यभिधातुमुद्युक्तं राक्षसमुखावलोकनाल्लज्जमानं च सिद्धार्थकम्प्रति भागुरायणोक्तिः पुनरात्मानं प्राणं ताडयित्वा क्लेशयित्वाऽलं व्यर्थम्। कथय ब्रूहि राक्षससाक्षात्कारे राक्षसस्यैव लेख इत्यभिधातुमात्मनः क्लेशोऽभिमन्यते स च कथनादेव निवृत्तः स्यान्नान्यथेति ब्रूहि यथार्थरूपेण

सिद्धार्थकः—अज्ज, सअटदासेण (१)

राक्षसः—कुमार ! यदि शकटदासेन लिखितस्तर्हि मयैव लिखितः ।

मलयकेतुः—विजये ! शकटदासं द्रष्टुमिच्छामि ।

प्रतीहारी—जं कुमालो आणवेदि । (२)

भागुरायणः—(स्वगतम्) न खल्वनिश्चितार्थमार्य्यचाणक्यप्रणिधयोऽभिधास्यन्ति आगत्य शकटदासो वा, "सोऽयं लेखः" इति प्रत्यभिज्ञाय पूर्ववृत्तं प्रकाशयेत् । एवं सति सन्दिहानो मलयकेतुरस्मिन्

(१) आर्य्य ! शकटदासेन ।
(२) यत् कुमार आज्ञापयति ।

केन लिखितोऽयं लेख इति भावः । यथार्थरूपेणानुक्तौ भूयस्ते ताडनं भविष्यतीति च गूढोऽभिप्रायः ।

आर्येति । आर्य पूज्य ! शकटदासेन तन्नाम्ना कायस्थजातीयेन लिखितोऽयं लेख इति शेषः । मन्त्रप्रधानसचिवस्य राक्षसस्याग्रे साक्षात्तन्नामाभिधाने त्रपासाध्वसयोराधिक्यात्तद्व्याजेन शकटदासनामोक्तिरिति तात्पर्यम् ।

यदीति । शकटदासेन मन्मित्रेण लिखितश्चेत्तर्हि तदा मयैव लिखित इत्यवगन्तव्यम् । शकटदासे लेखकत्वेन निश्चिते सत्यहमेव लेखको वृत्त इत्यर्थः । अतिस्नेहभाजने शकटदासे राक्षसेन सर्वथा लेखनाऽभावस्य निश्चितत्वादित्थमुक्तिरित्यवधेयम् ।

विजये इति । लेखकनिर्णयक्षणे सिद्धार्थकेन शकटदासनाम्नोऽभिधानात्तन्निर्णयस्याऽऽवश्यकत्वात्तस्य च शकटदाससाक्षात्कारमन्तराऽसम्भवादिति स्वप्रतीहारीं विजयाम्प्रति मलयकेतोरुक्तिः विजये ! शकटदासं राक्षससहृदयं कायस्थजातीयमुक्तनामानं पुरुषं द्रष्टुमवलोकितुमिच्छामि कामये यथा शकटदासो मे दृष्टिगोचरो भवेत्तथा विधीयतां त्वयेति भावः ।

यत्कुमार इति । कुमारो भवान् यत् कार्यं कर्त्तुमिति शेषः । आज्ञापयति आदिशति तत्कार्यं करोमीत्यर्थः । शकटदाससाक्षात्कारात्मककार्यसम्पादनार्थमाज्ञप्तं तदचिरमेव सम्पादयामीति भावः ।

स्वगतमिति । अनतिस्पष्टं यथा तथा ब्रवीति भागुरायणः । आर्यश्चासौ

प्रयोगे श्लथादरो भवेत् । ( प्रकाशम् ) कुमार ! न कदाचिदपि शकटदासोऽमात्यराक्षस्याग्रतो "मया लिखितः" इति प्रतिपत्स्यते, अतोऽन्यलिखितमस्यानीयतां, यतो वर्णसंवाद एवैतत् सर्वं विभावयिष्यति ।

मलयकेतुः—विजये एवं क्रियताम् ।

भागुरायणः—कुमार ! मुद्रामपीयम ।

---

चाणक्य आर्यचाणक्यस्तस्य प्रणिधयः आर्यचाणक्यप्रणिधयः कौटिल्यदूताः खलु निश्चये अनिश्चितार्थमनिर्णीतवस्तुनाऽभिधास्यन्ति न कथयिष्यन्ति, वाऽथवा शकटदासौ राक्षससहृदयः, सोऽयं लेखः, प्राक् चाणक्येन मया लेखितोऽसौ लेख इति प्रत्यभिज्ञाय इति सम्यगवबुद्ध्य पूर्ववृत्तं ( सिद्धार्थकप्रेरणया मया शकटदासहस्तेन लेखितमिदं पत्रमिति प्रथमाङ्कोक्तवृत्तान्तमित्यर्थः ) प्रकाशयेत् ख्यापयेत् । एवं सति पूर्ववृत्ते प्रकाशिते सतीत्यर्थः । सन्दिहानः सन्दिग्धचित्तो मलयकेतुः कुमारः अस्मिन् प्रयोगे राक्षसप्रभृतिविषयकवैमनस्यात्मके कार्ये श्लथादरोऽनुत्साहितचित्तो भवेत् स्यात् । प्रकाशं सुस्पष्टं ब्रवीतीत्यर्थः । कुमार ! शकटदासः अमात्यराक्षसस्याग्रतः प्रधानसचिवस्य राक्षसस्याग्रे इत्यर्थः । मया लिखितः अयं लेख इति शेषः । कदाचिदपि जात्वपि न प्रतिपत्स्यते न स्वीकरिष्यति, अतोऽस्माद्धेतोः । अस्य शकटदासस्य अन्यलिखितम् अपरलेख आनीयताम् आनीय स्थाप्यताम् यतो यस्मादन्यलिखितानयनात् वर्णसंवादे एवाऽक्षरसादृश्यसम्मेलने सत्येवेत्यर्थः । एतत्सर्वं कस्यायं लेख इत्याद्यखिलवृत्तान्तं विभावयिष्यति निर्णयिष्यति । ( आर्यकौटिल्येन कुतश्चिद्व्याजात्सिद्धार्थकप्रेरणया वञ्चितेन शकटदासेन लेखितमिदं पत्रं स्यात् अतः परं कुसुमपुर एवाऽनेन सिद्धार्थकेन मद्द्वारालि( ले )खितमिदं पत्रमितीहानीतस्य शकटदासस्योक्त्या सकलाऽऽर्यकौटिल्यकूटनीतिप्रयोगप्रकाशः स्यादतो विमलमतेर्भागुरायणस्याऽन्यथाकरणं प्रकाशमित्यादिनेति भावः ।

विजये इति । एवं क्रियताम् । यथा भागुरायणो ब्रवीति तथा विधीयतां त्वयेत्यर्थः । शकटदासलिखिताऽपरपत्राऽऽनयनस्य भागुरायणेनाऽभिधानात्तदेव त्वयाऽऽनीयतामिति भावः ।

मुद्रामपीति । इयं प्रतीहारी मुद्राम् अपिशब्दादपरलेखमपि आनयतु ।

मलयकेतुः—उभयमप्यानीयताम् ।

प्रतीहारी—जं कुमालो आणवेदि ( इति निष्क्रम्य पुनः प्रविश्य । ) कुमाल ! इदं क्खु तं सअडदासेण स्सहत्थलिहिदं पत्तअं मुद्दा अ । (१)

मलयकेतुः—( उभयमपि नाट्येनावलोक्य । ) आर्य्य ! संवदन्त्यक्षराणि ।

राक्षसः—( स्वगतम् । ) संवदन्त्यक्षराणि, शकटदासस्तु मम मित्रमिति च विसंवदन्त्यक्षराणि, तत् किं शकटदासेन लिखितम् ?—

स्मृतं स्यात् पुत्रदाराणां विस्मृताः स्वामिभक्तयः ।
चलेष्वर्थेषु लुब्धेन न यशःस्वनपायिषु ॥ १४ ॥

( १ ) यत् कुमार आज्ञापयति । कुमार ! इदं खलु तत् शकटदासेन स्वहस्तलिखितं पत्रं, मुद्रा च ।

इयं प्रतीहारी न केवलमपरलेखमेवानयतु किन्तु मुद्रामपीत्यर्थे वाऽपेः स्वारस्यसंघटनम् ।

**उभयमपीति** । नाट्येन नटोचितव्यापारेण भङ्ग्यादिनेत्यर्थः । उभयमपि लेखं मुद्राञ्च अवलोक्य दृष्ट्वा भागुरायणम्प्रति मलयकेतूक्तिः । आर्य पूज्य ! अक्षराणि वर्णाः संवदन्ति सादृश्यं गमयन्ति वर्णानां सम्यगानुरूप्यमस्तीत्यर्थः ।

**स्वगतमिति** । अनतिस्पष्टं यथा तथा राक्षसो ब्रवीतीत्यर्थः । अक्षराणि वर्णाः सम्वदन्ति सादृश्यं गमयन्ति शकटदासो मम मित्रमित्यक्षराणि तु विसम्वदन्ति विरुद्धत्वमवगमयन्तीत्यर्थः ।

**स्मृतमिति** । चलेषु विनाशशालिषु अर्थेषु धनेषु न पुनः अनपायिषु चिरस्थायिषु अविनश्वरेष्विति यावत् । यशःसु कीर्त्तिषु लुब्धेन इच्छुकेन शकटदासेनेति शेषः । स्वामिनि भक्तयः स्वामिभक्तयः प्रभुविषयकाऽनुरागाः विस्मृताः सहसा परिहृताः स्युः पुत्रदाराणां स्मृतं स्यात् पुत्राणां स्त्रियश्च स्मरणं कृतं स्यात् । मदनुमत्या पत्रलिखनेनैव तव पुत्रदाराणां मोक्ष इति कौटिल्यवचः श्रुत्वा पुत्रादिमात्सर्येण स्वामिविषयकानुरागं विस्मर्य लिखितवानित्यर्थः । ( पुत्रदाराणामित्यत्राधीगर्थदयेशां कर्मणि इत्यनेन कर्मणि षष्ठी ) यदि कौटिल्यानुमत्या शकटदासेन पत्रं लिखितं तदा पुत्रदाराणां स्मरणं कृतं स्यान्न तु स्वामिभक्तीनामित्यर्थो

अथवा, कः सन्देहः ?—

मुद्रा तस्य कराङ्गुलिप्रणयिनी, सिद्धार्थकस्तत्सुहृत्
तस्यैवापरलेख्यसूचितमिदं पत्रं प्रयोगाश्रयम् ।
सुव्यक्तं शकटेन भेदपटुभिः सन्धाय सार्द्धं परैः
भर्तृस्नेहपराङ्मुखेन, कृपणं प्राणार्थिना चेष्टितम् ॥१५॥

मलयकेतुः—आर्य्य ! 'अलङ्कारत्रयं श्रीमता यदनुप्रेषितं, तदुपगतम्' इत्यार्य्येण परिलिखितं, तन्मध्यादेकं किमिदम् ? ( निर्वर्ण्यात्मगतम् । )

---

परिसंख्याऽलङ्कारः । प्रसादगुणः । वैदर्भी रीतिः । अनुष्टुब्वृत्तम् ॥ १४ ॥

मुद्रेति । मुद्राऽङ्गुलिमुद्रा तस्य शकटदासस्य कराङ्गुलिप्रणयिनी करशाखावर्तिनी सिद्धार्थकः तत्सुहृत् शकटदासमित्रं पत्रं प्रयोगाश्रयं कूटनीत्याधारभूतम् । इत्थमनेकहेतुभिः भेदपटुभिः उपजापनिपुणैः परैः शत्रुभिः सार्द्धं सह सन्धाय मिलित्वा भर्त्तुः स्नेहपराङ्मुखेन स्वाम्यनुरागविमुखेन प्राणार्थिना पुत्रदारादिजीवनाभिलाषिणा शकटेन शकटदासेन सुव्यक्तं निश्चितं कृपणं दीनं यथा स्यात्तथा चेष्टितं व्यवसितम् । अङ्गुरीयकस्य शकटदासकरांगुलिवर्त्तित्वात् सिद्धार्थकस्य शकटदासमित्रत्वात् कूटनीतिरचितैतत्पत्रस्य शकटदासलिखितापरलेखसंवादितत्वादवगम्यते यत् भेदकुशलैः शत्रुभिः सह मिलित्वा परिहृतस्वाम्यनुरागेण पुत्रादिजीवाकांक्षिणा शकटदासेन निश्चितं दीनं यथा तथा व्यसितमित्यर्थः । शकटदासस्य दीनव्यसितत्वे हेतुभूतानां पूर्वार्द्धोपात्तशब्दानां पदार्थत्वेनाऽभिधानात्पदार्थहेतुकं काव्यलिङ्गमलङ्कारः तदुक्तं दर्पणे -

हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम् ।

इति । शकटदासकर्तृकदीनचेष्टितात्मककार्यस्य मुद्रा तस्य कराङ्गुलिप्रणयिनीत्याद्यनेकसाधकसत्वात्समुच्चयालङ्कारश्च ।

समुच्चयोऽयमेकस्मिन् सति कार्यस्य साधके ।
खले कपोतिकान्यायात् तत्करः स्यात्परोऽपि चेत् ॥

इत्यादिदर्पणोक्तेः । प्रसादगुणः । पाञ्चाली रीतिः । शार्दूलविक्रीडितं वृत्तम् ॥ १९ ॥

आर्येति । आर्य पूज्य ! श्रीमता लक्ष्मीयुक्तेन कल्याणभाजनेन च यत् अल-

कथं तातेन धृतपूर्वमिदमाभरणम् ? ( प्रकाशम् । ) आर्य्य ! कुतोऽयमलङ्कारः ?

राक्षसः—वणिग्भ्यः क्रयादधिगतः ।

मलयकेतुः—विजये ! अपि प्रत्यभिजानाति भवती भूषणमिदम् ?

प्रतीहारी—( निर्वर्ण्य सबाष्पम् । ) कुमाल ! कहं ण पच्चभिआणिस्सं इमं क्खु सुगिहीदणामधेएण देवेण पव्वदीसरेण धारिदपुव्वं । (१)

मलयकेतुः—( सबाष्पम् ) हा तात !-

एतानि तानि तव भूषणवल्लभस्य
गात्रोचितानि कुलभूषण ! भूषणानि ।
यैः शोभितोऽसि, मुखचन्द्रकृतावभासो
नक्षत्रवानिव शरत्समयप्रदोषः ॥ १६ ॥

---

( १ ) कुमार ! कथं न प्रत्यभिज्ञास्यामि ? इदं खलु सुगृहीतनामधेयेन देवेन पर्व्वतेश्वरेण धारितपूर्व्वम् ।

---

ङ्काराणां त्रयं त्रीण्यलङ्करणानीत्यर्थः अनुप्रेषितम् अनुप्रहितं तव अलङ्कारत्रयम् उपगतं प्राप्तम् इत्यार्येण पूज्येन भवता यल्लिखितं तन्मध्यात् इदमेकं किम् अस्तीति शेषः । निर्वर्ण्य दृष्ट्वा आत्मगतं मनस्येव विचारयतीत्यर्थः । तातेन पित्रा धृतपूर्वं पूर्वं धृतम् इदमेतत् आभरणम् अलङ्करणं कथं प्राप्तमनेनेति शेषः । प्रकाशं सर्वैः श्राव्यं यथा तथा ब्रवीतीत्यर्थः । आर्य पूज्य ! अयमलङ्कारः इदमाभरणं कुतः कस्मादधिगत इति शेषः ।

अपीति । इदमेतत् भूषणमलङ्करणम् अपि प्रत्यभिजानासि परिचिनोषि किम् ।

कुमारेति । कुमार कथं न प्रत्यभिज्ञास्यामि कुतो नाऽवगमिष्यामि आभरणमिति शेषः । इदं खलु एतदलंकरणन्तु सुगृहीतनामधेयेन प्रातःस्मरणीयनाम्ना देवेन राज्ञा पर्वतेश्वरेण भवतस्तातेन धारितपूर्वं पूर्वं धारितमित्यर्थः ।

एतानीति । हे कुलभूषण वंशालङ्करण ! वल्लभानि भूषणानि यस्य स भूषणवल्लभस्तस्य भूषणवल्लभस्य प्रियालङ्करणस्य ( अत्र वल्लभशब्दस्य परप्रयोगः कविकृतो बोध्यः । तस्य च निरङ्कुशत्वात् वल्लभभूषणस्येति पाठेऽपि क्षत्यभावाच्च ) तव एतानि तानि चिरकालिकानि गात्रोचितानि त्वदीयशरीरयोग्यानि भूषणानि

राक्षसः—( स्वगतम् । ) कथं पर्वतेश्वरधृतपूर्वाणीत्याह ? ( प्रकाशम् ) व्यक्तमेतान्यपि तेन चाणक्यप्रयुक्तेन वणिग्जनेनास्मासु विक्रीतानि ।

मलयकेतुः—आर्य्य ! तातेन धृतपूर्वाणामाभरणविशेषाणां विशेषतश्चन्द्रगुप्तहस्तगतानां वणिग्भ्यः क्रयादधिगम इति, न युज्यते, अथवा युज्यत एवैतत्—

चन्द्रगुप्तस्य विक्रेतुरधिकं लाभमिच्छतः ।
कल्पिता मूल्यमेतेषां क्रूरेण भवता वयम् ॥ १७ ॥

---

अलङ्करणानि सन्तीति शेषः । यैर्भूषणैः मुखं चन्द्रमिव मुखचन्द्रस्तेन कृतो विहितोऽवभासो दीप्तिर्येन स मुखचन्द्रकृतावभासः आस्येन्दुविहितदीप्तिः त्वमिति शेषः। ( पक्षान्तरे ) मुखे आरम्भे चन्द्रेण कृतोऽवभासः प्रकाशो यस्य स मुखचन्द्रकृतावभासः नक्षत्रवान् सतारकः शरत्समयप्रदोषः शरत्कालीनसन्ध्यासमय इव शोभितोऽसि भूषितोऽसि । ईदृशाऽमूल्याऽलङ्करणानामियं परित्यागभूमिः शोचनीयेति भावः। पूर्वार्द्धे कुलभूषणभूषणानीत्यत्र लाटाऽनुप्रासाऽलङ्कारः ।

शब्दार्थयोः पौनरुक्त्यं भेदे तात्पर्यमात्रतः ।

लाटाऽनुप्रास इति दर्पणोक्तलक्षणात् । मुखचन्द्रेत्यत्र रूपकोपमयोः सन्देहसङ्करः । नक्षत्रालङ्करणयोः प्रतीयमानोपमा । शरत्समयप्रदोष इवेत्यत्र पूर्णोपमा । प्रसादगुणः । वैदर्भी रीतिः । वसन्ततिलका वृत्तम् ॥ १६ ॥

**स्वगतमिति** । ( क्रियाविशेषणम् ) सर्वैरश्राव्यं यथा तथा ब्रवीतीत्यर्थः । पूर्वं धृतानि धृतपूर्वाणि पर्वतेश्वरेण धृतपूर्वाणि मलयकेतुतातेन पूर्वं स्वदेहे परिहितानीत्यर्थः। इत्येतद्वचः कथं कुत आह ब्रवीति प्रतीहारीति शेषः । प्रकाशं सुस्पष्टं यथा तथा ब्रवीति । चाणक्यप्रयुक्तेन कौटिल्यप्रेरितेन तेन वणिग्जनेन एतान्यपि अलङ्करणानीति शेषः । अस्मासु विक्रीतानि मूल्यमादाय समर्पितानीत्येवं वृत्तं व्यक्तं सर्वैर्ज्ञातमेवास्तीत्यर्थः ।

**तातेनेति** । तातेन पित्रा धृतपूर्वाणां पूर्वं स्वदेहे धृतानां विशेषतः विशेषरूपेण चन्द्रगुप्तहस्तगतानां मौर्यकरप्राप्तानाम् आभरणविशेषाणां बहुमूल्यकालंकाराणां वणिग्भ्यो व्यापारिभ्यः क्रयात् मूल्यदानात् अधिगमः प्राप्तिः इति न युज्यते इत्यसम्भवः ।

**चन्द्रगुप्तस्येति** । क्रूरेण कठिनहृदयेन कृतघ्नेनेति यावत् । भवता त्वया अ-

राक्षसः—( आत्मगतम् । ) अहो ! सुश्लिष्टोऽयमभूच्छत्रुप्रयोगः । कुतः ?—

लेखोऽयं न ममेति, नोत्तरमिदं, मुद्रा मदीया यतः
सौहार्दं शकटेन खण्डितमिति श्रद्धेयमेतत् कथम् ? ।
मौर्ये भूषणविक्रयं नरपतौ को नाम सम्भावयेत् ?
तस्मात् सम्प्रतिपत्तिरेव हि वरं न ग्राम्यमत्रोत्तरम् ॥ १८ ॥

मलयकेतुः—एतदार्यं पृच्छामि ।

---

धिकं विशेषं लाभं प्राप्तिम् इच्छतोऽभिलष्यतो विक्रेतुर्विनिमयं कर्तुः चन्द्रगुप्तस्य मौर्यस्य एतेषां दृश्यमानानामलङ्काराणामिति शेषः । मूल्यमर्घः वयमेव अहमेवेत्यर्थः । ( अस्मदो द्वयोश्चेत्यनुशासनाद्बहुत्वम् ) कल्पिता निर्णीता इत्यर्थः । मूल्यत्वेन कल्पितानस्मान् दत्वा चन्द्रगुप्तसकाशादिमान्याभरणानि क्रीतानीत्यर्थः ।

परिवृत्तिर्विनिमयः समन्यूनाधिकैर्भवेत् ।
इति दर्पणोक्तलक्षणादत्र परिवृत्तिरलङ्कारः ।
प्रसादगुणः । वैदर्भी रीतिः अनुष्टप् वृत्तम् ॥ १७ ॥

आत्मगतमिति । अव्यक्तं यथा स्यात्तथा ब्रवीतीत्यर्थः । शत्रोः प्रयोगः शत्रुप्रयोगः चाणक्यकूटनीतिविधिः सुश्लिष्टोऽतिदृढोऽभूत् जातः ।

लेखोऽयमिति । अयमेषः कूटप्रयोगाश्रय इत्यर्थः । लेखः पत्रं न मम नैतत्पत्रं मया लिखितम् इतीत्थमिदमुत्तरं न युक्तमिति शेषः । यतो यस्मात् मदीया मामकीना मुद्रा एषेति शेषः ( नामैकदेशग्रहणेन नामग्रहणमिति न्यायात ) शकटेन शकटदासेन सौहार्दं मित्रत्वं खण्डितं भग्नम् इत्येतद्वचः कथं केन प्रकारेण श्रद्धेयं विश्वासयोग्यं लोकैरिति शेषः। नाम सम्भावनायां को जनो मौर्ये चन्द्रगुप्ते नरपतौ राज्ञि भूषणविक्रयम् अङ्करणमूल्यग्रहणं सम्भावयेत् विश्वसेत् न कोऽपीत्यर्थः, तस्मात्कारणात सम्प्रतिपत्तिः अङ्गीकरणमेव वरं श्रेष्ठम् । अत्राऽस्मिन्विषये ग्राम्यमयुक्तमुत्तरमालापो न वरं न श्रेष्ठम् । लेखस्य मन्नामाङ्कितमुद्रया मुद्रितत्वात्तदनभ्युपगमो न युक्तः, शकटदासकर्तृकमित्रत्वभङ्गे न केषामपि विश्वासः, चन्द्रगुप्तकर्तृकमलंकरणविक्रयणे च न केषामपि विश्वासः, अतो लेखस्य स्वीकरणमेव युक्तं प्रतिभातीति सरलार्थः । नायं मे लेख इत्युत्तरस्याऽसम्भवत्वे शकटदासकर्तृकमित्रत्वापरित्यागे चन्द्रगुप्तकर्तृकालंकरणविक्रयणे च मुद्राविश्रम्भनरपतित्वानां हेतुभूतानां

राक्षसः—( सबाष्पम् । ) विधेर्विलसितमिदं, कुतः ?—

भृत्यत्वे परिभावधामनि सति स्नेहात् प्रभूणां सतां,
पुत्रेभ्यः कृतवेदिनां कृतधियां येषामभिन्ना वयम् ।
ते लोकस्य परीक्षकाः, क्षितिभृतः पापेन येन क्षताः
तस्येदं विपुलं विधेर्विलसितं, पुंसां प्रयत्नच्छिदः ॥ २० ॥

मलयकेतुः—( सक्रोधम् । ) कथमद्यापि निह्नुयते, विधेर्विलसितमिदं

---

साम्प्रतम् इदं पत्रालंकरणस्थगिकाद्वयं किं किमर्थं त्वया प्रेषितं कुत आगतं वा तद्ब्रूहीति शेषः ( कस्यायमपराध इत्युपालम्भः ) ।

सबाष्पमिति । अश्रूणि विमुच्य ब्रवीतीत्यर्थः। विधेर्विलसितं विधिविलसितं दैवकृतमेतत् जानीहीति शेषः । तदेव दर्शयति कुत इत्यादिना ।

भृत्यत्व इति । परिभावस्य धाम परिभावधाम तस्मिन् परिभावधामनि तिरस्काराऽऽस्पदे ।

अनादरः परिभवः परीभावस्तिरस्क्रिया ।

इत्यमरः। कोशोक्त्या परीभावशब्दस्यैव तिरस्कारार्थत्वं न परिभावशब्दस्येति नाशङ्क्यम् । ( उपसर्गस्य घञि वैकल्पिकदीर्घविधानात् ) भृत्यत्वे दास्यत्वे सति अस्माकमिति शेषः । कृतं विदन्ति तच्छीलाः कृतवेदिनस्तेषां कृतवेदिनामुपकारज्ञानां कृता परिनिष्ठिता धीर्येषां ते कृतधियस्तेषां कृतधियां परिनिष्ठितबुद्धीनां सतां साधुशीलानां येषां प्रभूणां स्वामिनां नन्दानामित्यर्थः । स्नेहात्प्रेम्णः पुत्रेभ्यः सुतेभ्यः वयं न भिन्ना नान्याः स्मः । लोकस्य परीक्षकाः लोकचरित्रवेदिनस्ते क्षितिभृता राजानः पापेन पापविशिष्टेन ( अर्शाद्यजन्तोऽत्र पापशब्दः ) येन विधिना क्षता विनाशिताः, पुंसां पुरुषाणां प्रयत्नच्छिदः उद्योगनाशिनस्तस्य विधेर्दैवस्य विपुलं महत् इदं दृश्यमानं विलसितं व्यापारः । अभाग्यदोषेण हता नन्दा इवाहमन्यभाग्यदोषेण मृषा दोषी जातोऽस्मीति भावः । वस्तुतो वयंपदवाच्यानां पुत्रभिन्नत्वेऽपि तदभिन्नत्वेनाऽध्यवसायात्पूर्वार्द्धेऽतिशयोक्तिः । विधेर्विलसितमिदमित्यतो न तु चाणक्यस्य न वा ममेत्यन्यस्याऽऽर्थव्यपोहादुत्तरार्द्धे परिसंख्यालङ्कारश्चेत्यनयोः संसृष्टिः । माधुर्यगुणः । पाञ्चाली रीतिः । शार्दूलविक्रीडितं वृत्तम् ॥२०॥

सक्रोधमिति । क्रोधेन सह वर्तमानं सकोपं यथा स्यात्तथा ब्रवीतीत्यर्थः ।

न ममेति ? अनार्य्य !—

कन्यां तीव्रविषप्रयोगविषमां कृत्वा, कृतघ्न ! त्वया
विस्रम्भप्रवणः पुरा मम पिता नीतः कथाशेषताम् ।
सम्प्रत्याहितगौरवेण भवता मन्त्राधिकारे रिपोः
प्रारब्धाः प्रणयाय मांसवदहो ! विक्रेतुमेते वयम् ॥ २१ ॥

राक्षसः—( स्वगतम् । ) अयमपरो गण्डस्योपरि विस्फोटः । (प्रकाशं कर्णौ पिधाय । ) शान्तं पापं, शान्तं पापम् । नाहं विषकन्यामारोपितवानपापोऽहं पर्वतेश्वरे ।

---

कथं कुतोऽपापि सम्प्रत्यपि निह्नूयते गोप्यते, इदं दृश्यमानं विधेर्दैवस्य विलसितं कृत्यं न ममेति । एष दुर्व्यापारो दैवस्य न ममेत्युक्त्वा प्रकटितस्य स्वकृतदुर्व्यापारस्य गोपनमतीवाऽनुचितमिति भावः । राक्षसकृत्यमेव तदित्यभिदर्शयत्यनार्येत्यादिना ।

कन्यामिति । कृतं हन्तीति कृतघ्नस्तत्सम्बुद्धौ रे कृतघ्न अविश्वासिन् ! त्वया भवता विषस्य प्रयोगो विषप्रयोगः तीव्रो विषप्रयोगो यस्यां सा तीव्रविषप्रयोगा सा चासौ विषमा तां तीव्रविषप्रयोगविषमां तीक्ष्णहलाहलप्रयोगघोरां सम्भोगमात्रेण प्राणविनाशिनीमिति यावत् । कन्यां तनयां कृत्वा निर्माय विस्रम्भप्रवणोऽतिविश्वस्तो मम पिता तातः पर्वतेश्वरः पुरा प्राक् कथाशेषतां नीतः क्षयं गमितः । सम्प्रति अधुना रिपोः शत्रोश्चन्द्रगुप्तस्येत्यर्थः । मन्त्राधिकारे सचिवपदे आहितं प्राप्तं गौरवं येन स तथोक्तस्तेनाऽऽहितगौरवेण प्राप्तमहत्त्वेन भवता त्वया प्रणयाय तत्प्रीत्यर्थं ( क्रियार्थोपपदस्य च कर्मणि स्थानिनः इति चतुर्थी ) एते वयं मांसवत् क्रव्यमिव विक्रेतुं प्रारब्धाः प्रक्रान्ताः स्थिरीकृता इति यावत् । अहो आश्चर्यम् । पुरा विषकन्यया परमविश्वासपात्रं तातं विनाश्य साम्प्रतं वयमपि विनाशितुमुरीकृता इत्यर्थः । मांसवदित्यत्र सादृश्यार्थकवच्छब्दसत्त्वाच्छ्रौतीपूर्णोपमालङ्कारः । ओजोगुणः । पाञ्चालीरीतिः । शार्दूलविक्रीडितं वृत्तम् ॥ २१ ॥

अयमिति । गण्डस्य व्रणविशेषस्योपरि अयमेषोऽपरोऽन्यो विस्फोटो व्रणो जात इति शेषः। मर्मस्थानीयव्रणोपरि व्रणान्तरं जातमित्यर्थः। प्रकाशं सुस्पष्टं ब्रवीतीति शेषः । कर्णौ पिधाय श्रोत्रे आच्छाद्य शान्तं पापमिति वीप्सायां द्विरुक्तिः ।

मलयकेतुः—केन तर्हि व्यापादितस्तातः ?

राक्षसः—दैवमत्र प्रष्टव्यम् ।

मलयकेतुः—( सक्रोधम् )। दैवमत्र प्रष्टव्यं, न क्षपणको जीवसिद्धिः ।

राक्षसः--( स्वगतम् । ) कथं जीवसिद्धिरपि चाणक्यप्रणिधिः ! हन्त ! हृदयमपि मे रिपुभिः स्वीकृतम् ।

---

शान्तं पापमनिष्टाख्ये इत्यमरः ।

मम तातविनाशकोऽयमिति न वाच्यमित्यर्थः । अहं विषकन्यां विपरक्षितत्त्वं नारोपितवान् न प्रयुक्तवान् पर्वतेश्वर इति शेषः, अपापोऽहं पर्वतेश्वरे नाहं पर्वतेश्वरे विषकन्याप्रयोगविधानात्मकपापकर्माचरणशीलोऽस्मीति शेषः ।

केन तर्हीति । तर्हि तदा केन क्रूरकर्मकारिणा पुरुषेणेत्यर्थः । तातः पिता व्यापादितो विनाशितः तद्ब्रूहीति शेषः । यदि नास्मत्पितृविनाशकस्त्वं तदा कस्तद्विनाशक इत्यभिधेहीत्यर्थः ।

दैवमत्रेति । अत्राऽस्मिन् तातविनाशविषये दैवं भाग्यं प्रष्टव्यं जिज्ञास्यम् । दैवाधीनं जगत्सर्वमिति शास्त्रोक्त्या दैवस्यैव सर्वेषां शुभाऽशुभफलसम्पादकत्वात्तस्यैव तातविनाशकत्वं जानीहीत्यर्थः । ( कौटिल्याऽभिधानमगृहीत्वाऽदृष्टमिति वदता राक्षसेन परदोषाऽनाविष्करणरूपं मनस्वित्वं सूचितम् ।

सक्रोधमिति । सक्रोधं सरोषं यथा तथा ब्रवीति । अत्रास्मिन् तातविनाशविषये दैवं भाग्यं प्रष्टव्यं जिज्ञास्यं क्षपणको बौद्धसंन्यासिवेषो जीवसिद्धिः तदाख्यः कश्चित्पुरुषो न प्रष्टव्योऽपि तु जीवसिद्धिरेव प्रष्टव्यः इत्यर्थः । यथा येन च विनाशितस्तात इत्याद्यखिलोदन्तं जीवसिद्धिर्विजानातीति भावः ।

तातो विनाशितो येन यथा मे निखिलं महत् ।
वृत्तान्तं च विजानाति जीवसिद्धिर्महामतिः ।

स्वगतमिति । सर्वैरश्राव्यं यथा तथा ब्रवीति । कथं किं जीवसिद्धिरपि मम सुहृदपि चाणक्यप्रणिधिः कौटिल्यगूढचरः । हन्त खेदे, रिपुभिः शत्रुभिर्मे मम हृदयमपि चित्तमपि स्वीकृतं गृहीतम् । क्षपणकवेषो कौटिल्यप्रणिधिर्जीवसिद्धिः सुहृद्भूत्वा निखिलं मामकीनं क्रियमाणं करिष्यमाणं च कृत्यमवगतवानिति महान् खेदस्य विषय इत्यर्थः ।

मलयकेतुः—( सक्रोधम् । ) भासुरक ! आज्ञाप्यतां शिखरसेनः सेनापतिः, ये एतेन राक्षसेन सह सौहार्दमुत्पाद्यास्मच्छरीरद्रोहेण चन्द्रगुप्तमाराधयितुकामाः पञ्च राजानः; तद्यथा, कौलूतः, चित्रवर्म्मा, मलयनरपतिः, सिंहनादः, काश्मीरः, पुष्कराक्षः, सिन्धुराजः, सुषेणः, पारसीकाधिराजो मेघाक्ष इति । तेषु त्रयः प्रथमा मदीयां भूमिं कामयन्ते, ते गभीरश्वभ्रमुपनीय पांशुभिः पूर्य्यन्ताम्, इतरौ तु द्वौ हस्तिबलकामौ हस्तिनैव घात्येतामिति ।

पुरुषः—जं कुमारो आणवेदि । ( १ ) ( इति निष्क्रान्तः ) ।

मलयकेतुः—( सक्रोधम् ) राक्षस ! राक्षस !! नाहं विस्रम्भघाती राक्षसो, मलयकेतुः खल्वहं, तद् गच्छ, समाश्रीयतां सर्वात्मना चन्द्र-

( १ ) यत् कुमार आज्ञापयति ।

आज्ञाप्यतामिति । शिखरसेन एतदाख्यः सेनापतिः सैन्याध्यक्ष आज्ञाप्यतामादिश्यताम् ये चित्रवर्मप्रभृतयः पञ्च राजानो नृपतयः एतेनाऽनेन राक्षसेन सह तदाख्येन मन्त्रिणा सार्द्धं सौहार्दं मित्रत्वमुत्पाद्य सम्पाद्य अस्माकं शरीरमस्मच्छरीरं तस्य द्रोहस्तेन अस्मच्छरीरद्रोहेण मत्कायविनाशेन चन्द्रगुप्तं मौर्यम् आराधयितुं कामो येषां ते आराधयितुकामाः सेवितुमनसः ।

लुम्पेदवश्यमः कृत्ये तुं-काम-मनसोरपि ।

इति तुमुनो मकारलोपः । तेषु पञ्चसु राजसु त्रयः प्रथमाः चित्रवर्म-सिंहनाद-पुष्कराक्षाः मदीयां भूमिं राज्यं कामयन्ते वाञ्छन्ति, ते त्रयः गभीरश्वभ्रं गभीरगर्तम् ।

रन्ध्रं श्वभ्रं वपा सुषिः इत्यमरः ।

उपनीय प्राप्य पांशुभिः रजोभिः पूर्यन्तामाच्छाद्यन्ताम्, इतरावन्यौ द्वौ सुषेण मेघाक्षौ हस्तिबलकामौ गजसैन्याभिलाषुकौ हस्तिनैव गजेनैव घात्येताम् विनाश्येताम् इत्येतद्वृत्तमादिश्यतामित्यनेनान्वयः ।

सक्रोधमिति । सक्रोधं क्रोधेन रोषेण सह वर्तमानं यथा तथा ब्रवीति । राक्षसेति द्विरुक्तिरतिशयक्रोधावेशात्, अहं विस्रम्भघाती विश्वासघातको राक्षसो न

गुप्त इति—

विष्णुगुप्तश्च मौर्य्यश्च सममप्यागतौ त्वया ।
उन्मूलयितुमीशोऽहं त्रिवर्गमिव दुर्नयः ॥ २२ ॥

भागुरायणः—कुमार ! कृतं कालहरणेन, शीघ्रमेव कुसुमपुरोपरोधाय प्रतिष्ठाप्यन्तामस्मद्बलानि,—

गौडीनां लोध्रधूलीपरिमलबहलान् धूम्रयन्तः कपोलान्
क्लिश्नन्तः कृष्णिमानं भ्रमरकुलरुचः कुञ्चितस्यालकस्य ।

मलयकेतुः खल्वहम् अहं मलयकेतुर्नाम तत्तस्मात् गच्छ स्थानान्तरं याहि सर्वात्मना सर्वप्रकारेण चन्द्रगुप्तो मौर्यः समाश्रीयतां संसेव्यताम् ।

विष्णुगुप्तश्चेति । दुर्नयो दुष्टनीतिः असदाचरणमिति यावत् । त्रयाणां वर्ग-स्त्रिवर्गस्तं त्रिवर्गं धर्मार्थकामसमूहं, वा क्षयस्थानवृद्धिसमुदायमिव ।

त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकैः,

इत्यमरः ।

क्षयः स्थानं च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम् ।

इत्यमरः । त्वया समं भवता सार्द्धमागतौ विष्णुगुप्तं कौटिल्यं मौर्यं चन्द्रगुप्तञ्चापि अहमेकाकी उन्मूलयितुं विनाशयितुम् ईशः समर्थः अस्मीति क्रियाशेषः । यथैको दुर्नयस्त्रिवर्गमुन्मूलयितुमीशस्तथैकोऽहं कौटिल्यमौर्यराक्षसत्रयमुन्मूलयितु-मीशोऽस्मीत्यर्थः । त्रिवर्गस्य कौटिल्यादित्रयेण दुर्नयस्य मलयकेतुना चोपमानो-पमेयभावात्साहश्यार्थकेवशब्दस्योन्मूलयोन्मूलकत्वरूपसाधारणधर्मस्य चाभिधाना-च्छ्रौतीपूर्णोपमालङ्कारः । ( दुर्नयदृष्टान्तेन स्वस्मिन् मलयकेतुना दौरात्म्यं सूचि-तम् ) अनुष्टुप् वृत्तम् ॥ २२ ॥

कृतमिति । कालहरणेन समययापनेन कृतमलम् समययापनं व्यर्थमित्यर्थः । कुसुमपुरोपरोधाय कुसुमपुरं रोद्धुमित्यर्थः । अस्मद्बलानि भद्रभटप्रभृतीन्यस्मत्सैन्यानि शीघ्रमेव द्रुतमेव प्रतिष्ठाप्यन्तां प्रेष्यन्ताम् । ( मलयकेतुनिग्रहार्थमेव भागुरायण-प्रयत्न इत्यवधेयम् ) ।

गौडीनामिति । बलानामस्मत्सैन्यानां तुरगाणां खुरपुटास्तुरगखुरपुटाः तुर-गखुरपुटैः क्षोदस्तुरगखुरपुटक्षोदस्तेन लब्ध आत्मलाभो यैस्ते तुरगखुरपुटक्षोदल-

पांशुव्यूहा बलानां तुरगखुरपुटक्षोदलब्धात्मलाभाः
शत्रूणामुत्तमाङ्गे गजमदसलिलच्छिन्नमूलाः पतन्तु ॥ २३ ॥
( इति सपरिजनो निर्गतो मलयकेतुः ) ।

राक्षसः—( सावेगम् । ) हा धिक् कष्टम् !! तेऽपि हतास्तपस्विनश्चित्रवर्मादयः !! तत् कथं सुहृन्नाशाय राक्षसश्चेष्टते, न रिपुविना-

---

लब्धात्मलाभाः अश्वशफाग्रचर्णनप्राप्तजन्मानः ( उत्पत्तयः ) ।

शफं क्लीबे खुरः पुमानित्यमरः ।

पांशुव्यूहाः रजोराशयः गौडीनां गौडदेशवासिस्त्रीणां लोध्रधूलीपरिमलबहुलान् लोध्रपुष्पविशेषपरागामोदव्याप्तान् कपोलान् गण्डप्रदेशान् धूम्रयन्तो मलिनयन्तः भ्रमरकुलरुगिव रुक् यस्य स तथोक्तस्तस्य भ्रमरकुलरुचः मधुपवृन्दकान्तेः कुञ्चितस्य कुटिलस्यालकस्य चूर्णकुन्तलस्य कृष्णिमानं कार्ष्ण्यं क्लिश्नन्तोऽपनयन्तः गजानां मदा गजमदास्त एव सलिलानि तैश्छिन्नं मूलं येषां ते गजमदसलिलच्छिन्नमूलाः करिमदवारिविनाशितप्रघ्नाः ।

मूले ब्रध्नोऽङ्घ्रिनामक इत्यमरः ।

सन्तः शत्रूणां रिपूणामुत्तमाङ्गे शिरसि पतन्तु तिष्ठन्तु ॥

उत्तमाङ्गं शिरः शीर्षं मूर्द्धा ना मस्तकोऽस्त्रियाम् ।

इत्यमरः । कपोलाऽलकयोर्निजगुणत्यागपूर्वकपांशुगुणग्रहणात्तद्गुणालङ्कारः । भ्रमरकुलरुच इत्यत्रेवशब्दाऽभावाल्लुप्तोपमा । गजमदसलिलेत्यत्र रूपकम् । पांशुव्यूहानां कपोलालकरिपूत्तमाङ्गेषु सम्बन्धात्पर्यायालंकारः । रिपुजयाय सैन्यसमारोहवर्णनस्य स्वभावसिद्धत्वात्स्वभावोक्तिश्चेत्येषां साङ्कर्यम् । गौडी रीतिः । ओजोगुणः । स्रग्धरावृत्तम् ॥ २३ ॥

सावेगमिति । आवेगेन सह वर्तमानं सावेगम् सचिन्तं यथा तथा ब्रवीति । हा खेदे कष्टं दुःखं धिक् निन्दनीयमित्यर्थः । तेऽपि तपस्विनस्तपश्चरणशालाः चित्रवर्मादयश्चित्रवर्मप्रभृतयः हता विनाशिताः । तत्तस्मात् राक्षसः सुहृन्नाशाय मित्रविघाताय कथं कुतश्चेष्टते उद्युङ्क्ते न रिपुविनाशाय शत्रूच्छेदाय चेष्टत इति क्रियाशेषः । तत्तस्मात् इदानीं साम्प्रतं मन्दभाग्यो भाग्यहीनः किं करवाणि किं विदधामि ।

शाय ? तत् किमिदानीं करवाणि मन्दभाग्यः !—

किं गच्छामि तपोवनम् ? न तपसा शाम्येत् सवैरं मनः
किं भर्तृननुयामि जीवति रिपौ स्त्रीणामियं योग्यता ।
किंवा खड्गसखः पताम्यरिबले ? नेदं न युक्तं भवेत् ?
चेतश्चन्दनदासमोक्षरभसं रुन्ध्यात् कृतघ्नं न चेत् ॥ २४ ॥

( इति निष्क्रान्ताः सर्व्वे ) ।

इति पञ्चमोऽङ्कः ॥ ५ ॥

किं गच्छामीति । किं तपोवनं गच्छामि तपश्चरणार्थमरण्यं यामि न, तपोवनगमनं न युक्तं यतस्तपसा तपश्चरणेन सवैरं सामर्षं मनश्चित्तं न शाम्येत, रिपौ शत्रौ मौर्ये जीवति विद्यमाने सति किं भर्तॄन् स्वामिनो नन्दान् अनुयामि अनुगच्छामि, इदमप्ययुक्तम् यतः शत्रौ विद्यमाने मरणमियं स्त्रीणां नारीणां योग्यता कर्म । वाऽथवा खड्गसखः असिधारी सन् अरिबले शत्रुसैन्ये किं पतामि, इदं शत्रुसैन्ये पतनं युक्तं समुचितं न भवेत यतः चन्दनदासमोक्षरभसं चन्दनदासपरित्राणव्यग्रं चेतो मनः रुन्ध्यात् मामिति शेषः। रिपुबलपतनाम्मां रोद्धुं प्रवर्तेत इत्यर्थः, न चेत् यदि न रुन्ध्यात् तदा कृतघ्नमकृतज्ञं भवेत् चेत् इति शेषः । तपोवनगमनादिकार्यं परित्यज्य चन्दनदासपरित्राण एव यत्नो विधेयोऽन्यथा मयि कृतघ्नता दोषः स्यादिति भावः । एकस्यैवाऽहमिति कर्तृपदस्य गमनमरणपतनक्रियासु सम्बन्धाद्दीपकालंकारः । तपोवनगमननिषेधे सामर्षमनश्शान्त्यभावस्य भर्तृरनुगमननिषेधे स्त्रीयोग्यतायाः शत्रुसैन्यापतने चेतसश्चन्दनदासमोक्षरभसत्वस्य च हेतूनां वाक्यार्थतयाऽभिधानाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारश्चेत्यनयोः साङ्कर्यम् ॥ वैदर्भी रीतिः । प्रसादगुणः । शार्दूलविक्रीडितं वृत्तम् ॥२४॥

विशाखदत्तरचिते मुद्राराक्षसनाटके ।
व्याख्यया भावबोधिन्या पञ्चमाङ्को विभूषितः ॥

इति मैथिलश्रीकनकलालठक्कुरविरचितायां मुद्राराक्षसभावबोधिनीव्याख्यायां पञ्चमोऽङ्कः ।

# षष्ठोऽङ्कः

( ततः प्रविशत्यलंकृतः सहर्षः सिद्धार्थकः । )

सिद्धार्थकः—जअदि जलदणीलो केसवो केसिघादी
जअदि अ जणदिट्ठीचन्दमा चन्दउत्तो ।
जअदि जअणसज्जं जा अकाऊण सेण्णं,
पडिहदपडिपक्खा अज्जचाणक्कणीदी (१) ॥ १ ॥

---

( १ ) जयति जलदनीलः केशवः केशिघाती
जयति सुजनदृष्टिश्चन्द्रमाश्चन्द्रगुप्तः ।
जयति जयनसज्जं या अकृत्वा च सैन्यम्
प्रतिहतप्रतिपक्षा आर्य्यचाणक्यनीतिः ॥ १ ॥

---

तत इति । ततस्तदनन्तरं मलयकेतुप्रभृतिनिष्क्रमणोत्तरमित्यर्थः । अलंकृतो भूषितः सहर्षः सानन्दः सिद्धार्थकः एतदाख्यः पुरुषः प्रविशति रङ्गशालान्तर्गतो भवति ।

इत्थं मलयकेतुनिग्रहात्मकाऽवान्तरकार्यसम्पादनोत्तरं राक्षससंग्रहणात्मकका- र्यसम्पादनाय मौर्यश्रीस्थैर्यात्मकमहाफलनिष्पादनाय च षष्ठसप्तमांकयोः प्रक्रमः ।

कृतकार्यो मौर्यः परिहितालंकरणसिद्धार्थकाऽनुचरद्वारेष्टदेवराजचाणक्यनीतीनां जयमुद्घोषयति-जयतीति । जलं ददातीति जलदो मेघस्तद्वन्नीलः श्यामः जलद- नीलः मेघश्यामः केशिनं हन्तुं शीलोऽस्येति केशिघाती केशिनामदैत्यविनाशकः केशवो विष्णुः जयति सर्वोत्कर्षेण वर्त्तताम्, जनानां दृष्टिः तस्याश्चन्द्रमाः सकल- पुरुषनेत्राऽऽह्लादजनकश्चन्द्रः चन्द्रगुप्तो मौर्यश्च जयति सर्वोत्कर्षेण वर्त्तताम्, या, जयत्यस्मिन्निति जयनं युद्धादि ( अधिकरणे ल्युट् ) तदर्थं सज्जा वेशो यस्य तत् जयसज्जं सैन्यमकृत्वा सैन्यं विनैवेत्यर्थः। प्रतिहतः परपक्षो यया सा प्रतिहतपरपक्षा सा आर्यचाणक्यनीतिः कौटिल्यनयो जयति सर्वोत्कर्षेण वर्त्तताम् । पद्याद्यचरणेन भगवद्विजयोद्घोषः, द्वितीयेन मौर्यजयोद्घोषः । तृतीयचतुर्थाभ्यां चाणक्यनीतिज- योद्घोषः । आद्यचरणे जलदनील इत्यत्र लुप्तोपमा । द्वितीयचरणे चन्द्रगुप्तसुजन-

ता जाव चिरस्स कालस्स प्पिअवअस्सं सुसिद्धत्थअं पेक्खामि। ( परिक्रम्यावलोक्य च। ) अअं उण प्पिअवअस्सओ सुसिद्धत्थओ इदो ज्जेव आअच्छदी ता जाव उवसप्पामि।

( ततः प्रविशति सुसिद्धार्थकः )।

सुसिद्धार्थकः—

सन्तावेन्ता आवाणेसुं महूसवेसुं रुआवेन्ता।
हिअअच्छिआ अवि विहवा, विरहे मित्ताणं दुम्मणाअन्ते ॥ २ ॥

---

तद्यावच्चिरस्य कालस्य प्रियवयस्यं सुसिद्धार्थकं पश्यामि। अयं पुनः प्रियवयस्यः सुसिद्धार्थक इत एवागच्छति; तद्यावदुपसर्पामि।

---

दृष्ट्याह्लादजनकत्वसाधर्म्येण चन्द्रमस्त्वारोपाद्रूपकम्। उत्तरार्द्धे प्रतिपक्षप्रतिहननात्मककार्यसाधकीभूतसैन्यमन्तरेणैव चाणक्यनीतेरुक्तकार्यसाधनाद्विभावनाऽलङ्कारः। एषामन्योन्यनैरपेक्ष्येण स्थित्या संसृष्टिरलङ्कारः। लक्षणान्येतेषां दर्पणोक्तानि यथा—

लुप्ता सामान्यधर्मादेरेकस्य यदि वा द्वयोः।
त्रयाणां वाऽनुपादाने श्रौत्यार्थी सापि पूर्ववत् ॥
रूपकं रूपितारोपाद्विषये निरपह्नवे।
विभावना विना हेतुं कार्योत्पत्तिर्यदुच्यते।
मिथोऽनपेक्षयैतेषां स्थितिः संसृष्टिरुच्यते ॥

( नीतेर्हेतुमन्तरेव कार्यसाधकत्वात्प्राशस्त्यरूपवस्तु व्यज्यते विभावनाऽलंकारेणेत्यवधेयम् ) पादत्रये जयतिशब्दप्रयोगादनवीकृतत्वं दोषः। मालिनी वृत्तम् ॥ १ ॥

तद्यावदिति। तत्तस्मात् यावद्यत्कालपर्यन्तं चिरस्य कालस्य बहोः कालात्परमित्यर्थः। वयसा तुल्यो वयस्यः प्रियश्चासौ वयस्यः प्रियवयस्यस्तं प्रियवयस्यम् अतिसुखप्रदसुहृदं सुसिद्धार्थकमेतदाख्यं पश्यामि प्रेक्षे। परिक्रम्य कियन्ति पदानि संचर्य अवलोक्य संप्रेक्ष्य च पुनर्ब्रवीतीति शेषः। अयं पुनः प्रियवयस्यः प्रियसुहृत् सुसिद्धार्थकः एतदाख्यः इत एवागच्छति इहैवायाति, तत्तस्मात् उपसर्पामि समीपं गच्छामि अहमिति शेषः।

सन्तापयन्त इति। मित्राणां सुहृदां विरहे वियोगेऽदर्शने इति यावत्। सति विभवा ऐश्वर्याणि हृदयस्थिता अपि अतिसुखप्रदत्वादन्तःकरणवर्तिनोऽपि आपानेषु

सुदञ्च मए जधा मलअकेदुकडआदो प्पिअवअस्सओ सिद्धत्थओ आअदोत्ति। ता जाव णं अण्णेसामि। ( परिक्रम्योपसृत्य च। ) एसो सिद्धत्थओ। (१)

---

(१) सन्तापयन्तः आपानेषु महोत्सवेषु रुजायन्तः।
हृदयस्थिता अपि विभवा विरहे मित्राणां दुर्मनायन्ते॥
अतश्च मया यथा मलयकेतुकटकात् प्रियवयस्यः सिद्धार्थक आगत इति। तद्यावदेनमन्विष्यामि। एष सिद्धार्थकः।

---

पानगोष्ठीषु सन्तापयन्तः तत्र मित्रविरहात्तुल्यभावेन क्लेशमुत्पादयन्तः महोत्सवेषु उत्कृष्टमहेषु।

उद्धर्षो मह उद्धव उत्सव इत्यमरः।

( अदन्तो महशब्दः ) रुजायन्तः पीडयन्तः सन्तो दुर्मनायन्ते विमनसो विदधति मित्रसद्भाव एव सुखजनका विभवा नान्यथेति भावः। एकस्यैव विभवरूपकर्तृकारकस्य सन्तापन-रुजाकरण-दुर्मनःकरणरूपास्वनेकक्रियासु सम्बन्धाद्दीपकालंकारः। विभवानां सन्तापनत्व-रुजाकरणत्व-दुर्मनःकरणत्वेषु हेतुभूतमित्रविरहस्य पदार्थत्वेनोक्त्या पदार्थहेतुककाव्यलिङ्गाऽलंकारश्चेत्यनयोरङ्गाऽङ्गिभावेन सांकर्यम्॥ आर्या छन्दः॥

संदावे तारेसाणं गेहूसवे सुहाअन्ताणं,
हिअअट्ठिदाणं विहवा विरहे मित्ताणं दूणन्दि।
सन्तापे तारेशानां गेहोत्सवे सुखायमानानाम्।
हृदयस्थितानां विभवा विरहे मित्राणां दुन्वन्ति।

इति क्वचित्पाठः। सन्तापे दुःखक्षणे तारेशानां चन्द्रवत् सन्तापहारिणाम्, गेहोत्सवे गृहोत्सवक्षणे सुखायमानानां सुखमनुभवतां हृदयस्थितानां चिन्त्यमानानां मित्राणां सुहृदां विरहे वियोगे विभवा ऐश्वर्याणि दुन्वन्ति क्लेशयन्ति इति तदर्थः। विभवकर्तृकदुःखदाने मित्रविरहस्य हेतुत्वात्पदार्थहेतुकं काव्यलिङ्गमलंकारः॥ २॥

मया श्रुतमाकर्णितञ्च यथा मलयकेतुकटकात् मलयकेतुशिविरात् प्रियवयस्यः प्रियसुहृत् सिद्धार्थक एतदाख्य आगत इह प्राप्त इति श्रुतमित्यन्वयः। तत्तस्मात्

सिद्धार्थकः—( विलोक्य । ) कधं इदो ज्जेव प्पिअवअस्सओ सुसिद्धत्थओ ! ( उपगम्य ) अवि सुहं प्पिअवअस्सस्स ? ( १ )

( उभावन्योन्यमालिङ्गतः । )

सुसिद्धार्थकः—अह वअस्स ! कुदो मे सुहं !! जस्स तुमं चिरआलप्पवासपच्चागदोवि, अआणिअ वुत्तन्तं, अण्णदो गदोसि ? त्ति । ( २ )

सिद्धार्थकः—प्पसीददु प्पिअवअस्सो । अहं क्खु दिट्टमेत्तो ज्जेव्व अज्जचाणक्केण आणत्तो, जधा,—"सिद्धत्थअ, गच्छ, एदं प्पिअं वुत्तन्तं प्पिअदंसणस्स देअस्स चन्दसिरिणो णिवेदेहि" त्ति । तदा तस्स तं

---

( १ ) कथमित एव प्रियवयस्यः सुसिद्धार्थकः ! अपि सुखं प्रियवयस्यस्य ?

( २ ) अह वयस्य ! कुतो मे सुखम् !! यस्य त्वं चिरकालप्रवासप्रत्यागतोऽप्यज्ञापयित्वा वृत्तान्तमन्यतो गतोऽसीति ।

---

यावत् यत्कालपर्यन्तमेनं सिद्धार्थकमन्विष्यामि मृगयिष्यामि । परिक्रम्य कियन्ति पदानि गत्वा उपसृत्य समीपमेत्य ब्रवीतीति शेषः । किन्तदाह-एष इति । एषोऽसौ सिद्धार्थकः एतदाख्यो मम सुहृत् अस्तीति शेषः ।

विलोक्येति । विलोक्य समीक्ष्य सुसिद्धार्थकमिति शेषः । कथं किम् इत एव इहैव प्रियवयस्यः प्रियसुहृत् आगच्छतीति शेषः । उपगम्य समीपमेत्य ब्रवीतीति क्रियाशेषः । प्रियवयस्यस्य स्निग्धमित्रस्य अपि सुखं सुखमस्तीत्यर्थः ।

अहेति । अहेत्यव्ययं खेदार्थकम् , वयस्य सुहृत् मे मम कुतः कस्मात् सुखमानन्दः न मे आनन्दोऽस्तीत्यर्थः । चिरं प्रवासश्चिरप्रवासस्तस्मात्प्रत्यागतश्चिरप्रवासप्रत्यागतः बहुकालं यापयित्वा विदेशात्प्रतिनिवृत्तोऽपि त्वं यस्य मम वृत्तान्तं तत्रत्योदन्तमज्ञापयित्वा अनुक्त्वा अन्यतोऽन्यत्र गतः प्रस्थितोऽसि । मलयकेतुकटके स्वकृतकार्यमनिवेद्यैवान्यत्र गते त्वयि तद्विषयकभावनया कुतो मे सुखप्राप्तिरित्यर्थः ।

प्रसीदत्विति । प्रियवयस्यः स्निग्धमित्रं भवामिति शेषः । प्रसीदतु प्रसन्नो भवतु ममोपरीति शेषः । ( खलुशब्दो निश्चयार्थकः ) आर्यचाणक्येन पूज्यविष्णु

णिवेदिअ, एव्वं अणुभूदपात्थिवप्पसादो, अहं प्पिअवअस्सं प्पेक्खिदुं तुह गेहं चलिदोह्मि । ( १ )

उसिद्धार्थकः—वअस्स ! जदि मए एदं सुणिदव्वं भोदि, ता मंपि सुणावेहि, किं ते प्पिअं प्पिअदंसणस्स चन्दसिरिणो णिवेदिदं त्ति ।(२)

सिद्धार्थकः—प्पिअवअस्स ! तुह वि किं असुणिदव्वं अत्थि ? ता णिसामेहि । अत्थि दाव, अज्जचाणक्कणीदिमोहिदमदिणा मलअके·

( १ ) प्रसीदतु प्रियवयस्यः । अहं खलु दृष्टमात्र एवाय्यचाणक्येनाज्ञप्तो, यथा—सिद्धार्थक ! गच्छ, इमं प्रियं वृत्तान्तं प्रियदर्शनस्य देवस्य चन्द्रश्रियो निवेदयेति । ततस्तस्य तन्निवेद्य, एवमनुभूतपार्थिवप्रसादोऽहं प्रियवयस्यं प्रेक्षितुं तव गेहं चलितोऽस्मि ।

( २ ) वयस्य ! यदि मयेदं श्रोतव्यं भवति, तन्मामपि श्रावय, किं तत् प्रियं प्रियदर्शनस्य चन्द्रश्रियो निवेदितमिति ।

गुप्तेन अहं दृष्टमात्र एव आज्ञप्त आज्ञाम्प्राप्तः। आसमिति शेषः। यथा यत् सिद्धार्थक ! गच्छ इतो याहि इमम् प्रियमानन्दप्रदं वृत्तान्तमुदन्तं प्रियदर्शनं सुखावलोकनं यस्य स तथोक्तस्तस्य प्रियदर्शनस्य सुखावलोकनस्य देवस्य राज्ञः चन्द्र इव श्रीर्यस्य स तथोक्तस्तस्य चन्द्रश्रियः चन्द्रगुप्तस्येत्यर्थः । निवेदय कथय चन्द्रगुप्ताय कथयेत्यर्थः ( अत्र शेषत्वविवक्षया षष्ठी ) इत्याज्ञप्त इत्यन्वयः । ततस्तदुत्तरं तस्य चन्द्रगुप्तस्य तत् प्रियमुदन्तं निवेद्य तस्मै प्रियवृत्तान्तं विज्ञाप्य, एवमित्थम् अनुभूय पार्थिवप्रसादः प्राप्तनृपानुग्रहो दत्तालंकरणाऽलंकृत इत्यर्थः। अहं प्रियवयस्यं परममित्रं त्वामिति शेषः । प्रेक्षितुमवलोकितुं तव भवतो गेहं गृहं चलितोऽस्मि प्रस्थितो भवामि ।

वयस्येति । वयसा तुल्यो वयस्यः ( वयश्शब्दात्तुल्यार्थे यत् ) तत्सम्बुद्धौ हे वयस्य मित्र ! यदि चेत् मयाऽऽत्मना इदमेतन्निवेदितं श्रोतव्यमाकर्णितव्यं भवति तत्तदा मामपि श्रावय तद्वृत्तमिति शेषः, प्रियदर्शनस्य स्निग्धनिरीक्षणस्य चन्द्रश्रियश्चन्द्रगुप्तस्य किं तत् प्रियं निवेदितं । कीदृशमानन्दप्रदं वचनमिति शेषः। निवेदितं कथितमिति ( अत्रापि सम्प्रदानस्य शेषत्वविवक्षणात्षष्ठी ) ।

प्रियवयस्येति । प्रियसुहृत् ! तवाऽपि भवतोऽपि किं किमपि अश्रोत·

दुहदएण णिराकरिअ रक्खसं, हदा चित्तवम्मप्पमुहा प्पहाणा पञ्च पात्थिवा, तदो असमिक्खकारी एसो दुराआरोत्ति कदुअ, उज्झिअ मलअकेदुकडअभूमिं, णिअभूमिकुसलदाए भआवलोलसेण्णतणुकिद-सेसपरिवारेसुं सकं सकं विसअं अभिप्पत्थिदेसु, पत्थिवेसु भद्रभट-पुरुदत्तहिङ्गुरात-बलउत्त-राअसेण भागुराअण-रोहिदक्ख-विजअवम्म-प्पमुहेहिं संजमिदो मलअकेदू। (१)

(१) प्रियवयस्य! तवापि किमश्रातव्यमस्ति? तन्निशामय,–अस्ति तावदार्य्यचाणक्यनीतिमोहितमतिना मलयकेतुहतकेन निराकृत्य राक्षसं, हताश्चित्रवर्मप्रमुखाः प्रधानाः पञ्च पार्थिवाः। ततोऽसमीक्ष्यकारी एष दुराचार इत्युज्झित्वा मलयकेतुकटकभूमिं, निजभूमिकुशलतया भयविलोलसैन्यतनूकृतशेषपरिवारेषु स्वकं स्वकं विषयमभिप्रस्थितेषु पार्थिवेषु, भद्रभट-पुरुषदत्त-हिङ्गुरात-बलगुप्त-राजसेन-भागुरायण-रोहिताक्ष-विजयवर्म्मप्रमुखैः संयमितो मलयकेतुः।

व्यमनाकर्णितव्यमस्ति वर्तते। न किमपि सुहृद्यस्य भवतश्श्रवणाऽनर्हमस्तीत्यर्थः, तत्तस्मात् निशामय शृणु आर्यश्चासौ चाणक्य आर्यचाणक्यस्तस्य नीतिर्नयस्तया मोहिता मतिर्यस्य स आर्यचाणक्यनीतिमोहितमतिस्तेन आर्यचाणक्यनीतिमोहितमतिना पूज्यकौटिल्यनयवशीकृतबुद्धिना मलयकेतुश्चासौ हतको मलयकेतुहतकः (कुत्सितानि कुत्सनैरिति समासः) तेन मलयकेतुहतकेन निन्दितेन मलयकेतुना राक्षसं नन्दसचिवं निराकृत्य निष्कास्य (दूरीकृत्य) प्रधानाः श्रेष्ठाः चित्रवर्मप्रमुखाः चित्रवर्मप्रभृतयः पञ्च राजानो नृपतयो हता विनाशिताः। ततस्तदनन्तरं राक्षसनिष्कासनपूर्वकचित्रवर्मप्रभृतिविनाशोत्तरमित्यर्थः एषोऽसौ मलयकेतुः न सम्यक् विचार्य कर्तुं शीलमस्येत्यसमीक्ष्यकारी अविचारशीलः दुर्दुष्ट आचारो यस्य स दुराचारो दुष्टव्यवहार इति अस्मात्कारणात् निजभूमिकुशलतया स्वाधिकारस्थानरक्षणनिपुणतया मलयकेतुकटकभूमिं मलयकेतुशिविरस्थानं उज्झित्वा परित्यज्य भयविलोलैः सैन्यैः तनूकृताः शेषाः परिवारा येषां ते तथोक्तास्तेषु भयविलोलसैन्यतनूकृतपरिवारेषु साध्वसचपलसेनासमुदायाल्पीकृतावशिष्टानुयायिवर्गेषु राजसु स्वकं स्वकं विषयम् आत्मीयमात्मीयं जनपद

सिद्धार्थकः—वअस्स ! भद्दभटप्पमुहा किल देअस्स चन्दसिरिणो अवरत्ता मलअकेदुं समास्सिदा त्ति लोए मन्तोअदि । ता किं णिमित्तं एदं कुकविणाडअस्स विअ अणं मुहे अणं णिव्वहणेत्ति ? ( १ )

सिद्धार्थकः—वअस्स ! सुणु दाव, देवगदीए विअ असुणिदगदीए णमो अज्जचाणक्कणीदीए । ( २ )

समिद्धार्थकः—वअस्स ! तदो तदो ? ( ३ )

---

( १ ) वयस्य ! भद्रभटप्रमुखाः किल देवस्य चन्द्रश्रियाऽपरक्ता मलयकेतुं समाश्रिता इति लोके मन्त्र्यते । तत् किं निमित्तमेतत्, कुकविनाटकस्येवाऽन्यन्मुखेऽन्यन्निर्वहण इति ?

( २ ) वयस्य ! शृणु तावत्, देवगत्यै इवाश्रुतगत्यै नम आर्यचाणक्यनीत्यै ।

( ३ ) वयस्य ! ततस्ततः ?

---

प्रस्थितेषु गतेषु सत्सु, भद्रभटादिविजयवर्मान्तप्रभृतिभिः सैन्यैः कर्तृभिः, मलयकेतुः पर्वतकपुत्रः संयमितो धृतः ( गृहीतः ) ।

भद्रभटप्रमुखा इति । भद्रभटप्रभृतयो देवस्य राज्ञश्चन्द्रश्रियश्चन्द्रगुप्तस्य ( शेषे षष्ठी ) चन्द्रगुप्ते इत्यर्थः । अपरक्ता विरक्ताः सन्तो मलयकेतुपर्वतकपुत्रं समाश्रिताः संसेविता इति लोके मन्त्र्यते कथ्यते । तत् किं निमित्तमेतत् कुतः कारणादिदं कथ्यत इत्यर्थः । कुकविनाटकस्य कुत्सितकविप्रणीतनाटकस्येव मुखे मुखसन्धौ प्रारम्भे अन्यत् निर्वहणे उपसंहारे अन्यत् नाटके आरम्भोपसंहारयोरक्यस्यैव प्रसिद्धत्वादिह तद्विरुद्धं कुतः ये भद्रभटप्रभृतयश्चन्द्रगुप्तेऽननुरक्ताः सन्तो मलयकेतुमाश्रितास्तैरेव कथं मलयकेतुः संयमित इति प्रश्नाऽभिप्रायः ।

वयस्येति । वयस्य, मित्र ! शृणु तावत् सावधानः सन्नाकर्णय, देवानां गतिर्देवगतिस्तस्यै देवगत्यै इव अमरकृत्यै इव अश्रुता गतिर्यस्याः साऽश्रुतगतिस्तस्यै अश्रुतगत्यै अनाकर्णितकृत्यै आर्यचाणक्यनीत्यै पूज्यकौटिल्यनीत्यै ( कृत्यै ) नमोऽस्त्विति शेषः । ( नमः स्वस्ति स्वाहेति चतुर्थी ) यथाऽश्रुगतिर्देवगतिर्दुरवबोधा तथा चाणक्यनीतिरपि दुरवबोधेत्यर्थः । अश्रुतगत्यै विशेषणमिदमुभयोर्देवगतिचाणक्यनीत्योरिति बोध्यम् । तेनोभयोः साम्यप्रतीतिः ।

सिद्धार्थकः—वअस्स ! तदो प्पहुदि, सारसाहणसमुदएण इदो णि-क्कमिअ, अज्जचाणक्केण पड़िवणं अराअलोअं असेसराअबलं ( १ )

सुसिद्धार्थकः—वअस्स ! कहिं ? ( २ )

सिद्धार्थकः—वअस्स ! जहिं एदे,—( ३ )

अदिसअगुरुएणं दाणदप्पेण दन्ती,
सअलजलदलीलां उव्वहन्तो णदन्ति ।
कसपहरभएणं जादकम्पा तुरन्ता
गहिदजअणसज्जा संपदन्ते तुलंगा (४) ॥ ३ ॥

---

( १ ) वयस्य ! ततः प्रभृति, सारसाधनसमुदयेनेतो निष्क्रम्य, आर्य्य-चाणक्येन प्रतिपन्नमराजलोकमशेषराजबलम् ।

( २ ) वयस्य ! कुत्र ?

( ३ ) वयस्य ! यत्रैते,—

( ४ ) अतिशयगुरुकेण दानदर्पेण दन्तिनः
सजलजलदलीलामुद्वहन्तो नदन्ति ।
कशाप्रहारभयेन जातकम्पास्त्वरयन्तः
गृहीतजयनसज्जाः सम्पद्यन्ते तुरङ्गाः ॥

---

ततः प्रभृतीति । ततः प्रभृति तत्पश्चादित्यर्थः ( मलयकेतुनिग्रहोत्तरम्वाऽर्थः ) आर्यचाणक्येन इतोऽस्मान्नगरान्निष्क्रम्य निर्गत्य सारसाधनसमुदयेन अत्युत्कृष्टरणोपकरणसमूहेन सह अराजलोकं नृपजनरहितम् अशेषराजबलं समस्तनृपसैन्यम् प्रतिपन्नमधिकृतम् ।

कुत्रेति । वयस्य मित्र ! भवता यदुक्तमार्यचाणक्येन समस्तराजसैन्यमधिकृतं स चाधिकारः कुत्र कस्मिन् स्थाने सम्पन्नः इति प्रश्नाशयः ।

अथोत्तरमाह—अतिशयगुरुकेणेति । गुरुरेव गुरुकोऽतिशयश्चासौ गुरुकोऽतिशयगुरुकस्तेनातिशयगुरुकेण अतिप्रभूतेन दानं दर्प इव दानदर्पस्तेन दानदर्पेण मदसलिलाऽभिमानेन सजलश्चासौ जलदः सजलजलदस्तस्य लीला सजलजलदलीला तां सजलजलदलीलां सलिलघनविलासमुद्वहन्तो धारयन्तो दन्तिनो हस्तिनो नदन्ति गर्जन्ति । कशायाः प्रहारः कशाप्रहारस्तस्माद्भयं कशाप्रहारभयं तेन कशा-

सुसिद्धार्थकः—वअस्स ! एदं सव्वं दाव चिट्ठदु, तहा सव्वलोअप्पच्चक्खं उज्झिआहिआरो भविअ, कहं अज्जचाणक्को पुणो वि तं ज्जेव मन्तिपदं आरूढो ? ( १ )

सिद्धार्थकः—वअस्स ! अदिमुद्धो दाणीं सि तुमं, जो अमच्चरक्खस-

( १ ) वयस्य ! एतत् सर्वं तावत् तिष्ठतु । तथा सर्वलोकप्रत्यक्षमुज्झिताधिकारो भूत्वा कथमार्य्यचाणक्यः पुनरपि तदेव मन्त्रिपदमारूढः ?

प्रहारभयेन ताडनोप्रहारजन्यसाध्वसेन जातकम्पाः अत एव त्वरारोहिणस्त्वरावतो विदधतः तुरङ्गा अश्वाः गृहीतो जयनसज्जो युद्धार्थवेशो येषां ते गृहीतजयनसज्जाः युद्धार्थं सज्जिता इत्यर्थः । सन्तः सम्पद्यन्ते सन्नद्धा भवन्ति । वर्षिष्यमाणा मेघा इव हस्तिनो मदजलं वर्षन्ति गर्जन्ति च, ताडन्याघातजन्यसाध्वसेन कम्पमानाः युद्धार्थं सज्जिता अश्वाश्च सन्नद्धा भवन्तीत्यर्थः । यत्र हस्तिनां मदजलवर्षणं गर्जनञ्च, अश्वानाञ्च युद्धार्थतत्परता तत्रार्यचाणक्यस्याधिकारः सम्पन्न इत्युक्ताशयः । पूर्वार्द्धे दानदर्पेणेत्यत्र समासभेदादुपमारूपकयोः सन्देहसंकरः । वस्तुतो दन्तिनां सजलजलदलीलाधारणासम्भवेन तत्सदृशलीलाधारणप्रतीत्या सजलजलदलीलामिव लीलामुद्वहन्त इत्येतद्रूपबिम्बभावबोधनान्निदर्शनाऽलंकारश्चेत्यनयोरङ्गाऽङ्गिभावेन साङ्कर्यम् । उत्तरार्द्धे प्रस्तुततुरङ्गेष्वप्रस्तुततादृशभृत्योद्योगख्यापनव्यवहृत्यारोपणात्समासोक्तिः, त्वरावत्त्वविधाने कशाप्रहारेत्यादेर्हेतोः पदार्थत्वेनोक्त्या पदार्थहेतुककाव्यलिङ्गोज्जीवितेत्यलंकारचतुष्टयसन्निवेशः । मालिनीवृत्तम् ॥ ३ ॥

वयस्येति । वयस्य प्रियबन्धो ! ( तावच्छब्दो वाक्याऽलंकारे ) एतत्सर्वं नीतिनैपुण्यसमस्तनृपसैन्याक्रमणख्यापनं तिष्ठतु तथैवास्ताम् अन्यस्यापि प्रष्टव्यविषयस्य सत्वादत्रैव वाक्यविरामो विरच्यतामित्यर्थः । तथा तादृशरूपेण सर्वलोकप्रत्यक्षं सर्वजनसमक्षम् उज्झितः परित्यक्तोऽधिकारो मन्त्रिपदं येन स उज्झिताधिकारः परित्यक्तसचिवपदो भूत्वा सन् आर्यचाणक्यः पूज्यविष्णुगुप्तः पुनरपि भूयोऽपि तदेव मन्त्रिपदं तदेवाऽमात्यस्थानं कथं किमारूढः प्राप्तः पुरा त्यक्तस्य मन्त्रिपदस्य पुनरङ्गीकारे को हेतुरिति तात्पर्यम् ।

अतिमुग्ध इति । त्वम् इदानीं साम्प्रतम् अतिमुग्धोऽसि अतिशयदुर्बोधोऽसि, यस्त्वमिति शेषः । अमात्यराक्षसेन राक्षसनाम्ना मन्त्रसचिवेन राजनीतिकुश-

सेण अणवगाहिदपुब्वं अज्जचाणक्कबुद्धिं अवगाहिदुं इच्छसि ? (१)

सुसिद्धार्थकः—वअस्स ! अध अमच्चरक्खसो दाणीं कहिं ? ( २ )

सिद्धार्थकः—वअस्स ! सो क्खु तस्सिं प्पलअकोलाहले वड्ढमाणे मलअकेदुकडग्रादो णिक्कमिअ, उन्दुरणामहेएण चरेण अणुसरन्तो इमं ज्जेव कुसुमउरं आगदोत्ति अज्जचाणक्कस्स णिवेदिदं। (३)

---

( १ ) वयस्य ! अतिमुग्ध इदानीमसि त्वं, योऽमात्यराक्षसेनानवगृहीतपूर्वामार्य्यचाणक्यबुद्धिमवगाहितुमिच्छसि ।

( २ ) वयस्य ! अथाऽमात्यराक्षस इदानीं कुत्र ?

( ३ ) वयस्य ! स खलु तस्मिन् प्रलयकोलाहले वर्द्धमाने, मलयकेतुकटकात् निष्क्रम्योन्दुरनामधेयेन चरेणानुस्त्रियमाण इदमेव कुसुमपुरमागत इत्यार्य्यचाणक्यस्य निवेदितम ।

---

लेनेत्यर्थः । अनवगाहितपूर्वां पूर्वमज्ञाताम् आर्यचाणक्यबुद्धिं कौटिल्यमतिम् अवगाहितुं बोद्धुमिच्छसि वाञ्छसि । यत्कौटिल्यचरितमतिबुद्धिमता राक्षसेन नावगतं तद्विज्ञातुमुद्युक्तस्याऽल्पधियो भवतो मूढत्वमेवाऽवगतं भवतीत्यर्थः ।

प्रश्नान्तरमुद्घाटयति—अथेति । अथानन्तरं मलयकेतुना निष्कासनोत्तरमित्यर्थः, अमात्यराक्षसः नन्दसचिवः इदानीं सम्प्रति कुत्र कस्मिन् स्थाने गत इत्यर्थः ।

स खल्विति । खलुशब्दो वाक्यालंकारे निश्चये वा, स राक्षसः तस्मिन् मलयकेतुशिविरे प्रलयशब्दस्य प्रलयकालिककोलाहलसदृश इत्यर्थः । तथा च प्रलये प्रलयकालिककोलाहलसदृशे कोलाहले सैन्यकृते इति शेषः । वर्द्धमाने उपचीयमाने सतीत्यर्थः । ( अथवा प्रलयकोलाहल इव कोलाहलो यस्य स तथोक्तस्तस्मिन् प्रलयकोलाहले प्रलयकालिककोलाहलसदृशकोलाहलविधानशीले जनसमुदाये वर्द्धमाने उपचीयमाने सतीत्यर्थः ) ( प्रथमार्थे कोलाहले प्रलयविशेषणतया प्रलयकोलाहलस्य सर्वविनाशसूचकत्वमिवैतत्सैन्यसमुदायकृतकोलाहलस्य मलयकेतुविनाशसूचकत्वमिति सूचितम् ) मलयकेतुकटकात् मलयकेतुशिविरात् निष्क्रम्य निर्गत्य उन्दुरनामधेयेन उन्दुराख्येन चरेण दूतेन अनुस्त्रियमाणोऽनुगम्यमानः इदमेव कुसुम-

सुसिद्धार्थकः-वअस्स ! तहा णाम अमच्चरक्खसो णन्दरज्जप्पच्चाणअणे किदव्ववसाओ णिक्कमिअ, सम्पदं अकिदत्थो पुणो वि कहं इमं ज्जेव कुसुमउरं आअदो ? ( १ )

सिद्धार्थकः-वअस्स ! तक्केमि, चन्दणदासस्स सिणेहेण त्ति । ( २ )

सुसिद्धार्थकः—वअस्स ! सच्चं चन्दणदासस्स सिणेहेण त्ति ? अध चन्दणदासस्स मोक्खं पेक्खसि ? ( ३ )

( १ ) वयस्य ! तथा नाम अमात्यराक्षसो नन्दराज्यप्रत्यानयने कृतव्यवसायो निष्क्रम्य, साम्प्रतमकृतार्थः पुनरपि कथमिदमेव कुसुमपुरमागतः ?

( २ ) वयस्य ! तर्कयामि, चन्दनदासस्य स्नेहेनेति ।

( ३ ) वयस्य ! सत्यं चन्दनदासस्य स्नेहेनेति ? अथ चन्दनदासस्य मोक्षं प्रेक्षसे ?

---

पुरमागतः प्राप्त, इत्येतद्वृत्तम् आर्यचाणक्यस्य निवेदितम् आर्यचाणक्येन कथितम् ( कर्तरि षष्ठी ) ।

तथेति । अमात्यराक्षसः नन्दसचिवः तथा नाम सर्वजनप्रत्यक्षमित्यर्थः । नन्दराज्यप्रत्यानयने नन्दराष्ट्रपुनर्ग्रहणे कृतव्यवसायो विहितोद्योगः निष्क्रम्य निर्गत्य मलयकेतुशिबिरादिति शेषः । साम्प्रतमिदानीम् अकृतार्थो विफलप्रयासः पुनर्भूयोऽपि कथं किम् इदमेव कुसुमपुरमेतदाख्यनगरमागतः प्राप्तः । नन्दराष्ट्रपुनरुद्धरणाय कृतोद्योगस्याऽमात्यराक्षसस्य मलयकेतुशिबिरान्निष्क्रमणेऽपि प्रतिश्रुतेरसिद्धत्वान्न साम्प्रतं कुसुमपुरागमनं साम्प्रतमिति भावः ।

तर्कयामीति । चन्दनदासस्य कायस्थजातीयस्य महोपकारिणो निजसहृदयस्य स्नेहेन परमाऽनुरागेण कुसुमपुरं पुनरागत इति शेषः । इति तर्कयामि सम्भावयामि अवगच्छामीत्यर्थः । मलयकेतुना विरुद्धस्य राक्षसस्य साम्प्रतमन्यत्र गमने चन्दनदासाऽमुक्तौ कृतघ्नतादोषारयकलोकपरिभवस्य विस्मृतात्मप्रतिष्ठस्याकृतकार्यस्यापि तस्य कुसुमपुरे पुनरागमनमिति भावः ।

सत्यमिति । चन्दनदासस्य निजसहृदयस्य स्नेहेनाऽनुरागेण राक्षसः कुसुमपुरमागत इति सत्यं यथार्थमेव । कथशब्दोऽत्र प्रश्नार्थकः, चन्दनदासस्य राक्षससुहृदो मोक्षं चाणक्यहस्तान्मुक्तिं प्रेक्षसे सम्भावयसि किम् ।

सिद्धार्थकः-वअस्स ! कुदो से अधण्णस्स मोक्खो ? सो क्खु सम्पदं अज्जचाणक्कस्स आणत्तीए दुवेहिं पि अह्मेहिं वज्झट्ठाणं प्पवेसिअ वावादइदव्वो । ( १ )

सुसिद्धार्थकः—( सक्रोधम् ।) वअस्स ! किं अज्ज चाणक्कस्स घादअ-अणो अण्णो णत्थि, जेण अह्मे ईदिसे णिसंसे कम्मे णिजुज्जीअदि ? (२)

सिद्धार्थकः—वअस्स ! को जीवलोए जीविदुकामो अज्जचाणक्कस्स आणत्तिं पडिऊलेदि; ता एहि, चंडालवेसधारिणा भविअ, चन्दणदासं वज्झट्ठाणं णेह्म ( ३ )

( इत्युभौ निष्क्रान्तौ )।

( १ ) वयस्य ! कुतोऽस्याधन्यस्य मोक्षः ? स खलु साम्प्रतमार्य्यचाणक्यस्याऽऽज्ञप्त्या द्वाभ्यामप्यावाभ्यां वध्यस्थानं प्रवेश्य व्यापादयितव्यः ।

( २ ) वयस्य ! किमार्य्यचाणक्यस्य घातकजनोऽन्यो नास्ति, येनावामीदृशे नृशंसे कर्म्मणि नियुज्यावहे ?

( ३ ) वयस्य ! को जीवलोके जीवितुकामः आर्य्यचाणक्यस्याज्ञप्तिं प्रतिकूलयति ? तदेहि, चण्डालवेशधारिणौ भूत्वा, चन्दनदासं वध्यस्थानं नयावः ।

कुत इति । धनं लभते धन्यः ( धनशब्दाल्लाभार्थे यत् ) न धन्योऽधन्यस्तस्याऽधन्यस्य हतभाग्यस्याऽस्य चन्दनदासस्य मोक्षः चाणक्यहस्तान्मुक्तिः कुतः कदापि न सम्भाव्यत इत्यर्थः ( खलुशब्दो वाक्यालङ्कारे ) स चन्दनदासः आर्यचाणक्यस्य पूज्यविष्णुगुप्तस्याऽऽज्ञया निर्देशेन द्वाभ्यामुभाभ्यामप्यावाभ्यां त्वया मया चेत्यर्थः । वध्यस्थानं हिंसाभूमिं प्रवेश्य समानीय व्यापादयितव्यो हन्तव्यः ।

सक्रोधमिति । सरोषं यथा तथा ब्रवीति । वयस्य प्रियसुहृद् ! आर्यचाणक्यस्य पूज्यकौटिल्यस्य किमन्योऽपरः आवाभ्यामतिरिक्तः घातकजनो हिंसको नास्ति न वर्तते येन कारणेन ईदृशे जीवहिंसनात्मके नृशंसे क्रूरे कर्मणि कार्ये आवां नियुज्यावहे नियुक्तौ भवावः । अन्यहिंसकजनासद्भावे सत्येवावयोरीदृशकार्ये नियोजनमुचितं नान्यथेति भावः ।

वयस्येति । वयस्य मित्र ! जीवलोके संसारे जीवितुकामः जीवनाभिलाषी

प्रवेशकः ।

( ततः प्रविशति रज्जुहस्तः पुरुषः )

पुरुषः–छग्गुणसंजोअदिढा उवाअपरिवाडिदपासमुही ।
चाणक्कणीदिरज्जू रिउसंजमणउज्जुआ जअदि ॥ ४ ॥ (१)

---

( १ ) षड्गुणसंयोगदृढा उपायपरिपाटीघटितपाशमुखी ।
चाणक्यनीतिरज्जू रिपुसंयमनऋजुका जयति ॥

---

कः कीदृशो जनः चाणक्यकौटिलयस्य आज्ञप्तिमाज्ञां प्रतिकूलयति अस्वीकरोति, नैतादृशः कोऽपि पुरुषो यः कौटिल्यनिर्देशं न पालयतीत्यर्थः । तत्तस्मादेहि आगच्छ चण्डालवेशधारिणौ भूत्वा चन्दनदासं राक्षसमित्रं वध्यस्थानं प्राणदण्डभूमिं नयावः प्रापयावः । इतीत्थमुक्त्वा निष्क्रान्तौ रङ्गशालातो निर्गतावित्यर्थः ।

तत इति । ततस्तदनन्तरं रङ्गस्थानादुभयोर्निष्क्रमणोत्तरमित्यर्थः । रज्जुर्हस्ते यस्य स रज्जुहस्तः ( व्यधिकरणपदो बहुव्रीहिः ) बन्धनदामकरः पुरुषश्चरः प्रविशति रङ्गस्थानान्तर्गतो भवति ।

सुहृद्रक्षणकामनया कुसुमपुराक्रमिणं राक्षसं वशीकर्तुं कौटिल्यः पुनरुपायान्तरमारचयति—षड्गुणेति । षट् च ते गुणाः षड्गुणाः षड्गुणैः षड्गुणानां वा संयोगो यस्याः सा षड्गुणसंयोगा अत एव दृढा ( सा चासौ दृढेति विग्रहो बोध्यः ) षड्गुणसंयोगदृढा, षड्गुणसंयोगेन दृढेति वा सन्ध्यादिषड्गुणसम्बन्धाऽव्यभिचारिणी।

सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः ।

इत्यमरः । उपायानां परिपाट्युपायपरिपाटी तया घटितं पाशमेव मुखं यस्याः सा उपायपरिपाटीघटितपाशमुखी सामाद्युपायसमुदायोचितपाशरूपानना ।

सामदामदण्डभेदमित्युपायचतुष्टयमि-

त्यमरः । अत एव रिपुसंयमनोद्यता शत्रुबन्धनोद्यमवती चाणक्यनीतिरेव रज्जुः चाणक्यनीतिरज्जुः जयति सर्वोत्कर्षेण वर्तते ( रज्जुपक्षे ) षड्गुणसंयोगदृढा षड्गुणितगुण( रज्जु )संग्रथनदुश्छेद्या उपायपरिपाटीघटितपाशमुखी बहुविधनैपुण्यरचितपाशाग्रभागा रिपुसंयमनोद्यता शत्रुबन्धनानुकूला चाणक्यनीतिरिव रज्जुश्चाणक्यनीतिरज्जुः कौटिल्यनयसदृशबन्धनदाम जयति सर्वोत्कर्षेण वर्तते ।

चाणक्यनीतिरेव रज्जुः चाणक्यनीतिरिव रज्जुरित्युभयविधसमासाद्रूपकोपम-

( परिक्रम्यावलोक्य च ) एसो सो अज्जचाणक्कस्स उन्दुरएण चरेण कधिदो पदेसो, जहिं मए अज्जचाणक्काणत्तीए अमच्चरक्खसो पेक्खिदव्वो। ( विलोक्य ) कहं एसो क्खु अमच्चरक्खसो किदसीसावगुण्ठणो इदो ज्जेव आअच्छदि ! ता जाव इमेहिं जिण्णुज्जाणपादवेहिं अववारिदसरीरो पेक्खामि, कहिं आसणपरिग्गहं करेदि ( इति परिक्रम्य तथा स्थितः ) । (१)

( ततः प्रविशति यथानिर्दिष्टः सशस्त्रो राक्षसः ) ।

( १ ) एष स आर्यचाणक्यस्योन्दुरकेण चरेण कथितः प्रदेशः, यत्र मयाऽऽर्यचाणक्याज्ञप्त्याऽमात्यराक्षसः प्रेक्षितव्यः। कथमेष खल्वमात्यराक्षसः कृतशीर्षावगुण्ठन इत एवागच्छति ! तद्यावदेभिर्जीर्णोद्यानपादपैरवारितशरीरः प्रेक्षे, कुत्रासनपरिग्रहं करोतीति ।

योः मद्गुरः स च विशेषणद्वयस्य श्लिष्टार्थतया श्लेषाऽनुप्राणितः चाणक्यनीतेः रज्जोश्च रिपुसंयमनोद्यमवत्त्वे षड्गुणसंयोगदृढत्वस्योपायपरिपाटीघटितपाशमुखत्वस्य च पदार्थस्य हेतुत्वेन पदार्थहेतुककाव्यलिङ्गसङ्कीर्णश्च । आर्याछन्दः ॥ ४ ॥

एष इति । आर्यचाणक्यस्य पूज्यकौटिल्यस्य उन्दुरकेण तन्नाम्ना चरेण दूतेन कथितोऽभिहितः एष स प्रदेशः प्राणदण्डभूमिः, यत्र प्रदेशे मयाऽऽत्मना आर्यचाणक्याज्ञया कौटिल्यादेशेन अमात्यराक्षसः प्रेक्षितव्योऽवलोकितव्यो भविष्यतीति शेषः । विलोक्य समीक्ष्य कृतं शीर्षस्यावगुण्ठनं येन स कृतशीर्षावगुण्ठनः कृतमस्तकावरणः वस्त्रावृतशिरा इत्यर्थः । कथं किम् इत एवागच्छति इहैवायाति, तत्तस्मात् यावत् यत्कालपर्यन्तम् एभिः जीर्णाश्चोद्यानपादपा जीर्णोद्यानपादपास्तैः जीर्णोद्यानपादपैः पुरातनोपवनवृक्षैः अपवारितं शरीरं यस्य सोऽपवारितशरीरः तिरोहितकायः सन् अहमिति शेषः । प्रेक्षे पश्यामि कुत्र कस्मिन् स्थाने आसनपरिग्रहं करोति उपविशतीत्यर्थः ।

तत इति । ततः पुरुषेण राक्षसप्रवेशज्ञापनोत्तरम् निर्दिष्टमनतिक्रम्य यथानिर्दिष्टं तदस्यास्तीति यथानिर्दिष्टः (अर्शआद्यजन्तः) वस्त्रेणावृतशिरा इत्यर्थः । शस्त्रेणाऽऽयुधेन सह वर्तमानः सशस्त्रः सायुधो राक्षसो नन्दसचिवः प्रविशति रङ्गशालान्तरागच्छति ।

राक्षसः--( सबाष्पम् ) कष्टं भो कष्टम् !—

उत्सन्नाश्रयकातरेव कुलटा गोत्रान्तरं श्रीर्गता,
तामेवानुगता गतानुगतिकास्त्यक्तानुरागाः प्रजाः ।
आप्तैरप्यनवाप्तपौरुषफलैः कार्य्यस्य धूरुज्झिता,
किं कुर्वन्त्वथवोत्तमाङ्गरहितैर्नागैरिव स्थीयते ॥ ५ ॥

उत्सन्नाश्रयेति । उत्सन्ना विनष्ट आश्रयोऽवलम्बनं यस्याः सोत्सन्नाश्रया सा चासौ कातरा उत्सन्नाश्रयकातरा विनष्टावलम्बनव्याकुला श्रीः राजलक्ष्मीः कुलटा पुंश्चलीव ।

पुंश्चली धर्षिणी बन्धक्यसती कुलटेत्वरी ।

इत्यमरः । अन्यत् गोत्रं गोत्रान्तरम् अन्यत्कुलं गता समाश्रिता ( चन्द्रगुप्तस्याऽसवर्णोत्पन्नत्वेन नन्दात्मजत्वेऽपि गोत्रान्तरत्वमवधेयम् ) ।

सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः ।

इति स्मृत्या ( असवर्णोत्पन्नस्यात्मजाऽप्रतिनिधित्वप्रतिपादनात् ) त्यक्तोऽनुरागो याभिस्तास्त्यक्ताऽनुरागाः परिहृतस्वामिस्नेहाः गतानामनुगतिर्यासां ता गतानुगतिकाः पूर्वप्रस्थितानुसरणशीलाः प्रजाः प्रकृतयः तामेव गोत्रान्तराश्रितां श्रियमेवाऽनुगता अनुसृता । अनवाप्तं पौरुषफलं यैस्ते तथोक्तास्तैरनवाप्तपौरुषफलैः अप्राप्तपुरुषफलैः आप्तैः विश्वस्तैरपि जनैरिति शेषः । कार्यस्याऽभीप्सितकृत्यस्य धूर्भारः ।

धूः स्त्री स्याद्भारचिन्तयोः

इत्यमरः । उज्झिता त्यक्ता अथवा ते आप्ता किं कुर्वन्तु यतः उत्तमाङ्गरहितैः शीर्षविरहितैः नागैः हस्तिभिर्वाऽहिभिरिव स्थीयते वर्त्यते तत्तुल्यशक्तिशालिभिराप्तैरिति शेषः । आश्रयैकपुरुषविनाशोत्तरमन्यपुरुषमाश्रयन्ती पुंश्चलीव राजलक्ष्मीर्नन्दविनाशोत्तरमन्यमौर्यपुरुषमाश्रितवती, पूर्वप्रस्थितानुसरणशीलाः प्रजाश्च नन्दानुरागं परिहृत्य मौर्यानुरागं विदधुः आप्ताश्चास्मादृशाः प्रयत्नफलमनवाप्य कार्यसाधकसहायमुत्साहं परिजहुः, अथवा न किमपि कर्तुं शक्नुवन्तीत्यर्थः ।

---

( ५ ) स्वाम्याश्रयाभावात्स्त्रियः पुंश्चलीत्वप्राप्तिरिव श्रियोऽपि रक्षकनृपाश्रयाभावान्नृपान्तराश्रयप्राप्त्या प्रजानां प्रबलं विद्यमाननृपानुरागितया स्वस्य च नृपावलम्बाप्तत्वादुत्तमाङ्गहीननागसादृश्याद्राक्षसस्यानुशोचनं युक्तमेवेति भावः ।

अपि च,—

पतिं त्यक्त्वा देवं भुवनपतिमुच्चैरभिजनं
गता छिद्रेण श्रीर्वृषलमविनीतेव वृषली ।
स्थिरीभूता चास्मिन् किमिह करवाम स्थिरमपि,
प्रयत्नं नो येषां विफलयति दैवं द्विषदिव ॥ ६ ॥

यथोत्कृष्टशक्तिमन्तोऽपि हस्तिनोऽहिनो वा शक्त्याश्रयोत्तमाङ्गवैकल्यादुपेक्ष्यन्ते तथोत्कृष्टशक्तिमन्तोऽप्यात्ता नायकवैकल्यादुपेक्षिता न किमपि कार्यं साधयितुं शक्नुवन्तीति भावः । प्रथमपादे कूटेवेत्यत्र पूर्णोपमालङ्कारः । द्वितीयतृतीयपादस्थयोस्त्यागक्रिययोर्गतानुगतिकत्वावाप्तयोरफलत्वयोर्हेतुत्वात्काव्यलिङ्गम् चतुर्थे उत्तमाङ्गनागपदयोः श्लिष्टत्वेन श्लेषानुप्राणिता नागैरिवेत्यत्रोपमा, एषामेकत्र सत्वात्संसृष्टिः । गौडी रीतिः । प्रसादो गुणः ; शार्दूलविक्रीडितं वृत्तम् ॥ ५ ॥

पतिमिति । श्रीः राजलक्ष्मीः अविनीता दुश्चरिता वृषली शूद्रीव उच्चैरुन्नतोऽभिजनो वंशो यस्य स उच्चैरभिजनस्तमुच्चैरभिजनम् उन्नतवंशं ( अभिजायतेऽस्मिन्निति विग्रहे समर्थं कः ) ।

अन्ववायोऽन्वयो वंशः गोत्रश्चाभिजनः कुलम् ।

इत्यमरः । भुवनस्य पतिर्भुवनपतिस्तं भुवनपतिं क्षितीशं देवं नन्दं पतिं स्वामिनं त्यक्त्वा परित्यज्य छिद्रेण छलेन वृषलं चन्द्रगुप्तं गता समाश्रिता । न केवलं तमाश्रितापि तु चपला सती अस्मिन् मौर्ये स्थिरीभूता इहास्मिन् विषये किं करवाम विदधाम वयमिति शेषः, येषां नोऽस्माकं स्थिरमपि दृढमपि प्रयत्नमुद्योगं दैवं भाग्यं द्विषदिव द्वेषं कुर्वदिव विफलयति विनाशयति । यथाऽविनीता वृषली पूर्वपतिमुन्नतवंशोद्भूतं परित्यज्य व्याजेन पुरुषान्तरमकुलीनमङ्गीकरोति तथा श्रीर्नन्दनृपतिमुच्चकुलोद्भूतं पूर्वपतिमपहाय पुरुषान्तरमकुलीनं मौर्यपतिमाश्रितवती तत्र स्थैर्यञ्चाङ्गीकृतवती नात्रविषये किमपि कर्तुं शक्यतेऽस्माभिः, यतो भाग्यं शत्रुवदस्माकमुद्योगं व्यर्थयतीत्यर्थः । श्रियो नन्दपरित्यागे मौर्याश्रयणे तत्र स्थैर्ये चाऽस्मत्प्रयासवैफल्ये च भाग्यमेव हेतुर्न चाणक्य इति भावः । एकस्या एव श्रियः कर्त्र्यास्त्यागाश्रयणस्थिरीभवनरूपास्वनेकक्रियासु सम्बन्धाद्दीपकम् । अविनीतेवेत्यत्रैवशब्दसत्त्वादुपमा, श्रियश्चाञ्चल्यात्स्थैर्यासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः, श्रियः पूर्वपतित्यागादिष्वविनीतत्वस्य हेतुत्वात्काव्यलिङ्गञ्चेत्य

मया हि,--

देवे गते दिवमतद्विधमृत्युयोग्ये,
शैलेश्वरं तमधिकृत्य कृतः प्रयत्नः ।
तस्मिन् हते तनयमस्य, तथाप्यसिद्धि-
र्दैवं हि नन्दकुलशत्रुरसौ न विप्रः ॥ ७ ॥

अहो ! विवेकशून्यता म्लेच्छस्य मलयकेतोः कुतः ?-
यो नष्टानपि जीवनाशमधुना शुश्रूषते स्वामिन-
स्तेषां वैरिभिरक्षतः कथमसौ सन्धास्यते राक्षसः ? ।

---

लङ्कारचतुष्टयस्यैकाश्रयानुप्रवेशसङ्करः । द्विषदिवेत्यत्र चोपमा । वैदर्भीरीतिः । प्रसादो गुणः । शिखरिणी वृत्तम् ॥ ६ ॥

देवे गत इति । न तद्विधमृत्युयोग्योऽतद्विधमृत्युयोग्यस्तस्मिन्नतद्विधमृत्यु-योग्ये अनार्यकौटिल्यकृतप्राणहरणानर्हे देवे राज्ञि नन्दे दिवं स्वर्गं गते प्राप्ते सति मया तं प्रसिद्धं शैलेश्वरं पर्वतेश्वरं नृपम् अधिकृत्य आश्रित्य प्रयत्नः शत्रुपराभवो-द्योगः कृतो विहितः । तस्मिन् शैलेश्वरे हते विषकन्याद्वारा कौटिल्येन घातिते सति अस्य शैलेश्वरस्य तनयं पुत्रं मलयकेतुमाश्रित्य प्रयत्नः कृत इति शेषः । तथापि बहुधा प्रयासे कृतेऽपीत्यर्थः । असिद्धिः शत्रुपराभवात्मककार्यनिष्पत्तिः जातेति शेषः, अतोऽस्मात् दैवं हि भाग्यमेव नन्दकुलशत्रुः नन्दवंशविद्वेषी असावेष विप्रो ब्राह्मणः कौटिल्यो न, नन्दकुलविद्वेषीति शेषः । नन्दकुलविनाशे भाग्यस्यैव प्राबल्यं न कौटिल्यस्येत्यर्थः । ( राक्षसकर्तृकविप्रोक्तिरनादरसूचिका ) अत्र पद्ये व-क्ष्यमाणालङ्कारत्रयसंसृष्टिः, तथा हि तुर्यपादस्य पादत्रये हेतुत्वात्काव्यलिङ्गम् । दैवमेव नन्दकुलशत्रुरित्यप्रश्नपूर्वककथितवस्तुनोऽन्यस्य कौटिल्यस्य व्यवच्छेदात्परि-संख्या । कौटिल्यस्य नन्दकुलशत्रुत्वयोगेऽप्ययोगोक्त्यातिशयोक्तिः । वैदर्भी रीतिः । प्रसादगुणः । वसन्ततिलकं वृत्तम् ॥ ७ ॥

विवेकशून्यतेति । म्लेच्छस्य म्लेच्छजातीयस्य म्लेच्छकर्मणो वा मलयकेतो-रित्यर्थः । विवेकेन शून्यो विवेकशून्यस्तस्य भावो विवेकशून्यता सदसद्विचारहीनता अहो आश्चर्यम् । किं सत् किमसदित्युचितविचारो मलयकेतोर्नास्तीत्यर्थः । तदेव दर्शयति कुत इति ।

यो नष्टानिति । यो राक्षसः जीवनाशं समूलं नष्टान् नृपानपि स्वामिनो

इत्थं वस्तुविवेकमूढमतिना म्लेच्छेन नालोचितं,
दैवेनोपहतस्य बुद्धिरथवा पूर्वं विपर्य्यस्यति ॥ ८ ॥

तदिदानीमपि तावदरातिहस्तगतो विनश्येद्राक्षसो न तु चन्द्रगुप्तेन सह सन्धिं कुर्य्यादिति; अथवा मम काममसत्यसन्ध इति, वरमयशः। न पुनः शत्रुवञ्चनपरिभूतिः। (समन्तादवलोक्य सास्रम्) एतास्ता देवस्य पादक्रमणपरिचयपवित्रीकृतरथ्याः कुसुमपुरोपकण्ठभूमयः।

---

नन्दान् न शुश्रूषते सेवते, अथवा यो राक्षसो नष्टान् मृतानपि स्वामिनो नन्दान् जीवनाशं प्राणपर्यन्तं न शुश्रूषते, असावेव राक्षसो नन्दसचिवः तेषां स्वामिनां नन्दानां वैरिभिः शत्रुभिर्मौर्यादिभिः सह कथं सन्धास्यते सन्धिं करिष्यति न कथमपीत्यर्थः। इत्थमेतत् वस्तुनो यथार्थविषयस्य विवेके विचारे मूढाऽल्पा (असमीचीना) मतिर्यस्य स तथोक्तस्तेन वस्तुविवेकमूढमतिना सदसद्विचारशून्यबुद्धिना म्लेच्छेन म्लेच्छजातीयेन मलयकेतुना नालोचितं न विचारितम्, अथवा दैवेन भाग्येनोपहतस्य पराभूतस्य अदृष्टहीनस्येत्यर्थः। जनस्येति शेषः। बुद्धिर्मतिः विपर्यस्यति विपरीता भवति। विपत्प्राप्तौ सर्वेषामविवेकशालिनी बुद्धिर्भवतीति भावः। अत्र तुरीयपादप्रतिपाद्यसामान्यार्थेन नेत्थमालोचितं म्लेच्छेनेति विशेषार्थस्य समर्थनादर्थान्तरन्यासोऽलङ्कारः। प्रसादो गुणः। वैदर्भी रीतिः। शार्दूलविक्रीडितं वृत्तम् ॥८॥

तदिदानीमिति। तत्तस्मात् इदानीं साम्प्रतं (तावच्छब्दो वाक्यालङ्कारे) अरातीनां हस्तोऽरातिहस्तस्तमरातिहस्तं गतोऽरातिहस्तगतः शत्रुकरप्राप्तो राक्षसः विनश्येत् म्रियेत तु किन्तु चन्द्रगुप्तेन सह मौर्येण सार्द्धं सन्धिं स्नेहं (सम्मेलनं) न कुर्यात् न विदध्यात्, अथवा किम्वा असत्या सन्धा यस्य सोऽसत्यसन्धः असत्यप्रतिज्ञः अपूर्णप्रतिश्रुतिरिति यावत्। अयमिति शेषः। इतीत्येवंरूपमयशोऽकीर्त्तिः मम कामं यथेच्छं वरं प्रियम् पुनर्भूयः शत्रुवञ्चनपराभूतिः रिपुप्रतारणतिरस्कारो न वरमिति शेषः। समन्तात्सर्वतोऽवलोक्य सास्रम् नेत्रजलसहितं यथा तथा ब्रवीति एतास्ताः पूर्वकालावलोकिताः देवस्य स्वामिनो नन्दस्येत्यर्थः। पादक्रमणपरिचयपवित्रीकृतरथ्याः चरणसञ्चाराभ्यासपूतप्रतोलयः, (तथा:) कुसुमपुरोपकण्ठभूमयः कुसुमपुरसमीपप्रदेशाः दृश्यन्ते मयेति शेषः।

इह हि,—

शार्ङ्गज्याकृष्टिमुक्तप्रशिथिलकविकाप्रग्रहेणात्र देशे,
देवेनाकारि चित्रं प्रजविततुरगं बाणमोक्षश्चलेषु ।
अस्यामुद्यानराजौ स्थितमिह कथितं राजभिस्तैर्विनेत्थं,
सम्प्रत्यालोकयमानाः कुसुमपुरभुवो भूयसा दुःखयन्ति ॥९॥

तत् क्व खलु गच्छामि मन्दभाग्यः ? ( विलोक्य । ) भवतु दृष्टमे-

---

शार्ङ्गज्येति । अत्र देशेऽस्मिन्भूभागे शार्ङ्गस्य ज्या शार्ङ्गज्या तस्या आकृष्टिः तया मुक्तोऽत एव प्रशिथिलः कविकाप्रग्रहो येन स तथोक्तस्तेन शार्ङ्गज्याकृष्टिमुक्तप्रशिथिलकविकाप्रहणधनुर्मौर्व्याकर्षणत्यक्तादृढवल्गाग्रहणेन देवेन नन्देन चलेषु अस्थिरेषु लक्ष्येषु शरव्येषु प्रजविततुरगो यत्र तत्प्रजविततुरगं वेगवदश्वम् अत एव चित्रं यथा तथा बाणमोक्षः शरत्यागोऽकारि कृतः । अस्याममुष्यामुद्यानराजौ उपवनपंक्तौ तैः राजभिर्नृपैः सह नन्देन स्थितम् इह तैः राजभिः कथितमालपितम् सम्प्रति इदानीं तैः राजभिर्विना इत्थमेवमवलोक्यमानाः संदृश्यमानाः कुसुमपुरभुवः कुसुमपुरभूमयः भूयसा आधिक्येन दुःखयन्ति क्लेशयन्ति । यत्र प्रदेशे मृगयाचिकीर्षुर्नन्दो लक्ष्येषु शरान्विचिक्षेप । यत्र च प्रदेशे भागधेयं प्रदातुमागतैर्नृपैः सहोपविष्टवान् आलपितवांश्च तस्य प्रदेशस्य सम्प्रत्येकाकिनाऽवलोकनात्क्लेशाधिक्यमुपजायत इत्यर्थः । अत्र सूक्ष्मवस्तुस्वभावस्य यथावद्वर्णनात् स्वभावोक्तिरलङ्कारः । एकस्यैव नन्दरूपकर्तृकारकस्य करणोपवेशनकथनक्रियासु सम्बन्धाद्दीपकालङ्कारः । नन्दं विना कुसुमपुरभूप्रदेशानामशोभनत्वाद्विनोक्तिरलङ्कारश्चेत्येषां संसृष्टिः ।

तेषां लक्षणान्यलङ्कारसर्वस्वोक्तानि यथा—

सूक्ष्मवस्तुस्वभावयथावद्वर्णनं स्वभावोक्तिः ।

प्रस्तुताप्रस्तुतानां तु दीपकम् ।

अलङ्कारसर्वस्वनाम्नि ग्रन्थे दीपकालङ्कारलक्षणमिदमेवास्ति तस्याऽत्रासंघटनं नाशङ्कनीयं तत्रैव तत्रेदस्याप्युक्तत्वात् ।

विना कश्चिदन्यस्य सदसत्त्वाभावो विनोक्तिः ।

सदसत्त्वाभाव इत्यस्य शोभनत्वाऽभावोऽशोभनत्वाऽभावश्चेत्यर्थः । गौडी रीतिः । ओजो गुणः । वृत्तञ्चात्र स्रग्धरा नाम ॥ ९ ॥

तदिति । तत्तस्मात् मन्दभाग्योऽदृष्टहीनः अहमिति शेषः । क्व खलु गच्छामि

तज्जीर्णोद्यानम्, अत्र प्रविश्य कुतश्चिच्चन्दनदासस्य वृत्तान्तमुपलप्स्ये। ( परिक्रम्य स्वगतम्। ) अहो !! अलक्षितोपनिपाताः पुरुषाणां समविषमदशाविभागपरिणतयो भवन्ति। कुतः ?—

पौरैरङ्गुलिभिर्नवेन्दुवदहं निर्दिश्यमानः, शनैः,
यो राजेव पुरा पुरान्निरगमं राज्ञां सहस्रैर्वृतः।
भूयः सम्प्रति सोऽहमेव नगरे तत्रैव वन्ध्यश्रमो,
जीर्णोद्यानकमेष तस्कर इव त्रासाद् विशामि द्रुतम् ॥१०॥

---

कुत्र स्थाने यामि, विलोक्य निरीक्ष्य भवतु अस्तु एतत इदं जीर्णोद्यान दृष्टमवलोकितम् अत्रास्मिन् जीर्णोद्याने प्रविश्यान्तरेत्य कुतश्चित् कस्मादपि स्थानात् जनाद्वा चन्दनदासस्य विप्रसुहृदो वृत्तान्तमुदन्तमुपलप्स्ये ज्ञास्यामि। परिक्रम्य सञ्चर्य स्वगतं सर्वैरश्राव्यं यथा तथा ब्रवीतीत्यर्थः। किन्तदाह। अलक्षितेति। पुरुषाणां लोकानां समाश्च विषमाश्चेति इतरेतरद्वन्द्वः। समविषमास्ताश्च ता दशाः समविषमदशास्तासां विभागाः समविषमदशाविभागास्तेषां परिणतयः समविषमदशाविभागपरिणतयः तुल्यातुल्यावस्थापार्थक्यपरिणामाः अलक्षित उपनिपाता यासां ता अलक्षितोपनिपाताः अतर्कितागमाः भवन्ति जायन्ते। कदा कीदृश्यो भवन्ति पुरुषाऽवस्था इति न केऽपि जानन्तीत्यर्थः। तदेव दर्शयति कुत इति।

पौरैरिति। योऽहं पौरैः पुरवासिभिः अङ्गुलिभिः करशाखासंकेतेनेत्यर्थः। शनैर्मन्दं यथा तथा नवेन्दुना तुल्यं नवेन्दुवत् नवोदितचन्द्र इव निर्दिश्यमानः प्रदर्श्यमानः राजा इव नृपतिरिव राज्ञां सहस्रैर्नृपसमूहैर्वृतः परिवेष्टितः सन् पुरा पूर्वं नन्दजीवनकाले इत्यर्थः। पुरात् कुसुमपुरनगरात् निरगमम् निर्गतवान्। स एषोऽहं सम्प्रति इदानीं वन्ध्यो विफलः श्रमः प्रयासो यस्य स वन्ध्यश्रमो विफलनन्दोद्धरणप्रयासः सन् भूयः पुनः तत्रैव नगरे कुसुमपुरे तस्कर इव दस्युरिव।

चौरैकागारिकस्तेन दस्युतस्करमोषकाः।

इत्यमरः। ( तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्चेति निपातनात् तस्करपदसिद्धिः ) त्रासाद्भयात् जीर्णोद्यानकं पुरातनाल्पोपवनं द्रुतं शीघ्रं विशामि प्रविशामि तदन्तर्गतो भवामीत्यर्थः। यस्य मे पुरा नृपस्येव सत्कारस्तस्य मे साम्प्रतं दस्योरिवोपवनप्रवेश इत्यहो मेऽदृष्टपरिवृत्तिरिति भावः। नवेन्दुवदित्यत्र सादृश्या-(तुल्या)र्थकवच्छब्दस्य राजेवेत्यत्र सादृश्यार्थकेवशब्दस्य तस्कर इवेत्यत्र च साद-

अथवा, येषां प्रसादादिदमासीत् ते एव न सन्ति। (नाट्येन प्रविश्य विलोक्य च।) अहो! जीर्णोद्यानस्य नाभिरमणीयता। अत्र हि,—

विपर्यस्तं सौधं कुलमिव महारम्भरचनं,
सरः शुष्कं साधोर्हृदयमिव नाशेन सुहृदः।
फलैर्हीना वृक्षा विगुणविधियोगादिव नयाः,
तृणैश्छन्ना भूमिर्मतिरिव कुनीत्या ह्यविदुषः॥ ११॥

---

इवार्थकेवशब्दस्य सत्त्वादुपमात्रयम्। एकस्मिन्नाधारे राक्षसात्मके क्रमेण समविषमदशात्मकाधेयद्वयवर्तनाद्द्वितीयः पर्यायालङ्कारभेदः। तदुक्तमलङ्कारसर्वस्वे—

एकस्मिन्नाधारेऽनेकमाधेयं यत्स द्वितीयः पर्याय इति।

शार्दूलविक्रीडितं वृत्तम्॥ १०॥

**अथवेति**। अथवा किम्वा येषां नन्दानां प्रसादादनुग्रहात् इदमनुभूयमानं सुखमित्यर्थः। आसीत् अभूत् ते एव नन्दा इत्यर्थः। न सन्ति न विद्यन्ते। नाट्येन नटव्यापारेण प्रविश्यान्तरेत्य विलोक्य निरीक्ष्य च, ब्रवीतीति क्रियाशेषः। अहो आश्चर्यम् जीर्णोद्यानस्य पुरातनोपवनस्य नाऽभिरमणीयता अचारुत्वम् अमनोज्ञत्वमिति यावत्।

**विपर्यस्तमिति**। महांश्चासावारम्भो महारम्भस्तेन रचना यस्य तन्महारम्भरचनं यद्वा, महानारम्भो यस्याः सा महारम्भा महारम्भा रचना यस्य तन्महारम्भरचनं प्रचुरोद्योगरचितं सौधं हर्म्यं कुलमिव वंश इव विपर्यस्तं नष्टं, सरो जलाशयः, सुहृदो मित्रस्य विनाशेन वियोगेन साधोर्महात्मनो हृदयं चित्तमिव शुष्कं नीरसं जातम् ('शुषः कः' इति निष्ठातस्य के रूपम्)। वृक्षास्तरवः विगुणश्चासौ विधिर्विगुणविधिस्तस्य योगस्तस्मात विगुणविधियोगात् प्रतिकूलदैववशात् नया नीतय इव फलैः शस्यैर्लाभैश्च हीना असम्बद्धाः भूमिः कुसुमपुरभूप्रदेशः अविदुषोऽज्ञस्य मतिर्बुद्धिः कुनीत्या दुर्नयेनेव तृणैः शष्पैः छन्ना आवृता दृश्यते इति शेषः। भागुरायणप्रभृत्यसदुपदेशद्वाराऽनीतिविन्मलयकेतुबुद्धेरविवेकितालाभ इति भावः। पुरातनोपवनप्रशंसाद्वारा सौधकुलादीनामुपमया नन्दवंशक्षयः, तेन निजचित्तदैन्यं मलयकेतुसम्पर्कादात्मनीत्यसाफल्यम्, भागुरायणासन्नीतेर्मलयकेतुमतिमोहकतेति च ध्वनिः। अत्र श्रौतीपूर्णोपमाचतुष्टयम्। मालोपमा वा। वैदर्भी रीतिः। प्रसादगुणः।

अपि च अत्र,—

क्षताङ्गानां तीक्ष्णैः परशुभिरुदग्रैः क्षितिरुहां,
रुजा कूजन्तीनामविरतकपोतोपरुदितैः ।
स्वनिर्मोकच्छेदैः परिचितपरिक्लेशकृपया,
श्वसन्तः शाखानां व्रणमिव निबध्नन्ति फणिनः ॥ १२ ॥

---

शिखरिणी वृत्तम् ॥ ११ ॥

**क्षताङ्गानामिति** । तीक्ष्णैर्निशितैः उदग्रैरुन्नताग्रभागैः परानन्यान् शृणन्ति हिंसन्तीति परशवस्तैः परशुभिः परश्वधैः ('शृणातेर्डुः' इति डुप्रत्यये परशुशब्दसिद्धिः

द्वयोः कुठारः स्वधितिः परशुश्च परश्वधः ।

इति च रभसः । क्षतान्यङ्गानि येषां ते तथोक्तास्तेषां क्षताङ्गानां छिन्नावयवानाम् रुजा पीडया अविरतान्यविच्छिन्नानि कपोतानामुपरुदितानि तैरविरतकपोतोपरुदितैः अविच्छिन्नपारावतकूजितैः कपोतकूजितव्याजेनेत्यर्थः ।

पारावतः कलरवः कपोतोऽथ शशादनः ।

इत्यमरः । कूजन्तीनां शब्दं कुर्वन्तीनामिवेति गम्योत्प्रेक्षणम् । क्षितिरुहां तरूणां शाखानां विटपानां व्रणं क्षतं फणिनः सर्पाः परिचितानां सहवासिनां परिक्लेशः परिचितपरिक्लेशस्तेन तद्दर्शनेनेत्यर्थः । या कृपा तया परिचितक्लेशकृपया सहवासिदुःखदर्शनजन्याऽनुकम्पया श्वसन्तो दीर्घनिःश्वासं त्यजन्तः सन्तः स्वेषां निर्मोकाः स्वनिर्मोकास्तेषां छेदाभि तैः स्वनिर्मोकच्छेदैः निजकञ्चुकात्मवस्त्रखण्डैः निबध्नन्तीव दृश्यन्ते वर्त्तन्ते वेत्यन्यतरक्रियाशेषो बोध्यः । यथा दयावन्तः सहवासिक्षतदुःखदर्शनाद्वस्त्रेणाच्छादयन्ति तथा फणिनोऽपि शाखानां छेदनजन्यक्लेशावलोकनात्तत् व्रणमात्मकञ्चुकरूपवस्त्रेणाच्छादयन्तीवेत्यर्थः । रुजा कूजन्तीनामित्यत्र कूजन्तीनामिवेत्यर्थाद्गम्योत्प्रेक्षा, अविरतकपोतोपरुदितैरित्यत्र निरतकपोतरुदितव्याजेनेत्यर्थादपह्नुतिः, परिचितपरिक्लेशकृपयेत्यत्र परिचितपरिक्लेशकृपयेवेति हेतुत्वेनोत्प्रेक्षणाद्धेतूत्प्रेक्षा व्रणमिवेत्यत्रोत्प्रेक्षेत्येषां संसृष्टिः । चिन्ताव्यग्रमानसो राक्षसः कस्यचिदतिच्छिन्नबद्धहृदः समवेदनमर्थयते इति वस्तु व्यज्यते ।

प्रसादाख्यगुणेनाऽपि गौडीरीत्या समन्वितम् ।
शिखरिणीनामवृत्तेन पद्यमेतद्विनिर्मितम् ॥ १२ ॥

एते च तपस्विनः,—

अन्तःशरीरपरिशोषमुपाश्रयन्तः,
कीटक्षतिस्त्रुतिभिरस्त्रमिवोद्वमन्तः ।
छायावियोगमलिना व्यसने निमग्ना,
वृक्षाः श्मशानमुपगन्तुमिव प्रवृत्ताः ॥ १३ ॥

यावदस्मिन् विषमदशापरिणामसुलभे भग्नाग्रशिलातले मुहूर्त्तमुपविशामि । (उपविश्याकर्ण्य च ।) अये ! किमयमाकस्मिकः शङ्खपटह-

अन्तः शरीरेति । अन्तःशरीरस्य परिशोषोऽन्तःशरीरपरिशोषस्तमन्तःशरीरपरिशोषं शरीराऽभ्यन्तरशोषणमुपाश्रयन्तः प्राप्नुवन्तः कीटानां क्षतयः कीटक्षतयस्ताभ्यः स्रुतयः कीटक्षतिस्त्रुतयस्ताभिः कीटक्षतिस्त्रुतिभिः कीटत्वकूछिद्ररसक्षरणैः अस्त्रं नेत्रजलम् उद्वमन्त इव मुञ्चन्त इव ।

निष्ठ्यूतोद्‌गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम् ।
अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते ॥

इति दण्डयुक्त्या प्रकृते उद्वमतेर्गौणार्थत्वान्न ग्राम्यत्वदोषः । छायाया अनातपस्य वियोगोऽभावस्तेन मलिना विहतकान्तयः पत्राभावाच्छायाविरहेणाशोभमाना इत्यर्थः । व्यसने दुखे निमग्नाः पतिताः एते पुरोविद्यमाना इत्यर्थः । तपस्विनस्तपश्चरणशीलाः दीना इति यावत्। ( एते तपस्विन इति गद्यस्थस्य सम्बन्धः ) वृक्षास्तरवः श्मशानं पितृवनमुपगन्तुमाश्रयितुं प्रवृत्ता उद्युक्ता इव दृश्यन्ते इति शेषः । परलोकवर्त्तिनन्दप्रभुविरहासहनशीलास्तरवस्तमनुगन्तुं कृतप्रयासा इव बुध्यन्ते इति भावः । द्वितीयचतुर्थपादयोरुत्प्रेक्षणार्थकेवशब्दसत्त्वादुत्प्रेक्षाद्वयम् । एतेनोत्प्रेक्षालङ्कारेण मित्रवियोगजदुःखभाजिनां लोकानां मरणव्यवसायाचरणात्मकव्यवहारोत्थापनात्समासोक्त्यलङ्कारोऽभिव्यज्यते । पाञ्चाली रीतिः । प्रसादो गुणः । वसन्ततिलकं वृत्तम् ॥ १३ ॥

यावदिति । यावत् यत्कालपर्यन्तम् अस्मिन् पुरो दृश्यमाने विषमा चासौ दशा विषमदशा तस्याः परिणामः स इव सुलभः तस्मिन् विषमदशापरिणामसुलभे कठिनदुरवस्थावशिष्टभागसुकरे ( साम्प्रतं यथा कठिनदुरवस्था मयाऽधिगता तथेदं शिलातलमपीति भावः ) ।

भग्नमग्रं यस्य तद्भग्नाग्रं तच्च तच्छिलातलं तस्मिन् भग्नाग्रशिलातले नष्टाग्रभागप्रस्तरखण्डे मुहूर्त्तमल्पक्षणम् उपविशामि आसनपरिग्रहणं करोमि । उपविश्य

विमिश्रो नान्दीनादः श्रूयते ? य एषः,—

प्रकुर्वन् श्रोतॄणां श्रुतिपथमसारं गुरुतया,
बहुत्वात् प्रासादः सपदि परिपीतोज्झित इव ।
असौ नान्दीनादः पटुपटहशङ्खध्वनिमहान्,
दिशां दैर्घ्यं द्रष्टुं प्रसरति सकौतूहल इव ॥ १४ ॥

( विचिन्त्य । ) आं, ज्ञातम्, एष हि मलयकेतुसंयमनसञ्जातो राजकुलस्य । ( इत्यर्द्धोक्ते सासूयम् । ) मौर्य्यकुलस्याऽधिकपरितोषं पिशुन-

---

आसनपरिग्रहणं विधाय आकर्ण्य श्रुत्वा च । अये कोमलालापेऽव्ययम्, किं किमर्थं कुतो वा अयमेषः आकस्मिकोऽकस्मादुत्पन्नः शङ्खपटहविमिश्रः कम्बुग्रीवपटहवाद्यशब्दमिलितः ( संसृष्टः ) नान्दीनादः स्तुतिपाठध्वनिः श्रूयते आकर्ण्यते ।

प्रकुर्वन्निति । गुरोर्भावो गुरुता तया गुरुतया महत्तया श्रोतॄणां आकर्णयितॄणां श्रुतिपथं श्रोत्रम् नास्ति सारो यस्य तदसारं प्रभूतशब्दग्रहणशक्तिहीनम् यद्वा असारमप्रसारं शङ्कुचितमित्यर्थः । कुर्वन् विदधत, बहुत्वाद्बाहुल्याद्धेतोः प्रासादैर्हर्म्यैः सपदि शीघ्रं परिपीतोज्झित इव पूर्वं परिपीतः पश्चादुज्झित इव उद्वान्त इव पटहशङ्खध्वनयस्तैर्महान् पटुपटहशङ्खध्वनिमहान् बृहड्ढक्काशङ्खनादप्रवृद्धः असावेष नान्दीनादो मङ्गलतूर्यध्वनिः सकौतूहलः कौतुकवानिव दिशामाशानां दैर्घ्यं विस्तृतिं द्रष्टुमवलोकितुं प्रसरति सर्वतो गच्छति । यथा कौतुकवान् पुरुषस्वेष्टकार्यसम्पादनाय सर्वतो गच्छति तथा नान्दीनादोऽपीति भावः । अत्रोत्प्रेक्षालङ्कारः । परिपीतोज्झित इव सकौतूहल इवेति चोत्प्रेक्षाद्वयम् वैदर्भी रीतिः । प्रसादो गुणः । शिखरिणीवृत्तम् ॥ १४ ॥

विचिन्त्येति । विचिन्त्य विचार्य केन कस्मात् क कुतोऽयं नान्दीनाद इति सम्यगालोच्येत्यर्थः।आमिति स्मरणार्थकमव्ययमेतत्, ज्ञातम् अवगतम् । मलयकेतोः संयमनं मलयकेतुसंयमनं तस्मात्सञ्जातो मलयकेतुसंयमनसञ्जातः पर्वतकपुत्रबन्धनोत्पन्न एषोऽसौनान्दीनादः राजकुलस्य नृपवंशस्य, इत्यर्द्धोक्ते इति वाक्यार्द्धमभिधाय सासूयम् मुरापुत्रे चन्द्रगुप्ते राजशब्दप्रयोगमभिधानमसूया द्वेषस्तेन सहितं यथा तथा ब्रवीतीत्यर्थः । मौर्यकुलस्य चन्द्रगुप्तवंशस्य अधिकपरितोषं प्रभूतानन्दं पिशुनयति सूचयति ।

( सबाष्पम् । ) कष्टं भोः ! कष्टम् !!—

श्रावितोऽस्मि श्रियं शत्रोरभिनीय स दर्शितः ।
अनुभावयितुं मन्ये, यत्नः सम्प्रति मां विधेः ॥ १५ ॥

पुरुषः—आसीणो अअं । ता जाव अज्जचाणक्कस्स आणत्तिं संपादेमि । ( १ ) ( राक्षसमपश्यन्निव तस्याग्रतो रज्जुपाशेन कण्ठमुद्बध्नाति । )

राक्षसः—(विलोक्य स्वगतम् ।) अये ! कथमयमात्मानमुद्बध्नाति !!! नन्वयमहमिव दुःखितस्तपस्वी । भवतु, पृच्छाम्येनम् ( उपसृत्य प्रकाशम् । ) भद्र भद्र ! किमिदमनुष्ठीयते ?

---

( १ ) आसीनोऽयम् । तद्यावदार्य्यचाणक्यस्याज्ञप्तिं सम्पादयामि ।

---

श्रावित इति । शत्रोः रिपोर्मौर्यस्य श्रियं सम्पत्तिं श्रावितः आकर्णितोऽस्मि अभिनीय समीपमानीय दर्शितः साक्षात्कारितश्चास्मि विधिनेति शेषः । सम्प्रति अधुना माम् अनुभावयितुं प्रापयितुं शत्रुसम्पत्तिमिति शेषः । विधेर्दैवस्य यत्नः प्रयासः इति मन्ये उत्प्रेक्षे सम्भावयामीति यावत् । अहमिति कर्तृपदशेषः । अत्र मन्येशब्दप्रयोगनिबन्धनोत्प्रेक्षाऽलंकारः । तदुक्तं दर्पणे—

मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः ।
उत्प्रेक्षासूचकाः शब्दा इत्यादि ॥

निबद्धमेतत्पद्यमनुष्टुप्छन्दसा ॥ १५ ॥

आसीन इति । अयमेष राक्षस इत्यर्थः आसीन उपविष्टः तत्तस्मात् यावत् यत्कालपर्यन्तम् आर्यश्चासौ चाणक्यः आर्यचाणक्यस्तस्यादेशस्तमार्यचाणक्यादेशं पूज्यकौटिल्याज्ञप्तिं सम्पादयामि करोमि ।

राक्षसमपश्यन्निवेति । राक्षसं नन्दसचिवमपश्यन्ननवलोकयन्निव तस्य राक्षसस्याग्रतः पुरतो रज्जुपाशेन बन्धनदाम्ना कण्ठं गलमुद्बध्नाति संयच्छति ।

विलोक्येति । विलोक्य निरीक्ष्य पुरुषमिति शेषः । स्वगतम् अन्यैरश्राव्यं यथा तथा ब्रवीति । अये कारुण्याऽऽविष्कारे सम्बोधनम् , अयमेष पुरुषः कथं कस्मात्कारणात् आत्मानं स्वमुद्बध्नाति संयच्छति नूनं निश्चितम् अयमेषः अहमिव दुःखितः आर्त्तः । भवतु, एनं पुरुषं पृच्छामि, उपसृत्य समीपमेत्य प्रकाशं सुस्पष्टं ब्रवीतीति शेषः । भद्र भद्रेति वीप्सायां शैघ्र्ये वा द्विरुक्तिः, साधो ! किं प्रश्नार्थ-

पुरुषः—( सबाष्पम् । ) अज्ज ! जं पिअवअस्सविनासदुःखिदो अह्मादिसो मन्दभाओ जणो अणुचिट्ठदि ( १ )

राक्षसः—( स्वगतम् । ) प्रथममेव मया ज्ञातं, नूनमहमिवाऽयमार्त्तस्तपस्वीति । भवतु, पृच्छाम्येनम् । ( प्रकाशम् । ) भद्र ! व्यसनब्रह्मचारिन् ! यदि न गुह्यं, नाऽऽतिभारिकं वा ततः श्रोतुमिच्छामि, किं ते प्राणपरित्यागकारणम् ।

पुरुषः—( निरूप्य । ) अज्ज ! ण रहस्सं, ण वा अतिगुरुअं, किन्तु ण सक्कणोमि पिअवअस्सविणासदुक्खिदहिअओ एत्तिअमत्तम्पि मरणस्स कालहरणं कादुं । ( २ )

---

( १ ) आर्य्य ! यत् प्रियवयस्यविनाशदुःखितोऽस्मादृशो मन्दभाग्यो जनोऽनुतिष्ठति ।

( २ ) आर्य्य ! न रहस्यं, न वाऽतिगुरुकं, किन्तु न शक्नोमि प्रियवयस्यविनाशदुःखितहृदय एतावन्मात्रमपि मरणस्य कालहरणं कर्त्तुम् ।

---

कोऽत्र किंशब्दः इदं किम् कार्यमिति शेषः । अनुष्ठीयते विधीयते त्वयेति शेषः ।

आर्येति । आर्य पूज्य ! प्रियवयस्यविनाशदुःखितः अतिस्निग्धमित्रविरहार्त्तोऽस्मादृशो मत्सदृशो मन्दभाग्यो भाग्यहीनो जनो लोको यत् यत्कार्यमनुतिष्ठति करोति तदेव कार्यं मयाऽनुष्ठीयते इत्युत्तराऽभिप्रायः ।

प्रथममेवेति । प्रथमं पूर्वमेव मया ज्ञातमवगतम् अयमेष तपस्वी दीनो नूनं निश्चितम् अहमिव मादृश इवाऽऽर्त्तः शोकव्याकुलमानस इति प्रथममेव ज्ञातमित्यन्वयः, भवतु एनं पृच्छामि, प्रकाशं सर्वश्राव्यं वचो ब्रवीतीत्यर्थः । भद्र साधो ! ब्रह्म वेदस्तदध्ययनार्थं व्रतमपि ब्रह्म तच्चरतीति ब्रह्मचारी समानो ब्रह्मचारी सब्रह्मचारी सहाध्यायी व्यसनेन सब्रह्मचारी व्यसनसब्रह्मचारी तत्सम्बुद्धौ हेव्यसनसब्रह्मचारिन् समानव्यसन ! यदि चेत् न गुह्यं न रहस्यम् अतिभारोऽस्यास्तीति विग्रहे 'अत इनि ठनाविति' सूत्रेण ठनि तस्येकि आतिभारिकम् अथवा अतिभाराय हितम् आतिभारिकम् नातिभारिकम् अगुरुकम्वेत्यर्थः, ततस्तदा श्रोतुमाकर्णितुमिच्छामि अभिलषामि, ते तव प्राणपरित्यागकारणम् आत्मविनाशहेतुः किम् अस्तीति शेषः ।

निरूप्येति । निरूप्य सम्यगालोच्य, आर्य पूज्य ! न रहस्यं न गोप्यं नवाऽ-

राक्षसः—( निःश्वस्याऽऽत्मगतम् । ) कष्टमेतेषु सुहृद्व्यसनेषु परव-दुदासीनाः प्रत्यादिश्यामहे वयमनेन । ( प्रकाशम् । ) भद्र ! यदि न रहस्यं, नाऽतिगुरुकं वा, तत् पुनः श्रोतुमिच्छामि, कथ्यतां का गतिः दुःखस्येति ?

पुरुषः—अहो !! णिबन्धो अज्जस्स, का गदी एसो णिवेदेमि, अ-त्थि एत्थ णअरे मणिआरसेट्ठी जिएणुदासो णाम । ( १ )

राक्षसः—( स्वगतम् ) । अस्ति जिष्णुदासश्चन्दनदासस्य परं मित्रम् । ( प्रकाशम् ) किं तस्य ?

पुरुषः—सो मम पिदअबअस्सो । ( २ )

राक्षसः—(सहर्षमात्मगतम् । ) अये ! प्रियवयस्य इत्याह । अत्यन्त सन्निकृष्टः सम्बन्धः । हन्त !!! ज्ञास्यति चन्दनदासस्य वृत्तान्तम् । ( प्रकाशम् ) भद्र ! किं तस्य ?

---

( १ ) अहो !! निबन्ध आर्यस्य, का गतिरेष निवेदयामि, अस्त्यत्र नगरे मणिकारश्रेष्ठी जिष्णुदासो नाम ।

( २ ) स मम प्रियवयस्यः ।

---

तिगुरुकम् नातिभारिकम् किन्तु तथापीत्यर्थः, प्रियश्चासौ वयस्यस्तस्य विनाशस्ते-न दुःखितं हृदयं यस्य स प्रियवयस्यविनाशदुःखितहृदयः स्निग्धमित्रवियोगार्त्त-मानसः अहमिति शेषः । एतावन्मात्रमपि अल्पक्षणमपि मरणस्य प्राणत्यागस्य कालहरणं समययापनं कर्त्तुं विधातुं न शक्नोमि न समर्थः ।

कष्टमिति । एतेषु सुहृद्व्यसनेषु चन्दनदासविपत्सु परेण तुल्यं परवत् अन्यवत् उदासीनाः अकृतोद्योगा वयम् अनेन अमुना करधृतपाशेन पुरुषेण प्रत्यादिश्यामहे तिरस्क्रियामहे, अनेनैव पथा त्वयापि गन्तव्यमित्युपदिश्यामहे वा । यदि न रहस्यं न चेद्गोप्यं नातिगुरुकं नातिविस्तृतं तत् तदा पुनर्भूयः श्रोतुमिच्छामि आकर्णितु-मभिलषामि दुःखस्य व्यसनस्य का गतिः किं कारणम् इति कथ्यतामभिधीयताम्।

निर्बन्ध इति । अहो आश्चर्यम् आर्यस्य पूज्यस्य भवतः निर्बन्ध आग्रहा-तिशयः, का गतिः क उपायः एषोऽहं निवेदयामि कथयामि, अत्र नगरे अस्मिन् कुसुमपुरे मणिकारश्रेष्ठी वैश्यजातीयो जिष्णुदासो नाम अस्ति ।

सहर्षमिति । सहर्षं सानन्दं यथा तथा आत्मगतमनतिस्पष्टं ब्रवीति । प्रि-

पुरुषः—( सबाष्पम् । ) संपदं सो दीणअणदिण्णविहवो ज्वलणं पविसिदुकामो णअरादो णिक्कन्तो । ता अहं पि जाव तस्स पिअवअस्सस्स असुणिदव्वं ण सुणेमि, ताव अत्ताणं उब्बन्धिअ वावादेमि त्ति इमं जिण्णुज्जाणं आअदो । ( १ )

राक्षसः—भद्र ! अथाऽग्निप्रवेशे तव सुहृदः को हेतुः ?—

किमौषधपथातिगैरुपहतो महाव्याधिभिः ?

पुरुषः—अज्ज ! णहि णहि । ( २ )

राक्षसः—किमग्निविषकल्पया नरपतेर्निरस्तः क्रुधा ? ।

---

( १ ) साम्प्रतं स दीनजनदत्तविभवो ज्वलनं प्रवेष्टुकामो नगरान्निष्क्रान्तः । तदहमपि यावत्तस्य प्रियवयस्यस्याश्रोतव्यं न शृणोमि तावदात्मानमुद्बध्य व्यापादयामीतीमं जीर्णोद्यानमागतः ।

( २ ) आर्य्य ! नहि नहि ।

---

यवयस्य स्निग्धमित्रमित्याह ब्रवीति । अत्यन्तसन्निष्कृष्टः सम्बन्धः एतयोरनतिदूरवर्त्तिन्यपेक्षा । हन्त हर्षे चन्दनदासस्य वृत्तान्तं प्रियमित्रोदन्तं ज्ञास्यति अवगमिष्यति एव राक्षस इति शेषः ।

सबाष्पमिति । सवाष्पं साश्रुनेत्रं यथा तथा ब्रवीति । साम्प्रतमिदानीं दीनजनाय दत्तो विभवो येन स दीनजनदत्तविभवः अकिञ्चनजनार्पितैश्वर्यः स चन्दनदासः ज्वलनमग्निं प्रवेष्टुं कामो यस्य स प्रवेष्टुकामः ( अत्र तुमुनो मकारलोपः ) प्रवेशाभिलाषी नगरात् कुसुमपुरात् निष्क्रान्तो निर्गतः । अश्रोतव्यं मृत्युं न शृणोमि श्रवणसात्करोमि तावत् तत्क्षणपर्यन्तमेव तत्क्षणात्प्रागेवेत्यर्थः । आत्मानं स्वशरीरमुद्बध्य बद्ध्वा व्यापादयितुं विनाशयितुम् इममसुम् जीर्णोद्यानम् पुरातनमुपवनम् आगतः प्राप्तः ।

नहि नहीति । त्वरायां द्विरुक्तिः, उत्कृष्टरोगो न सुहृद्विनाशहेतुरित्यर्थः ।

किमौषधेति । औषधस्य पन्था औषधपथः ( ऋक्पूरब्धूः पथामित्यप् ) तमतिगच्छन्तीति औषधपथातिगास्तैः औषधपथातिगैः अतिक्रान्तप्रतीकार्यतारूपभेषजगुणैः अचिकित्स्यैरिति यावत् । महान्तश्च ते व्याधयो महाव्याधयस्तैर्महाव्याधिभिः प्रवृद्धरोगैः उपहतः पीडितः किम् तव प्रियवयस्य इति शेषः । अप्रती-

पुरुषः— अज्ज ! सन्तं पावं, सन्तं पावम् । चन्दउत्तस्स जणव-देसु अणिसंसा पडिवत्ती । ( १ )

राक्षसः—अलभ्यमनुरक्तवान् किमयमन्यनारीजनम् ?

पुरुषः—( कर्णौ पिधाय । ) अज्ज ! सन्तं पावं सन्तं पावं, अभूमी क्खु एसो विणअणिधाणस्स, बिसेसदो जिएणुदासस्स । ( २ )

राक्षसः—किमस्य भवतो यथा सुहृद एव नाशो विषम् ? ॥ १६ ॥

---

( १ ) आर्य्य ! शान्तं पापं, शान्तं पापम् । चन्द्रगुप्तस्य जनपदेष्वनृ-शंसा प्रतिपत्तिः ।

( २ ) आर्य्य ! शान्तं पापं, शान्तं पापम् । अभूमिः खल्वेष विनयनि-धानस्य वणिग्जनस्य, विशेषतो जिष्णुदासस्य ।

---

कार्यरोगार्त्तस्य मरणे प्रवृत्तेः । अथवा अग्निश्च विषश्चाग्निविषे ताभ्यामौपम्यन्ताऽ-ग्निविषकल्पा तयाऽग्निविषकल्पया वह्निविषतुल्यया नरपतेर्नृपस्य क्रुधा कोपेन निरस्तस्तिरस्कृतः ताडित इति यावत् किम् । नृपसाध्वसेनापि मरणोद्योगप्रवृत्ति-दर्शनात् । अथवा अयमेष तव प्रियवयस्यः अलभ्यं सर्वैर्दुष्प्राप्यम् अन्यनारीजनम् अन्यस्त्रियमनुरक्तवान् आसक्तवान् किम् , आसक्तहृदयस्य वस्तुनोऽलाभे कामस-न्तापस्यासह्यत्वान्मरणे प्रवृत्तेः । यथा भवतस्तव सुहृदो मित्रस्य नाशो मरणमेव विषं विनाशकारणं तथाऽस्य भवन्मित्रस्य मित्रान्तरविनाश एव विषं विनाशकारणं किमित्यर्थः । भवतः सुहृद्विनाश इवाऽस्यापि सुहृदन्तरविनाश एव विषमित्युपमा-नोपमेयभावप्रतीत्या सुहृद्विनाशे विषत्वारोपाच्चोपमोत्थापितरूपकालङ्कारः । पृ-थ्वीनाम वृत्तम् । उक्तञ्च तल्लक्षणं छन्दोमञ्जर्यां यथा—

जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः ।

इति ॥ १६ ॥

**आर्येति** । आर्य पूज्य ! शान्तं पापं नैवं वाच्यम् ।

शान्तं पापमनिर्वाच्ये ।

चन्द्रगुप्तस्य मौर्यस्य जनपदेषु राष्ट्रेषु अनृशंसा अघातुका प्रतिपत्तिः प्रवृत्ति-रित्यर्थः ।

**कर्णाविति** । कर्णौ पिधाय श्रोत्रे आच्छाद्य आर्य पूज्य शान्तं पापम् अल-

पुरुषः—अज्ज ! अध इं ? ( १ )

राक्षसः—( सावेगमात्मगतम् । ) चन्दनदासोऽस्य सुहृदः प्रियसुहृत् तस्य प्रियसुहृद्विनाश एवाऽग्निप्रवेशहेतुरिति यत सत्यं समाकुलित एवाऽस्मि सुहृत्स्नेहपक्षपातिना हृदयेन । ( प्रकाशम् । ) भद्र ! तस्यापि तव सुहृदः सुचरितं विस्तरेण श्रोतुमिच्छामि ।

पुरुषः—अज्ज ! अदो अवरं ण सक्कणोमि मन्दभाओ मरणस्स विग्घमुप्पादेदुं । ( २ )

राक्षसः—श्रवणीयां कथां कथयतु भद्रमुखः ।

पुरुषः—का गदी ? एसो क्खु णिवेदेमि, णिसामेदु अज्जो । ( ३ )

राक्षसः—भद्र ! दत्तावधानोऽस्मि ।

पुरुषः—अत्थि, जाणादि अज्जो, एत्थ णअरे मणिआरसेट्ठी चन्दणदासो णाम ? ( ४ )

---

( १ ) आर्य ! अथ किम् ?

( २ ) आर्य ! अतोऽपरं न शक्नोमि मन्दभाग्यो मरणस्य विघ्नमुत्पादयितुम् ।

( ३ का गतिः ? एष खलु निवेदयामि, निशामयार्यः ।

( ४ ) अस्ति, जानात्यार्यः इह नगरे मणिकारश्रेष्ठी चन्दनदासो नाम ?

---

भ्यमित्यादि न वक्तव्यम् । एष परनारीजनानुरागरूपो दोषो विनयनिधानस्याऽतिविनीतस्य वणिग्जनस्य वैश्यजातीयस्य अभूमिः अविषयः, विशेषतो विशेषरूपेण जिष्णुदासस्य मन्मित्रस्य ।

अथेति । अथ किम् , मम प्रियसुहृदो जिष्णुदासस्य सुहृदन्तरविनाश एव विनाशहेतुरित्यर्थः ।

सावेगमिति । आवेगेन सह वर्तमानं सावेगं सरभसं सचिन्तं वा यथा तथा आत्मगतमनतिस्पष्टं वचो ब्रवीतीति शेषः । अस्य मम पुरोवर्त्तिनः पुरुषस्य, सुहृदो मित्रस्य जिष्णुदासस्येत्यर्थः । चन्दनदासः प्रियसुहृत् प्रियमित्रम् , तस्य जिष्णुदासस्य प्रियसुहृद्विनाश एव चन्दनदासमरणमेव अग्निप्रवेशहेतुः वह्निपतनकारणम् इतीत्येतदवृत्तं यत यस्मात्सत्यं तथ्यम् , अत इत्यध्याहर्तव्यम् , अतोऽ-

राक्षसः—( सविषादमात्मगतम् ) । एतत्तदपावृतमस्मद्विनाशदीक्षा-प्रकाशद्वारं दैवेन । हृदय ! स्थिरमिव किमपि ते कष्टतरमाकर्णनीयम् । ( प्रकाशम् ) भद्र ! श्रूयते मित्रवत्सलः स साधुः । किं तस्य ?

पुरुषः—सो एदस्स जिण्णुदासस्स पिअवअस्सो होदि । ( १ )

राक्षसः—( स्वगतम् । ) अयमभ्यर्णः शोकवज्रपातो हृदयस्य । ( प्रकाशम् । ) ततस्ततः ?

पुरुषः—तदो जिण्णुदासेण पिअवअस्सस्स सिणेहसरिसं अज्ज विण्णत्तो चन्दउत्तो ! ( २ )

राक्षसः—कथम् किमिति ?

---

( १ ) स एतस्य जिष्णुदासस्य प्रियवयस्यो भवति ।

( २ ) ततो जिष्णुदासेन प्रियवयस्यस्य स्नेहसदृशमद्य विज्ञप्तश्चन्द्रगुप्तः ।

---

स्मात्कारणात् सुहृत्स्नेहपक्षपातिना मित्रानुरागासक्तेन हृदयेन चित्तेन समाकुलितः पीडित एवाऽस्मि । प्रकाशम् उच्चैर्ब्रवीति, भद्र साधुशील ! तस्यापि जिष्णुदासस्यापि तव सुहृदः भवतो मित्रस्य सुचरितं साधुकृत्यं विस्तरेण श्रोतुमाकर्णितुमिच्छामि ।

सविषादमिति । सविषादं सचिन्तम् आत्मगतमनतिस्पष्टं च यथा तथा ब्रवीति । अस्मद्विनाशदीक्षाप्रकाशद्वारम् अस्मद्विनाशोपदेशागमनमार्गो दैवेन भाग्येनाऽपावृतम् । हृदय चित्त ! स्थिरीभव स्थैर्यमवलम्बस्व ते तव किमपि वृत्तमिति शेषः । कष्टतरं दुःखजनकम् आकर्णनीयम् , श्रूयते आकर्ण्यते स चन्दनदासो मित्रवत्सलः सुहृदनुरागी साधुः सच्चरित्रः ।

स्वगतमिति । अश्राव्यं यथा तथा ब्रवीति राक्षसः, सोऽयं स एष हृदयस्य चित्तस्य शोकवज्रपातः चिन्ताकुलिशागमोऽभ्यर्णोऽदूरवर्ती अचिरम्भावीति यावत् ।

तत इति । ततस्तदनन्तरं चन्दनदासस्य राजदण्डश्रवणोत्तरमित्यर्थः, जिष्णुदासेन तन्नाम्ना तत्सुहृदा प्रियवयस्यस्य प्रियबन्धोः स्नेहसदृशं प्रीतितुल्यं यथा तथा अद्य चन्द्रगुप्तो मौर्यो विज्ञप्तः प्रार्थितः ।

पुरुषः—देव ! अत्थि मे गेहे कुटुम्बभरणपज्जत्तो अत्थो । तस्स विणिमएण मुञ्चिज्जदु मे पिअवअस्सो चन्दणदासो त्ति । ( १ ) ।

राक्षसः—( स्वगतम् । ) साधु जिष्णुदास साधु ! अहो ! दर्शितो मित्रस्नेहः । कुतः ?—

पितॄन् पुत्राः पुत्रान् परवदभिहिंसन्ति पितरो,
यदर्थं सौहार्दं सुहृदि च विमुञ्चन्ति सुहृदः ।
प्रियं मोक्तुं तद्यो व्यसनमिव सद्यो व्यवसितः,
कृतार्थोऽयं सोऽर्थस्तव सति वणिक्त्वेऽपि वणिजः ॥ १७ ॥

( १ ) देव ! अस्ति मे गेहे कुटम्बभरणपर्य्याप्तोऽर्थः । तस्य विनिमयेन मुच्यतां मे प्रियवयस्यश्चन्दनदास इति ।

देवेति । देव राजन् ! मे मम गेहे भवने कुटुम्बभरणपर्याप्तो बन्धुपोषणपूरणोऽर्थो विभवोऽस्ति, तस्यार्थस्य विनिमयेन परिवर्तनेन मे मम प्रियवयस्यः प्रियसुहृत् चन्दनदासः मुच्यतां त्यज्यताम् इति विज्ञप्त इत्यन्वयः । (एतेनास्य सुहृद्विपत्त्राणप्रावीण्यं सूचितम् ) ।

पितॄनिति । यदर्थं यस्मै अर्थाय निमित्तं पुत्राः सुताः पितॄन् जनकान् पितरो जनकाः पुत्रान् सुतान् परेण तुल्यं परवत् अन्यतुल्यम् अभिहिंसन्ति घ्नन्ति, सुहृदो वयस्याश्च सुहृदि मित्रे सौहार्द्दमनुरागं मुञ्चन्ति त्यजन्ति । प्रियं प्राणादपीष्टं तत् धनं यो जिष्णुदासः व्यसनमिव दुःखमिव मोक्तुं त्यक्तुं सद्यस्तत्क्षणं व्यवसितः समुद्युक्तः सोऽयमर्थः तदेतद्धनं वणिजो वणिग्जातीयस्य तव भवतो वणिक्त्वे वणिग्जातीयनैसर्गिककार्पण्यराहित्येऽपि सति कृतार्थः सफलो जात इति शेषः । यस्यार्थस्य लोभात्पितृपुत्रयोरन्योन्यं विरोधो जायते यस्य च लोभात् मित्रे च विरोधः सञ्जायते तस्यार्थस्य सुहृद्विपदुद्धरणाय व्ययीकरणात्साफल्यं प्रापितं त्वयेत्यर्थः । आद्यतृतीयपादयोर्वदिवशब्दयोरुपमानवाचकयोः सत्त्वादुपमाद्वयम् । चतुर्थपादप्रतिपाद्येऽर्थस्य कार्तार्थ्यरूपेऽर्थे तृतीयपादप्रतिपाद्यस्य व्यसनवद्धनत्यागोद्यतत्वहेतुत्वाद्वाक्यार्थहेतुककाव्यलिङ्गम् । अर्थव्ययविरोधिवणिक्त्वप्रदर्शनेऽप्यर्थव्ययोक्त्या विरोधस्य जातत्वाद्विरोधालंकारश्चेत्येषां नैरपेक्ष्येणैकत्राऽवस्थानात्संसृष्टिः । शिखरिणीवृत्तम् ॥ १७ ॥

( प्रकाशम्। ) भद्र! ततस्तथाऽभिहितेन सता किं प्रतिपन्नं मौर्येण?

पुरुषः—अज्ज! तदो एवं भणिदेण चन्दउत्तेण पडिभणिदो सेट्ठी जिण्णुदासो,—"जिण्णुदास! ण मए अत्थस्स कालणेण सेट्ठी चन्दणदासो संजमिदो, किंदु पच्छादिदो अणेण अमच्चरक्खसस्स घरअणो, बहुसो जाचिदेणावि ण समप्पिदोत्ति ता जइ अमच्चरक्खसस्स घरअणं समप्पेदि, तदो अत्थि से मोक्खो, अण्णधा, पाणहरो से दण्डो त्ति भणिअ, बज्झट्ठाणं आणीदो चन्दणदासो। तदो "जाव प्पिअवअस्सस्स चन्दणदासस्स असुणिदव्वं ण सुणेमि, तावज्जेव अत्ताणअं वावादेमि" त्ति, जलणे पविसिदुकामो सेट्ठी जिण्णुदासो णअरादो णिग्गदो। अहं वि जाव प्पिअवअस्सस्स जिण्णुदासस्स असुणिदव्वं ण सुणेमि, ताव उब्बन्धिअ अत्ताणं वावादेमित्ति, इमं जिण्णुज्जाणं आगदो ह्मि? (१)

(१) आर्य्य! तत एवं भणितेन चन्द्रगुप्तेन प्रतिभणितः श्रेष्ठी जिष्णुदासः,—'जिष्णुदास! न मयाऽर्थस्य कारणेन श्रेष्ठी चन्दनदासः संयमितः, किन्तु प्रच्छादितोऽनेनामात्यराक्षसस्य गृहजनः, बहुशो याचितेनाऽपि न समर्पित इति। तद्यद्यमात्यराक्षसस्य गृहजनं समर्पयति, ततोऽस्त्यस्य मोक्षः, अन्यथा, प्राणहरोऽस्य दण्ड इति भणित्वा वध्यस्थानमानीतश्चन्दनदासः। ततो "यावत् प्रियवयस्यस्य चन्दनदासस्याश्रोतव्यं न शृणोमि, तावदेवात्मानं व्यापादयामि" इति ज्वलने प्रवेष्टुकामः श्रेष्ठी जिष्णुदासो नगरान्निर्गतः। अहमपि यावन् प्रियवयस्यस्य जिष्णुदासस्याश्रोतव्यं न शृणोमि, तावदुद्बध्यात्मानं व्यापादयामि, इतीदं जीर्णोद्यानमागतोऽस्मि।

भद्रेति। भद्र साधुशील! ततस्तदनन्तरं जिष्णुदासेन मौर्यम्प्रति विज्ञापनोत्तरमित्यर्थः, तथा तादृग् अभिहितेन कथितेन मौर्येण चन्द्रगुप्तेन किं प्रतिपन्नं किं प्रत्युक्तम्।

तत इति। ततस्तदुत्तरमेवं भणितेन ईदृगभिहितेन चन्द्रगुप्तेन मौर्येण, भणितः प्रत्युक्तः, मयाऽर्थस्य कारणेन धनस्य हेतुना श्रेष्ठी चन्दनदासो न संयमितः न

राक्षसः—न खलु व्यापादितश्चन्दनदासः ?

पुरुषः—अज्ज ! ण दाव वावादीअदि । सो क्खु संपदं पुणो पुणो अमच्चरक्खसस्स घरजणं जाचीअदि । ण सो मित्तवच्छलदाए जाचीअन्तो वि तं समप्पेदि । ता एदिणा कालणेण होदि से मरणस्स कालहलणं । ( १ )

---

( १ ) आर्य्य ! न तावत् व्यापाद्यते । स खलु साम्प्रतं पुनः पुनरमात्यराक्षसस्य गृहजनं याच्यते । न स मित्रवत्सलतया याच्यमानोऽपि तं समर्पयति तदेतेन कारणेन भवत्यस्य मरणस्य कालहरणम् ।

---

बद्धः न कारागृहे निक्षिप्त इति यावत् । किन्त्वनेन चन्दनदासेनाऽमात्यराक्षस्य गृहजनः कलत्रादि प्रच्छादितः संगोपितः क्वाप्यनिर्दिष्टस्थाने स्थापित इत्यर्थः, बहुशो याचितेनापि असकृदर्थितोऽपि गृहजन इति शेषः। न समर्पितो न दत्तः । तत्तस्मात् यदि चेत् अमात्यराक्षसस्य नन्दसचिवस्य गृहजनं कलत्रादिकं समर्पयति ददाति तदाऽस्य चन्दनदासस्य मोक्षो मुक्तिरस्ति बन्धनादिति शेषः, अन्यथा राक्षसगृहजनाऽसमर्पणे सतीत्यर्थः । अस्य चन्दनदासस्य हरतीति हरः प्राणस्य हरः प्राणहरः जीवनाशः दण्डः क्लेशः । इति भणित्वा एवमभिधाय चन्दनदासः कायस्थजातीयो राक्षसमित्रं वध्यस्थानं मारणभूमिमानीतः । ततस्तदुत्तरं यावत् यत्कालपर्यन्तं प्रियवयस्यस्य प्रियसुहृदः चन्दनदासस्य, अश्रोतव्यं मरणं न शृणोमि आकर्णयामि तावदेव तत्कालपर्यन्तमेव आत्मानं प्राणं व्यापादयामि विनाशयामि इत्यतो हेतोः ज्वलने वह्नौ प्रवेष्टुकामः प्रवेशाभिलाषी श्रेष्ठी वैश्यजातीयो जिष्णुदासो नगरात्पुरान्निर्गतो निस्सृतः । अहमपि यावत् प्रियवयस्यस्य प्रियसुहृदो जिष्णुदासस्याश्रोतव्यं मरणं न शृणोमि नाकर्णयामि तावत् तत्कालपर्यन्तम् उद्बध्योर्ध्वबन्धनं कृत्वा आत्मानं प्राणं व्यापादयामि विनाशयामि, इत्यतो हेतोः इदमेतत् जीर्णोद्यानं पुरातनोपवनमागतः प्राप्तोऽस्मि भवामि ।

आर्येति । आर्य पूज्य ! न तावत् व्यापाद्यते न तत्कालपर्यन्तं हन्यते स खलु ( खलुशब्दो वाक्यालंकारे ) असौ चन्दनदासः साम्प्रतमधुना पुनः पुनः भूयोभूयः अमात्यराक्षसगृहजनं राक्षसकलत्रं याच्यते प्रार्थ्यते मौर्येणेति शेषः । चन्दनदासो याच्यमानोऽपि प्रार्थ्यमानोऽपि मित्रवत्सलतया सुहृत्स्नेहेन न तं राक्षसगृहजनं

राक्षसः—( सहर्षमात्मगतम् । ) साधु वयस्य ! चन्दनदास ! साधु, साधु ।—

शिवेरिव समुद्भूतं शरणागतरक्षया ।
विचीयते त्वया साधो ! यशोऽपि सुहृदा विना ॥ १८ ॥

( प्रकाशम् । ) भद्र ! भद्र ! गच्छ शीघ्रमिदानीं जिष्णुदासं ज्वलनप्रवेशान्निवारय । अहमपि चन्दनदासं मरणान्मोचयामि ।

पुरुषः—अध, केण उण उवाएण अज्जो चन्दणदासं मरणादो मोचेदि ? ( १ )

राक्षसः—( खड्गमाकृष्य । ) नन्वनेन व्यवसायमहासुहृदा निस्त्रिंशेन ।

( १ ) अथ केन पुनरुपायेनार्य्यश्चन्दनदासं मरणान्मोचयति ।

---

समर्पयति ददाति । तत्तस्मात् एतेन कारणेन अनेन हेतुनाऽस्य चन्दनदासस्य मरणस्य विनाशस्य कालहरणं समययापनं भवति जायते ।

शिवेरिवेति । अत्रत्येवशब्दस्य भिन्नक्रमत्वेन यशसा सम्बन्धो बोध्यः । हे साधो परोपकारिन् ! शरणमागतः शरणागतः शरणागतस्य रक्षा शरणागतरक्षा तया शरणागतरक्षया शरणप्राप्तकपोतरूपिवह्नेः श्येनरूपेन्द्रात्त्राणेनेत्यर्थः । समुद्भूतं समुत्पन्नं शिवेः उशीनरदेशाधिपस्य नृपतेः यश इव कीर्तिरिव यश इति शेषः । त्वया भवता सुहृदा शरणागतेन मित्रेण विनाऽपि विचीयते सम्पाद्यते । शिविः शरणागतस्य समक्ष एवात्मविनाशमुपगतः त्वया तु शरणागतस्य ममाऽसमक्षे विनाशमुपगमिष्यतीत्याश्चर्यमित्यर्थः । शिवेर्यश इव यश इत्यर्थो उपमा । उपमानशिवेरपक्षयोपमेयस्य त्वया पदवाच्यस्याधिक्यवर्णनाद्व्यतिरेकालङ्कारश्चेति द्वयोः संसृष्टिः । अनुष्टुप् वृत्तम् ॥ १८ ॥

भद्रेति । त्वरायां द्विरुक्तिः, गच्छ प्रयाहि शीघ्रं द्रुतमिदानीं साम्प्रतं जिष्णुदासं तदाख्यं सुहृदं ज्वलनप्रवेशात् वह्निपतनात् निवारय निषेध ( अत्र वारणार्थानामीप्सित इत्यपादानत्वात्पञ्चमी ) अहमपि चन्दनदासमेतदाख्यं सुहृदं मरणात् विनाशात् मोचयामि पृथक्करोमि ( अत्र भीत्रार्थानां भयहेतुः इत्यपादानत्वात्पञ्चमी ) ।

नन्विति । ननु वितर्के अनेन एतेन व्यवसायः पौरुषं महासुहृत् यस्य स व्यवसायमहासुहृत् तेन व्यवसायमहासुहृदा पौरुषप्रियमित्रेण निस्त्रिंशेन खड्गेन

ननु पश्य,—

निस्त्रिंशोऽयं विगतजलदव्योमसङ्काशमूर्त्ति-
र्युद्धश्रद्धापुलकित इव प्राप्तसख्यः करेण ।
सत्त्वोत्कर्षात् समरनिकषे दृष्टसारः परैर्मे
मित्रस्नेहाद् विवशमधुना साहसे मां नियुङ्क्ते ॥ १९ ॥

पुरुषः—अज्ज ! एवं सेट्ठिचन्दणदासजीविदं होदि त्ति सुणिदं, विसमदसाविभाअपरिणामपड़िदो सक्कणोमि णिच्चिदपदं पड़िवत्तुं । (विलोक्य पादयोर्निपत्य ।) अध, सुगिहीदणामधेआ अमच्चरक्खसपादा तुह्मे त्ति, ता करेहि मे प्पसादं संदेहणिणएण । ( १ )

( १ ) आर्य्य ! एवं श्रेष्ठिचन्दनदासजीवितं भवतीति श्रुतं, विषमदशाविभागपरिणामपतितो न शक्नोमि निश्चितपदं प्रतिपत्तुम् । अथ सुगृहीतनामधेया अमात्यराक्षसपादा यूयमिति, तत् कुरु मे प्रसादं सन्देहनिर्णयेन ।

अथवा व्यवसाये पौरुषे महासुहृत् तेन व्यवसायमहासुहृदा पौरुषैकसहायेन निस्त्रिंशेन खड्गेन चन्दनदासं मरणान्मोचयामीति शेषः ।

निस्त्रिंशोऽयमिति । विगतो जलदो यस्मात्तत् विगतजलदं तच्च तद्व्योम विगतजलदव्योम तेन सङ्काशा मूर्त्तिर्यस्य स विगतजलदव्योमसङ्काशमूर्त्तिः शरत्कालिकाकाशसदृशकृष्णवर्णः, युद्धे श्रद्धा युद्धश्रद्धा तया पुलकितः युद्धश्रद्धापुलकितः रणविषयकादरसञ्जातरोमाञ्च इव करेण हस्तेन प्राप्तं सख्यं येन स प्राप्तसख्यः सञ्जातानुरागः करधृत इत्यर्थः । सत्त्वस्योत्कर्षः सत्त्वोत्कर्षस्तस्मात्सत्त्वोत्कर्षात् बलाधिक्यात् परैः शत्रुभिः समर एव निकषः समरनिकषस्तस्मिन् समरनिकषे संग्रामपरीक्षणोपले दृष्टः सारो यस्य स दृष्टसारः दृष्टशक्तिः अयमेष मे मम निस्त्रिंशः अधुना सम्प्रति मित्रस्नेहात् सुहृदनुरागात् विवशं व्यग्रं मां साहसे पौरुषे युद्धव्यापारे इत्यर्थः । नियुङ्क्ते प्रेरयति । प्रथमपादे सादृश्यार्थकसङ्काशशब्दसत्त्वादुपमा । द्वितीयपादे उत्प्रेक्षा । तृतीयपादे समरे परीक्षात्वसाधर्म्येण निकषत्वारोपाद्रूपकम् इत्येषां संसृष्टिः । मन्दाक्रान्ता वृत्तम् ॥ १९ ॥

एवमिति । एवं त्वयि युद्धे प्रवृत्ते सतीत्यर्थः । श्रेष्ठिचन्दनदासजीवितं वणिक्चन्दनदासजीवनं भवति ( भविष्यत्सामीप्ये लट् ) भविष्यतीत्यर्थः, इति श्रु-

राक्षसः—भद्र ! सोऽहमनुभूतभर्तृवंशविनाशः सुहृद्विनाशहेतुरनार्यो दुर्गृहीतनामा यथार्थो राक्षसः ।

पुरुषः—( सहर्षं पुनः पादयोर्निपत्य । ) पसीदध, पसीदध । हीमाणहे ! दिट्ठिआ कदत्थोह्मि । ( १ )

राक्षसः—भद्र ! उत्तिष्ठोत्तिष्ठ, कृतमिदानीं कालहरणेन, निवेद्यतां जिष्णुदासाय, यथैष राक्षसः चन्दनदासं मरणान्मोचयति । ( इति "निस्त्रिंशोऽयम्" इत्यादि पठन् आकृष्टखड्गः परिक्रामति । )

पुरुषः—( पादयोर्निपत्य । ) पसीदन्तु पसीदन्तु अमच्चरक्खसपादा: । अत्थि दाव एत्थ णअरे पढमं चन्दउत्तहदएण अज्जसअडदास-

( १ ) प्रसीदथ प्रसीदथ । आश्चर्यम् ! दिष्ट्या कृतार्थोऽस्मि ।

त्वत्त इति शेषः, विषमदशाविभागपरिणामपतितः असद्रावस्थाविशेषपरिपाकप्राप्तः अहमिति शेषः । निश्चितपदं निर्णीतस्थानं त्वमिति शेषः । प्रतिपत्तुं ज्ञातुं न शक्नोमि न समर्थः ।

सोऽहमिति । सोऽहम् अनुभूतो भर्तुर्नन्दस्य वंशविनाशः कुलक्षयो येन सोऽनुभूतभर्तृवंशविनाशः प्राप्त(दृष्ट)नन्दकुलक्षयः सुहृद्विनाशहेतुः मित्रमरणकारणम् अनार्यः कुत्सितः दुर्गृहीतनामा अपुण्यनामधेया यथार्थोऽन्वर्थः राक्षसः अस्मीति शेषः ।

पादयोर्निपत्येति । पादयोश्चरणयोर्निपत्य पतित्वा चरणौ प्रणम्येत्यर्थः । प्रथमं प्राक् चन्द्रगुप्तहतकेन निन्दितेन मौर्येण आर्यशकटदासस्य वधो हिंसा आज्ञप्त आदिष्टः ( आत्मनो नन्दकुलानुरागित्वसूचनार्थं पदद्वयोपादानमिति बोध्यम् ) स च आर्यशकटदासः केनापि वीरपुरुषेण वध्यस्थानान्मारणप्रदेशात् अपहृत्य आदाय देशान्तरं दूरदेशमपवाहितः प्रापितः । ततस्तदुत्तरं चन्द्रगुप्तहतकेन अनार्येण कस्मात् कुतः कारणात् प्रमादोऽनवधानता कृतः इतीत्येतदभिधाय आर्यशकटदासवधवञ्चनया पूज्यशकटदासहिंसनप्रतारणया समुज्ज्वलितः प्रदीप्तो रोषाग्निः क्रोधवह्निः घातकजनवधजलेन रक्षकजनमारणेनेत्यर्थः। निर्वापितः शमितः । ततः प्रभृति तदारभ्य घातकाः हिंसकाः यं कमपि गृहीतशस्त्रमायुधविशिष्टम् अपूर्वम् अदृष्टपूर्वं पुरुषं लोकं प्रेक्षन्ते पश्यन्ति तदाऽर्द्धपथे एवार्द्धमार्गे एव आत्मनो जीवितं स्वप्रमाणं परिरक्षन्तः

स्स वधो आणत्तो । सो अ केणावि बज्झट्ठाणादो अवहरिअ, देसन्तरं अववाहिदो । तदो चन्दउत्तहदएण कीस प्पमादो किदो त्ति अज्जसअडदासवधवञ्चणाए समुज्जलिदो रोसग्गो घादअजणवधजलेण णिव्वाविदो । तदो पहुदि घादआ जं कंपि गहीदसत्थं अपुव्वं पुरुसं अग्गदो वा पेक्खन्ति, तदो अद्धवधे ज्जेव अत्तणो जीविदं परिरक्खन्तो अप्पमत्ता एदे अवात्तवज्झट्ठाणं वज्झं वावादेन्ति । ता एव्वं गहीदसत्थेहिं अमच्चपादेहिं तहिं गच्छन्तेहिं सेट्ठिचन्दणदासस्स वहो तुवराइदो होदि । ( १ )

( इति निष्क्रान्तः )

राक्षसः—( स्वगतम् ) अहो ! दुर्बोधश्चाणक्यवटोर्नीतिमार्गः । कुतः?—

यदि स शकटो नीतः शत्रोर्मतेन ममान्तिकं,
किमिति निहतस्तेन क्रोधाद् वधाधिकृतो जनः ? ।
अथ न कृतकं तादृक्कष्टं कथं नु विभावये-
दिति मम मतिस्तर्कारूढा न पश्यति निश्चयम ॥ २० ॥

---

( १ ) प्रसीदन्तु प्रसीदन्त्वमात्यराक्षसपादाः । अस्ति तावदत्र नगरे प्रथमं चन्द्रगुप्तहतकेनाऽऽर्यशकटदासस्य वध आज्ञप्तः । स च केनापि वध्यस्थानादपहृत्य देशान्तरमपवाहितः । ततश्चन्द्रगुप्तहतकेन कस्मात् प्रमादः कृत इति आर्यशकटदासवधवञ्चनया समुज्ज्वलितो रोषाग्निर्घातकजनवधजलेन निर्वापितः । ततः प्रभृति घातका यं कमपि गृहीतशस्त्रं अपूर्वं पुरुषमग्रतः पश्चाद्वा प्रेक्षन्ते, तदाऽर्द्धपथे एवात्मनो जीवितं परिरक्षन्तोऽप्रमत्ता एतेऽवाप्तवध्यस्थानं बध्यं व्यापादयन्ति । तस्मादेवं गृहीतशस्त्रैरमात्यपादैस्तत्र गच्छद्भिः श्रेष्ठिचन्दनदासस्य वधस्त्वरायितो भवति ।

---

परित्रायमाणाः अप्रमत्ताः सावधानाः सन्तः अवाप्तवध्यस्थानं प्राप्तमारणप्रदेशं बध्यं मारणार्हं पुरुषमिति शेषः व्यापादयन्ति मारयन्ति ।

स्वगतमिति । अनतिस्पष्टं यथा तथा ब्रवीतीत्यर्थः, अहो आश्चर्यम् चाणक्यवटोः अल्पधियो विष्णुगुप्तस्य नीतिमार्गो नयपद्धतिर्दुर्बोधो ज्ञातुमशक्यः ।

यदीति । यदि शत्रोश्चाणक्यस्य मौर्यस्य वा मतेन आज्ञया कपटेनेत्यर्थः गूढचरेण सिद्धार्थकेनेति शेषः । शकटः शकटदासो ममान्तिकं मम समीपं नीत

( विचिन्त्य । ) तस्मात्,—

नायं निस्त्रिंशकालः, प्रथममिह कृते घातकानां विघाते,
नीतिः कालान्तरेण प्रकटयति फलं किं तया कार्य्यमत्र ।
औदासीन्यं न युक्तं, प्रियसुहृदि गते मत्कृते चातिघोरां
व्यापत्तिं ज्ञातमस्य स्वतनुमहमिमां निष्क्रयं कल्पयामि

( इति निष्क्रान्ताः सर्वे । )

इति षष्ठोऽङ्कः ॥ ६ ॥



---

प्रापितः तर्हि तेन चाणक्येन मौर्येण वा क्रोधात् चन्दनदासापसारणविषयच्युतिजन्यघातकजनविषयकोपादित्यर्थः । वधाधिकृतो हिंसननियुक्तो जनो लोकः किमिति कुतो निहतो व्यापादितः स्यादिति शेषः । अथ पक्षान्तरे घातकजनवधाऽन्यथाऽनुपपत्त्येत्यर्थः । कृतकं न, शकटदासस्य पलाय्य गमनं कपटरूपं न भवति,यथार्थमेव सिद्धार्थकस्य तात्त्विकसाहसोपकारेण शकटदासस्य गमनं भवतीत्यर्थः । तदा तादृक् कष्टं कुत्सितं स्वहस्तलेखमुद्राङ्कनादिरूपं स्वामिद्रोहं शकटदासः कथं नु भावयेत् नु वितर्के कर्त्तव्यत्वेन कथं चिन्तयेदित्यर्थः, तस्य चिन्तनमप्ययुक्तं किमुताचरणमिति तात्पर्यम् । इतीत्थं मम मतिर्बुद्धिः तर्कारूढा सन्देहपरिहारार्थं विचारमनुसरन्ती सतीत्यर्थः, अथवा इतीत्थं तर्कारूढा सन्देहास्पदीभूता मम मतिर्बुद्धिः निश्चयं सिद्धान्तं न पश्यति नाधिगच्छति सम्प्रत्यपि सन्देहाकुलेव मम धीरित्यर्थः । अतश्चाणक्यनीतिभागो दुर्बोध इत्याशयः । निश्चयप्राप्त्यभावे हेतुभूतस्य तर्कारूढमतित्वस्य वाक्यार्थत्वेनाभिहितत्वाद्वाक्यार्थहेतुककाव्यलिङ्गालङ्करणालंकृतं पद्यमिदमित्यवधेयम् । शिखरिणी वृत्तम् ॥ २० ॥

नायमिति । इहास्मिन् चन्दनदासमोचनविषये अयमेषः निस्त्रिंशकालः खड्गधारणसमयो न, यतः प्रथमं प्राक् घातकानां घातकैरित्यर्थः ( कृद्योगे कर्तरि षष्ठी ) चन्दनदासस्येत्यध्याहार्यम् विघाते विनाशे कृते सति तस्य वैफल्यादिति शेषः । नीत्यवलम्बनमप्ययुक्तमित्याह—नीतिरिति । नीतिर्नयः खड्गधारणविपयेत्यर्थः । कालान्तरेण समयान्तरेण फलं प्रकटयति सिद्धिं जनयति अतस्तया नीत्याऽत्रास्मिन् चन्दनदासमोचने किं कार्यं न किमपीत्यर्थः । औदासीन्यावलम्बनमप्ययु

# सप्तमोऽङ्कः ।

( ततः प्रविशति चण्डालः ) ।

चण्डालः—ओसलध अज्जा ! ओसलध, अवेध माणहे ! अवेध,—

---

कमित्याह—औदासीन्यमिति । प्रियसुहृदि प्रियमित्रचन्दनदासे मत्कृतां घोरां कठिनां व्यापत्ति विपदं गते प्राप्ते सति औदासीन्यं निरपेक्षतयाऽवस्थानं न युक्तं न समुचितम् । इत्थं सन्दिह्य कर्त्तव्यमवधारयति—ज्ञातमिति । इमां स्वतनुं निजशरीरम् अस्य चन्दनदासस्य निष्क्रियतेऽनेनेति निष्क्रयस्तं निष्क्रयं मोचनमूल्यं कल्पयामि करिष्यामीत्यर्थः ( भविष्यत्सामीप्ये लट् ) । प्राक् कापट्येनाऽकापट्येन वा घातकैश्चन्दनदासे निहते भीत्या खड्गधारणमयुक्तम् तत्क्षणं फलाजननान्नीत्यवलम्बनं न युक्तम् सुहृदुपेक्षणं कृतघ्नतादोषोत्पादकमतो निजशरीरमेव तन्मोचनमूल्यमुचितमिति ज्ञातमिति भावः ।

स्वशरीरदानेन सुहृन्मोचनादत्र परिवृत्तिनामाऽलङ्कारः । तदुक्तं दर्पणे—

परिवृत्तिर्विनिमयः समन्यूनाधिकैर्भवेत् ।

इति । सच निस्त्रिंशाऽधारणम्प्रति घातककर्तृकचन्दनदासविघातस्य नीत्यनाश्रयणे चिरकालफलोत्पत्तेः औदासीन्यानाश्रयणे सुहृद्विपदश्च हेतुत्वेनोपन्यासात्काव्यलिङ्गत्रयणोज्जीवितः । स्रग्धरा वृत्तम् ॥ २१ ॥

इति मैथिलश्रीकनकलालठक्कुरविरचितायां मुद्राराक्षसभावबोधिनीव्याख्यायां षष्ठोऽङ्कः ।



एवं षष्ठेनाऽङ्केन मुख्यकार्यममात्यराक्षसाऽऽयत्तीकरणात्मकं बीजवद्भिर्यथायथं विप्रकीर्णैरत्रैकार्थीभावम्प्राप्तैर्मुखसन्ध्याद्यर्थैः सम्पन्नम् अथामात्यराक्षसेन मौर्याऽमात्यपदोपादानद्वारा तच्छ्रीस्थैर्यसम्पादनात्मकनाटकस्योत्कृष्टफलं प्रापयितुं सप्तमाङ्कप्रक्रमः । करधृतबन्धनदाम्ना पुरुषेण सूचितं चन्दनदासश्मशानभूम्यागमनमाकर्ण्य ससत्वरमुत्सृज्य शस्त्रं श्मशानभूमिं गत इत्युक्तम् साम्प्रतमुक्त एव चन्दनदासवृत्तान्तोऽभिधीयते प्रपञ्च्यते ।

यत्र स्यादुत्तराऽङ्कार्थः पूर्वाऽङ्कार्थाऽनुसंगतः ।

इत्युक्तलक्षणादङ्कावतरणमिदम् ।

जइ लक्खिदु मगद्धं प्पाणं, बिहवे,कुले, कलत्ते अ ।
पलिहलध ता बिसं बिअ लाआपत्थं प्पअत्तेण (१) ॥ १ ॥

अबिअ,—

होदि पुलिसस्स ब्बाहो मलणं बा, सेबिदे अपत्थेबि ।
लाआपत्ये उण सेबिदे सअलं बि कुलं मलदि॥ २ ॥ (२)

---

( १ ) अपसरत आर्य्या अपसरत, अपेत मान्याः अपेत,—
यदि रक्षितुं मन्यध्वं प्राणं विभवं, कुलं, कलत्रं च ।
परिहरत तस्मात् विषमिव राजापथ्यं प्रयत्नेन ॥
( २ ) अपि च,—भवति पुरुषस्य व्याधिर्मरणं वा सेविते अपथ्येऽपि ।
राजापथ्ये पुनः सेविते हि सकलमपि कुलं म्रियते ॥

---

यदीति । यदि प्राणमात्मानं विभवमैश्वर्य कुलं वंशं कलत्रं दारांश्च रक्षितुं त्रातुं यथावत् स्थापयितुं मन्यध्वम् इच्छत यूयमिति शेषः । तस्मात् तदा प्रयत्नेन प्रयासेन सर्वथेत्यर्थः। विषमिव हलाहलमिव पथोऽनपेतं पथ्यं न पथ्यमपथ्यं राज्ञोऽपथ्यं राजापथ्यं नृपाहितं परिहरत परित्यजत । (रक्षितुमित्यत्रेच्छार्थैककर्तृकधातूपपदाद्भाव एव तुमुनो विधानात्तस्यात्रासत्त्वात्स न स्यादिति नाशंक्यम् । तादृशस्य मनधातोरेव सत्त्वेन तदुपपत्तेः ) प्राणादिविनाशकं नृपाहितं सर्वथा परित्याज्यमित्यर्थः । विषसेवनादेकस्यैव विनाशः सोऽपि कादाचित्को राजापथ्यकरणात्सपुत्रकलत्रादेरात्मनो विनाश इत्यर्थस्य फलितत्वाद्विदरूपोपमानादुपमेयस्य राजापथ्यस्याऽऽधिक्यप्रतीत्या व्यतिरेकालंकारः । स च हेतोरनुक्तेस्तृतीयः । तदुक्तम्—

आधिक्यमुपमेयस्योपमानान्न्यूनताऽथवा ।
व्यतिरेक एक उक्ते हेतौ नोक्ते स च त्रिधा ॥

इति । आर्या वृत्तम् ॥ १ ॥

भवतीति । अपथ्येऽहितकरे वस्तुनि विषादौ सेविते भुक्ते सति पुरुषस्य जनस्य व्याधिर्मानसी व्यथा मरणम्वा प्राणवियोगो वा भवति जायते । पुनर्वाक्यालंकारे हिशब्दो निश्चयार्थकः राजापथ्ये नृपाहितकरे कार्ये इत्यर्थः । सेविते कृते सति सकलमपि सर्वमपि कुलं वंशो म्रियते विनश्यति । सामान्यापथ्यसेवनादेकस्यैव विनाशो राजापथ्यसेवनात्सर्वनाश इत्यर्थः । अत्रापि सामान्यापथ्याद्राजापथ्यस्या-

ता जइ ण प्पत्तिआअध, तदा पेक्खध एणं लाआपत्थकारिणं सेट्ठिचन्दणदासं बज्झट्ठाणं आणीअमाणं सपुत्तकलत्तं । ( आकाशे ) अज्जा ! किं भणाध ? अत्थि किं चन्दनदासस्स मोक्खोबाओ त्ति ? कुदो से अधणस्स मोक्खोबाओ ? एद उण अत्थि,-सो जइ अमच्चरक्खसस्स घरअणं समप्पेदि । ( पुनराकाशे । ) किं भणाध ? एसे सलणागदबच्छले अत्तणो जीविदस्स कालणेण ईरिसं अकज्जं ण कलिस्सदित्ति ? अज्जा ! जइ एव्वं, त्तेण हि अवधारेध से सुभगदिं । किं दाणीं तुह्माणे प्पडीआलविआरेण ? ( १ )

---

( १ ) तद्यदि न प्रत्ययध्वं, तदा प्रेक्षध्वमेनं राजापथ्यकारिणं श्रेष्ठिचन्दनदासं वध्यस्थानमानीयमानं सपुत्रकलत्रम् । आर्य्याः ! किं भणथ ? अस्ति किं चन्दनदासस्य मोक्षोपाय इति ? कुतोऽस्याधन्यस्य मोक्षोपायः ? एतत् पुनरस्ति-स यद्यमात्यराक्षसस्य गृहजनं समर्पयति । किं भणथ ? एष शरणागतवत्सल आत्मनो जीवितस्य कारणेनेदृशमकार्य्यं न करिष्यतीति ? आर्य्याः ! यद्येवं, तेन ह्यवधत्तास्य शुभगतिम् । किमिदानीं युष्माकं प्रतीकारविचारेण ?

---

धिक्योक्त्या व्यतिरेकालंकारः । पूर्वार्द्धेऽपथ्योत्कर्षमभिधायोत्तरार्द्धे तदुपमानत्वप्रकल्पनाद्द्वितीयप्रतीपालंकारो ध्वन्यते तेनेत्यलङ्कारध्वनिः ।

उक्त्वा चात्यन्तमुत्कर्षमत्युत्कृष्टस्य वस्तुनः ।
कल्पितेऽप्युपमानत्वे प्रतीपं केचिदूचिरे ॥

इति प्रतीपालंकारलक्षणम् । आर्या वृत्तम् ॥ २ ॥

तद्यदीति । यदि चेत् न प्रत्ययध्वं मदुक्तवचनं तथ्यत्वेन न गृह्णीत तदा तर्हि एनममुम् राजापथ्यकारिणं नृपाऽहितविधायिनं वध्यस्थानमानीयमानं श्मशानभूमिं प्राप्यमाणं सपुत्रकलत्रं तनयस्त्रीसहितं श्रेष्ठिचन्दनदासं चन्दनदासनामानं वैश्यजातीयं पुरुषं प्रेक्षध्वमवलोकध्वम् । आकाशेऽन्तरिक्षे सन्निधापितचक्षुः सन् ब्रवीतीति शेषः । आर्याः पूज्याः ! किं भणथ किं वचनं ब्रूथ चन्दनदासस्य मोक्षोपायो मुक्तिप्रकारः किमस्ति विद्यते ( प्रश्नार्थकोऽत्र किंशब्दः ) अस्यतस्याऽधन्यस्य हतभाग्यस्याऽपुण्यवत इति यावत् । कुतो मोक्षोपायः कस्मान्मुक्तिप्रकारः

( ततः प्रविशति द्वितीयचाण्डालानुगतो वध्यवेशधारी शूलं स्कन्धेनादाय कुटुम्बिन्या पुत्रेण चानुगम्यमानश्चन्दनदासः । )

चन्दनदासः—हद्धी !! हद्धी !! अह्मारिसाणं वि कधं णित्तचारित्त-भङ्गभीरुणं चेरिजणोचिदं मलणं पत्तं त्ति । णमोकिदन्तस्स । अहवा

---

नास्तीत्यर्थः । स चन्दनदासो यदि चेत् अमात्यराक्षसगृहजनं मन्त्रिणो राक्षसस्य कलत्रं समर्पयति ददाति, एतत्पुनरस्ति एष मोक्षोपायो वर्तते । पुनराकाशे, भूयोऽन्तरिक्षे चक्षुः सन्निधाप्य ब्रवीतीत्यर्थः । किं भणथ किं ब्रूथ एषोऽसौ शरणागतवत्सलः शरणापन्नेष्वनुरागवान् आत्मनः स्वस्य जीवितस्य प्राणस्य कारणेन हेतुना ईदृशम् अकार्यं राक्षसकलत्रसमर्पणरूपनिन्दितकर्मेत्यर्थः।न करिष्यति न विधास्यति । आर्याः पूज्याः ! यद्येवं अमात्यराक्षसगृहजनसमर्पणे इत्यर्थः, तेन हि अस्य चन्दनदासस्य शुभगति ( शरणापन्नरक्षणजन्यसुकृतेन स्वर्लोकप्राप्तिमिति बाह्योऽर्थः ) ( अमात्यराक्षसद्वारा बन्धनान्मुक्त्या कल्याणप्राप्तिमिति गूढोऽर्थः ) अवधत्त जानीत । इदानीं साम्प्रतं युष्माकं भवतां प्रतीकारविचारेण मोक्षोपायचिन्तनेन किं न किमपीत्यर्थः ।

तत इति । ततः पुरुषकर्तृकाकाशभाषणोत्तरमित्यर्थः। द्वितीयचण्डालाऽनुगतोऽपरवधकानुसृतः वध्यवेशधारी रक्तवस्त्रस्रक्चन्दनादिधारणशीलः वध्यभूमिकामादायेत्यर्थः । स्कन्धेन अंशेन शूलं लोहनिर्मिततीक्ष्णसूक्ष्माग्रावयवं शङ्कुमादाय गृहीत्वा कुटुम्बिन्या पत्न्या पुत्रेण तनयेन चाऽनुगम्यमानोऽनुस्त्रियमाणः चन्दनदासो वैश्यजातीयोऽमात्यराक्षसमित्रं प्रविशति रङ्गशालान्तर्गतो भवति ।

भार्या जायाथ पुंभूम्नि दाराः स्यात्तु कुटुम्बिनी

इत्यमरः ।

हाधिगिति । बाष्पेण नेत्राश्रुणा सह वर्तमानं सबाष्पं सास्रुपूर्णनेत्रमित्यर्थः । ( क्रियाविशेषणम् ) तद्यथा स्यात्तथा ब्रवीति । ही धिगिति शोकावेगाद्द्विरुक्तिः, हा कष्टे धिक् निन्दा कष्टं निन्दनीयमित्यर्थः । चरित्रमेव चारित्रं तस्य भङ्गश्चारित्रभङ्गस्तस्माच्चारित्रभङ्गात् नित्यं चारित्रभङ्गाद्भीरवो नित्यचारित्रभङ्गभीरवस्तेषां नित्यचारित्रभङ्गभीरूणां प्रतिदिनचरित्रस्खलनभयशालिनाम् अस्मादृशानां मद्विधानामपि जनानामिति शेषः। चौरजनोचितं दस्युजनयोग्यं मरणं मृत्युः प्राप्तमधिगतम् कृतान्तस्य ( सम्बन्धविवक्षया षष्ठी ) कृतान्ताय यमाय नमोऽस्त्विति शेषः ।

ण णिसंसाणं उदासीणेसुं इदरेसुं वा बिसेसो अत्थि ? तधाहि,—

मौत्तूण आमिसाइं मलणभएण तिणेहिं जीवन्तम् ।
वाहाणं मुद्धहरिणं हन्तुं को णाम णिब्बन्धो ? ॥ ३ ॥ (१)

( समन्तादवलोक्य । ) भो पिअवस्स बिण्णुदास ! कधं पडिबअणं वि मे ण पड़िबज्जसि त्ति । अधवा, दुल्लहा क्खु पुरिसा, जे इमस्सिं

( १ ) हा धिक् , हा धिक् ! अस्मादृशानामपि कथं नित्यचारित्रभङ्गभीरूणां चौरजनानामिव मरणं प्राप्तमिति । नमः कृतान्तस्य । अथवा न नृशंसानामुदासीनेष्वितरेषु वा विशेषोऽस्ति । तथाहि—

मुक्त्वा आमिषाणि मरणभयेन तृणर्जीवन्तम् ।
व्याधानां मुग्धहरिणं हन्तुं को नाम निर्बन्धः ?

मादृशानां सच्चरित्रवतामीदृशमरणप्रदो यमो नमस्कार्य इत्यर्थः । अथवा नृशंसानां दुर्जनानां ।

नृशंसो घातुकः क्रूर

इत्यमरः । उदासीनेषु असन्निहितेषु निरपराधेष्विति यावत् वा इतरेषु सन्निहितेषु सापराधेष्वित्यर्थः।न विशेषोऽस्ति न भेदो वर्तते दण्ड्यादण्ड्यविवेको न भवतीत्यर्थः । चाणक्यस्य दण्ड्यादण्ड्यविवेको नास्तीति विशेषे प्रस्तुतेऽभिधातव्ये सामान्येन नृशंसानां नास्ति दण्ड्यादण्डयविवेक इत्यप्रस्तुताऽभिधानादत्राप्रस्तुतप्रशंसानामालङ्कारः तदेव दर्शयति तथाहीति ।

मुक्तेति । मरणाद्भयं मरणभयं तेन मरणभयेन मृत्युभीत्या आमिषाणि मत्स्यादीनि मुक्त्वा परित्यज्य तृणैः शष्पैर्जीवन्तं प्राणं धारयन्तं मुग्धहरिणं सरलप्रकृतिं मृगं हन्तुं व्यापादयितुं व्याधानां किरातानां को नाम निर्बन्धः क आग्रहातिशयः । अप्रस्तुतव्याधकर्तृकहरिणव्यापादनोक्त्या प्रस्तुतचाणक्यकर्तृकचन्दनदासव्यापादनावगत्याऽप्रस्तुतप्रशंसालङ्कारः । यथा निर्दोषहरिणव्यापादको व्याधस्तथा निर्दोषपुरुषव्यापादकश्चाणक्योऽपीति बिम्बप्रतिबिम्बभावद्योतनाद्दृष्टान्तालङ्कारः । मृत्युभीत्या हरिणानामामिषत्यागायोगेऽपि तद्योगोक्त्याऽतिशयोक्त्यलङ्कारश्चेत्येषामङ्गाऽङ्गिभावेन साङ्कर्यम् । आर्यावृत्तम् ॥ ३ ॥

समन्तादिति । समन्तात् सर्वतोऽवलोक्य दृष्ट्वा रङ्गस्थानं सम्यङ्निरीक्ष्ये-

काले दिट्ठिवधे बि चिठ्ठन्ति । (सवाष्पम्) एदे अह्मप्पिअवअस्सा अस्सुवादमेत्तकेण किदप्पदीआरा कहं विणिवत्तमाणा परिवड्ढमाणसोअदीणवदणा, बाप्फगरुआए दिट्टीए मं अणुगच्छन्दि । ( १ ) ( इति परिक्रमिति । )

चाण्डालौ—( परिक्रम्यावलोक्य च । ) अज्ज चन्दनदास ! आगदोसि बज्झट्ठाणं, ता बिसज्जेहि परिअणं। ( २ )

चन्दनदासः—अज्जे ! कुटुम्बिणि ! णिवत्तस्स तुमं सपुत्ता । बज्झट्ठाणं क्खु एदं, अदो अवरं अभूमि क्खु अणुगच्छिदुम् ( ३ )

---

( १ ) भो प्रियवस्य विष्णुदास ! कथं प्रतिवचनमपि मे न प्रतिपद्यसे इति । अथवा, दुर्लभाः खल्वेते पुरुषाः येऽस्मिन् काले दृष्टिपथेऽपि तिष्ठन्ति । एतेऽस्मत्प्रियवयस्या अश्रुपातमात्रेण कृतप्रतीकाराः निवर्त्तमानाः परिवर्द्धमानशोकदीनवदनाः वाष्पगुर्व्या दृष्ट्या मामनुगच्छन्ति ।

( २ ) आर्य्य चन्दनदास ! आगतोऽसि वध्यस्थानं, तत् विसर्ज्जय परिजनम् ।

( ३ ) आर्य्ये ! कुटुम्बिनि ! निवर्त्तस्व त्वं सपुत्रा । वध्यस्थानं खल्वेतत् , अतोऽपरमभूमिः खल्वनुगन्तुम ।

---

त्यर्थः । भो प्रियवयस्य हे प्रियबन्धो ! विष्णुदास ! मे मम प्रतिवचनं प्रत्युत्तरमपि कथं न प्रतिपद्यसे कुतो न ददासि । अथवा ये पुरुषाः अस्मिन् काले दुःखावसरे दृष्टिपथे तिष्ठन्ति चक्षुर्विषयमायान्ति ते पुरुषा दुर्लभाः दुष्प्रापा विरला इति यावत । सवाष्पं साश्रुनेत्रं यथा तथा ब्रवीति । एतेऽस्मत्प्रियवयस्याः इमे मम प्रियबन्धवः अश्रुपातमात्रेण चक्षुर्जलनिपातेन कृतप्रतीकाराः कृतोपायाः कथमपि निवर्त्तमानाः केनापि प्रकारेण गच्छन्तः परिवर्द्धमानशोकदीनवदनाः प्रवृद्धचिन्ताम्लानमुखाः वाष्पगुर्व्या दृष्ट्या अश्रुपूर्णनेत्रेण माम् अनुगच्छन्ति अनुयान्ति मां पश्यन्तीत्यर्थः ।

परिक्रम्येति । परिक्रम्य सञ्चर्य अवलोक्य समीक्ष्य च आर्यचन्दनदास ! वध्यस्थानं श्मशानम् आगतः प्राप्तोऽसि तत्तस्मात कारणात परिजनं परिवारवर्गं पुत्रकलत्रादिकमित्यर्थः । विसर्जय निवर्त्तय ।

आर्ये इति । आर्ये श्रीमति ! मान्ये इत्यर्थः । त्वं सपुत्रा सतनया निवर्तस्व

कुटुम्बिनी—( सबाष्पम् । ) परलोअं प्पत्थिदो अज्जो, ण उण देसन्तरं, ता अज्जोग्गो दाणीं कुलजनस्स णिवत्तिदुं । ( १ )

चन्दनदासः—अज्जे ! सच्चं, मित्तकज्जेण मम बिणासो, ण पुरिसदोसेण । ता किं हरिसट्ठाणे बि रोइसि त्ति ? ( २ )

कुटुम्बिनी—अज्ज ! जइ एव्वं ता अणुचिदं दाणीं कुलजणेण णिवत्तिदुं । ( ३ )

चन्दनदासः—अध इं ब्बवसिदं अज्जाए ? ( ४ )

---

( १ ) परलोकं प्रस्थित आर्यों न पुनर्देशान्तरं, तदयोग्यमिदानीं कुलजनस्य निवर्त्तितुम् ।

( २ ) आर्य्ये ! सत्यं, मित्रकार्य्येण मम विनाशो, न पुरुषदोषेण तत् किं हर्षस्थानेऽपि रोदिषि इति ?

( ३ ) आर्य्य ! यद्येवं, तदनुचितमिदानीं कुलजनेन निवर्त्तितुम् ।

( ४ ) अथ किं व्यवसितमार्य्यया ?

---

गच्छ । एतत् वध्यस्थानं खलु श्मशानम् अस्तीति शेषः ( खलुशब्दो वाक्यालङ्कारे । ) अतोऽपरम् एतदग्रे अनुगन्तुम् अनुसर्त्तुं अभूमिः खलु अयुक्तमित्यर्थः ।

सबाष्पमिति । अश्रुपूर्णनेत्रं यथा तथा ब्रवीति । आर्यः पूज्यो भवानिति शेषः । परो लोकः परलोकस्तं परलोकं स्वर्लोकं प्रस्थितो गन्तुमुत्सुकः अस्तीति शेषः । न पुनर्देशान्तरम् अन्यजनपदं प्रस्थित इति शेषः । तत्तस्मात् इदानीं साम्प्रतं कुलजनस्य बन्धुवर्गस्य निवर्त्तितुं त्यक्तुं त्वामिति शेषः । ( गन्तुम् अयोग्यम् ) अयुक्तम् देशान्तरगन्तुकपत्यनुगमनमयुक्तं स्वर्लोकगन्तुकपत्यनुगमनं तु युक्तमेवेति भावः।

सत्यमिति । सत्यं यथार्थतो मित्रकार्येण सुहृत्कार्येणेत्यर्थः।मम विनाशे मृत्युः न पुनः पुरुषदोषेण असदाचरणेनेत्यर्थः । तत्तस्मात् हर्षस्थाने आनन्दसमयेऽपि किं किमर्थं रोदिषि आक्रन्दसि ।

आर्येति । आर्य पूज्य ! यद्येवं सुहृत्कार्यसाधनाय विनाशे सतीत्यर्थः । तत्तदा इदानीं साम्प्रतं कुलजनेन बन्धुवर्गेण निवर्त्तितुम् परित्यक्तुम् अनुचितम् अयुक्तम् विनाशकाले न कुलजनैः परित्यज्य गन्तव्यमित्यर्थः ।

अथेति । अथ मदुक्तश्रवणानन्तरम् आर्यया भवत्या किं व्यवसितं किं निश्चितम् अनुगमननिवर्तनयोर्मध्ये किं स्थिरीकृतमित्यर्थः ।

कुटुम्बिनी—(सवाष्पम् ।) भत्तुणो चलणमणुगच्छन्तीए अप्पाणुग्गहो होदित्ति । ( १ )

चन्दनदासः—अज्जे ! दुव्ववसिदं एदं दे, ता दाणीं अज्जाए अअं अमुणिदलोअव्ववहारो कुमारो अणुगेह्णिदव्वो त्ति । ( २ )

कुटुम्बिनी—अणुगेह्णन्तु णं प्पसण्णाओ । कुलदेवदाओ । जाद ! पुत्तअ ! प्पणम अपच्छिमस्स पिदुणो पाएसुं ( ३)

पुत्रः—( पादयोनिपत्य । ) ताद ! मए तादविरहिदेण किं अणुचिट्ठिदव्वं ? (४ )

---

( १ ) भर्त्तुश्चरणमनुगच्छन्त्या आत्माऽनुग्रहो भवतु ।

( २ ) आर्ये! दुर्व्यवसितमिदं ते, तदिदानीमार्य्ययाऽयमश्रुतलोकव्यवहारः कुमारोऽनुग्रहीतव्य इति ।

( ३ ) अनुगृह्णन्त्वेनं प्रसन्नाः कुलदेवताः । जात ! पुत्रक ! प्रणम, अपश्चिमस्य पितुः पादयोः ।

( ४ ) तात ! मया तातविरहितेन किमनुष्ठातव्यम ?

---

सवाष्पमिति । वाष्पेण अश्रुणा सहितं सवाष्पम् तद्यथा स्यात्तथा ब्रवीति । भर्त्तुः स्वामिनश्चरणं पादमनुगच्छन्त्या अनुसरन्त्याः ( अनुस्मरन्त्याः ) स्त्रिया इति शेषः।आत्मनोऽनुग्रहः आत्माऽनुग्रहः भवति जायते । पतिचरणानुगमनशीलाः स्त्रियः स्वर्गलोके महीयन्ते इत्यर्थः ।

दुर्व्यवसितमिति । आर्ये मान्ये ! इदमेतत् ते त्वया ( सम्बन्धसामान्ये षष्ठी ) दुर्व्यवसितम् अयुक्तम् स्थिरीकृतम् तत्तस्मात् इदानीं साम्प्रतम् आर्यया भवत्या अश्रुतोऽज्ञातो लोकव्यवहार आचारो येन सोऽश्रुतलोकव्यवहारः अज्ञातलोकाचारोऽयमेष कुमारः शिशुः अनुग्रहीतव्यः पालनीयः । शिशुं परित्यज्य मदनुसरणनिश्चयस्तेऽयुक्त एवेति भावः ।

अनुगृह्णन्त्विवति । कुलदेवताः कुलदेवाः प्रसन्ना हृष्टाः सन्तः एनं कुमारम् अल्पवयस्कं शिशुम् अनुगृह्णन्तु रक्षन्तु । जात पुत्रक ! अपश्चिमस्याऽतः परं द्रष्टुमशक्यस्य पितुस्तातस्य पादयोश्चरणयोः प्रणम पत नमस्कुर्विति यावत् ।

पादयोर्निपत्येति । पादयोश्चरणयोर्निपत्य प्रणम्य, तात पितः ! तातविर-

चन्दनदासः—पुत्त ! चाणक्कविरहिदे देसे बसिदव्वं । (१)

चण्डालौ—अज्ज ! चन्दनदास ! णिखादे शूले, ता दाणीं सज्जो होहि ! (२)

कुटुम्बिनी—अज्जा ! पलित्ताअध पलित्ताअध । (३)

चन्दनदासः—भद्दमुह ! मुहुत्तअं चिट्ठ । अइ जीविदवच्छले ! किं एत्थ आक्कंदसि ? सग्गं गदा क्खु ते देवा णन्दा, जे दुक्खिदं इत्थीजणं प्पइदिणं अणुकम्पन्ति । (४)

---

(१) पुत्र ! चाणक्यविरहिते देशे वस्तव्यम् ।

(२) आर्य्य चन्दनदास ! निखातं शूलं, तदिदानीं सज्जो भव !

(३) आर्य्याः ! परित्रायध्वं परित्रायध्वम् ।

(४) भद्रमुख ! मुहूर्त्तं तिष्ठ । अयि जीवितवत्सले ! किमत्राक्रन्दसि ? स्वर्गं गताः खलु ते देवाः नन्दाः, ये दुःखितं स्त्रीजनं प्रतिदिनमनुकम्पन्ते ।

---

हितेन भवद्वियोगिना मया किं कार्यमिति शेषः । अनुष्ठातव्यं विधातव्यम् । भवत्परोक्षे यत्कार्यानुष्ठानेन न कैश्चिदपि वैमनस्यं जायेत सुखञ्च स्यात्तत्सर्वमुपदेश्यमिति भावः ।

पुत्रेति । पुत्र जात ! चाणक्यविरहिते कौटिल्याऽनधिष्ठिते देशे जनपदे वस्तव्यं स्थातव्यम् यस्मिन्देशे कौटिल्यस्य नाधिपत्यं तत्र त्वया स्थातव्यमित्यर्थः । एतेन चाणक्यक्रौर्यमुक्तम् ।

आर्येति । आर्य पूज्य चन्दनदास! निखातः शूलः भूमौ निक्षिप्तः प्राणहरो लोहशङ्कुः, तत्तस्मात् सज्जो भव आरोढुमुद्यतो भव । प्राणहरणक्षणप्राप्तौ शूले निक्षिप्ते च समययापनं न कार्यमित्यर्थः ।

आर्या इति । आर्याः पूज्याः कुलदेवताः अन्ये दयालवो वा ( इति बाह्यतात्पर्यम् ) अस्मद्रक्षणोद्यता अमात्यराक्षसाः ( इति गूढतात्पर्यम् ) यूयमिति शेषः । परित्रायध्वं रक्षत मृत्युमुखान्मम पतिमिति शेषः । त्वरावेशाद्द्विरुक्तिः ।

भद्रमुखेति । भद्रमुख! दूतद्वयसम्बोधनम् , मुहूर्त्तं क्षणं तिष्ठ विलम्बस्व, यावदस्मन्मरणकातरामिमामपुष्टहृदयांकुटुम्बिनीं सान्त्वयामीति वाक्यशेषः । अयि

प्रथमश्चंडालः—अले वेणुवेत्तका ! गेह्न इमं चन्दणदासं । घलजणो स्सअं ज्जेव गमिस्सदि । ( १ )

द्वितीयश्चण्डालः—अले बज्जलोमआ ! एसे गेह्लामि । ( २ )

चन्दनदासः—भद्दमुह ! चिट्ठ मुहुत्तअं, जाव पुत्तअं परिस्सआमि । ( इति पुत्रं परिष्वज्य मूर्ध्नि समाघ्राय । ) जाद ! पुत्तअ ! अवस्सं भविदव्वे वि विणासे मित्तकज्जं समुव्वहमाणो विणासमणुभवामि । ( ३ )

पुत्रः—ताद ! एदं क्खु भणिदव्वं, किं कुलक्कमो क्खु एसो अह्माणं? ( ४ ) ( इति पादयोः पतति ) ।

चण्डालः—अले गेह्न बज्जलोमआ ! ( ५ )

---

( १ ) अरे वेणुवेत्रक ! गृहाणेमं चन्दनदासम् । गृहजनः स्वयमेव गमिष्यति ।

( २ ) अरे वज्रलोमक ! एष गृह्णामि ।

( ३ ) भद्रमुख ! तिष्ठ मुहूर्त्तं, यावत् पुत्रकं परिष्वजे । जात ! पुत्रक ! अवश्यम्भवितव्येऽपि विनाशे मित्रकार्य्यं समुद्वहमानो विनाशमनुभवामि ।

( ४ ) तात ! इदं खलु भणितव्यं किं कुलक्रमः खल्वेषोऽस्माकम् ?

( ५) अरे गृहाण वज्रलोमक !

---

जीवितवत्सले मत्प्राणानुरागिणि ! अत्रास्मिन् हर्षस्थाने आक्रन्दसि रोदिषि ? ये नन्दा दुःखितं क्लिश्यमानं स्त्रीजनं नारीवर्गं प्रतिदिनं सततम् अनुकम्पन्ते रक्षन्ति रक्षन्तिस्मेत्यर्थः । ते नन्दा नन्दनामानो देवा राजानः स्वर्गगता सुरगृहातिथयो जाताः । नात्र रोदनं विधेयम् देवा एव रक्षिष्यन्तीत्यर्थः ।

यावदिति । यावत् यत्कालपर्यन्तं पुत्रकम् अल्पवयस्कं शिशुं परिष्वजामि आलिङ्गामि, इतीत्येतद्वचोऽभिधाय पुत्रं शिशुं परिष्वज्य समालिङ्ग्य मूर्ध्नि शिरसि समाघ्राय घ्रात्वा । जात पुत्रक ! अवश्यंभवितव्येऽपि विनाशे निश्चितेऽपि मरणे मित्रकार्यं सुहृदुपकारं समुद्वहमानः कुर्वन् विनाशं मृत्युम् अनुभवामि प्राप्नोमि । अतस्त्वया शोको न विधेयः । ( शोकदीनवचनादिविभावैरनुभावैश्च पुष्कलः करुणरसोऽत्र स्थायी । )

( चाण्डालौ गृहीतश्चन्दनदासमारोपयितुं शूले ) ।

कुटुम्बिनी—(सोरस्ताडम् ।) अज्जा ! पलित्ताअध पलित्ताअध। (१)

( प्रविश्यपटाक्षेपेण राक्षसः । ) भवति ! न भेतव्यं न भेतव्यं; भो भो शूलायतनाः ! न खलु व्यापादनीयश्चन्दनदासः । कुतः ?—

येन स्वामिकुलं रिपोरिव कुलं दृष्टं विनश्यत् पुरा,
मित्राणां व्यसने महोत्सव इव स्वस्थेन येन स्थितम् ।
आत्मा यस्य वधाय वः परिभवक्षेत्रीकृतोऽपि प्रियः,
तस्येयं मम मृत्युलोकपदवी वध्यस्रगाबध्यताम् ॥ ४ ॥

( १ ) आर्याः ! परित्रायध्वम् परित्रायध्वम् ।

**सोरस्ताडमिति** । ताडनं ताडः उरसस्ताड उरस्ताडस्तेन सहितं सोरस्ताडम् तद्यथा स्यात्तथा ब्रवीति ( क्रियाविशेषणम् ) आर्याः पूज्याः ! परित्रायध्वं रक्षत मृत्युमुखात्पतिमिति शेषः यूयमिति च शेषः ।

**प्रविश्य पटाक्षेपेणेति** । असूचितपात्रस्य सहसा प्रवेशः पटाक्षेपस्तेन । शूलमायतनं जीवनं येषां ते शूलायतनाः शूलजीविन इत्यर्थः ।

**येनेति** । येन मया राक्षसेन पुरा पूर्वं स्वामिनः कुलं स्वामिकुलं नन्दवंशः रिपोः कुलमिव शत्रोर्वंश इव विनश्यत् क्षयं गच्छत् दृष्टम् अवलोकितम् न तत्र किमपि कृतम् येन मया मित्राणां सुहृदां चन्दनदासप्रभृतीनामित्यर्थः । व्यसने दुःखे महोत्सवे आनन्दकाले इव स्वस्थेन सुस्थिरेण स्थितं न तत्र साहाय्यं कृतम् । यस्य मम आत्मा शरीरम् ।

आत्मा पुंसि स्वभावे च प्रयत्नमनसोरपि ।
धृतावपि मनीषायां शरीरब्रह्मणोरपीति मेदिनी ।

इति प्रामाण्याच्छरीरेप्यात्मशब्दप्रयोगः। वो युष्माकं मौर्याश्रितानामित्यर्थः। परिभवस्य क्षेत्रं परिभवक्षेत्रमपरिभवक्षेत्रं परिभवक्षेत्रं कृतः परिभवक्षेत्रीकृतोऽनादरास्पदीभूतोऽपि वधाय हन्तुमित्यर्थः (तुमर्थाच्च भाववचनादिति चतुर्थी) प्रिय इष्टः, तस्य मम मृत्योर्लोको मृत्युलोकस्तस्य पदवी मृत्युलोकपदवी यमनगरगमनपद्धतिः इयमेषा वध्यस्रग् रक्तपुष्पमाल्यादियुक्तबन्धनदाम आबध्यताम् पिनह्यतां कण्ठे त्वयेति शेषः । चन्दनदासस्थाने मामेव व्यापादयेति भावः । रिपोः कुलमिवेत्यत्र

चन्दनदासः—( विलोक्य सबाष्पम् । ) अमच्च ! किं एदं दे व्ववसिदं ? ( १ )

राक्षसः—त्वदीयसुचरितैकदेशस्यानुकरणं किल ।

चन्दनदासः—अमच्च ! सव्वं बि मे णिप्फलं एदं प्पआसं करन्तेण ण मे प्पिअं अणुचिट्ठिदं अमच्चेण । ( २ )

राक्षसः—सखे चन्दनदास ! कृतमुपालम्भेन, स्वार्थप्रधानो हि जीवलोकः । भद्रमुख ! अयमर्थो निवेद्यतां तावद्दुरात्मने चाणक्याय ।

चण्डालौ—अध किं त्ति ? ( ३ )

---

( १ ) अमात्य ! किमिदं ते व्यवसितम् ?

( २ ) अमात्य ! सर्वमपि मे निष्फलमिमं प्रयासं कुर्व्वता न मे प्रियमनुष्ठितममात्येन ।

( ३ ) अथ किमिति ?

---

सादृश्यार्थकेवशब्दस्य रिपुकुलस्वामिकुलरूपयोरुपमानोपमेययोर्विनश्यत्तात्मकसाधारणधर्मस्य च सत्त्वाच्छ्रौतीपूर्णोपमालंकारः । एवं महोत्सव इवेत्यत्र तादृशेवशब्दस्य महोत्सवव्यसनयोरुपमानोपमेययोः स्वस्थत्व ( अविकृतत्व )रूपसाधारणधर्मस्य चाऽभिधानाच्छ्रौतीपूर्णोपमालंकारः । उपमाद्वयम् । तृतीयपादे परिभवक्षेत्रीकृतोऽपि प्रिय इत्यत्र तिरस्कारपात्रीभूतस्य प्रियत्वाप्रसिद्ध्या विरुद्धवदाभासमानेन विरोधालंकारः । तुरीयपादे वध्यस्रजि मृत्युलोकपदवीत्वसमारोपाद्रूपकालङ्कारश्चेति संसृष्टिः।वैदर्भी रीतिः । प्रसादोगुणः । शार्दूलविक्रीडितं वृत्तम् ॥ ४ ॥

विलोक्येति । सबाष्पमश्रुपूर्णनेत्रं यथा तथा विलोक्य निरीक्ष्य ब्रवीतीति शेषः । अमात्य मन्त्रिन् ! इदमेतत् ते तव त्वयेत्यर्थः । ( सम्बन्धसामान्ये षष्ठी ) किं व्यवसितम् अनुष्ठितम् शूलमारोपयितुमुद्यतं चण्डालद्वयमवरुध्य मत्प्रतिनिधिभूतो भवान् किमर्थं वध्यो भवतीत्यर्थः ।

त्वदीयेति । तवेदं त्वदीयं तच्च तत्सुचरितञ्च त्वदीयसुचरितं तस्यैकदेशस्त्वदीयसुचरितैकदेशस्तस्य त्वदीयसुचरितैकदेशस्य भवत्साधुचरित्रैकभागस्य न तु समग्रभागस्येत्यर्थः अनुकरणमनुकल्पोऽस्तीति क्रियाशेषः ।

कृतमुपालम्भेनेति । उपालम्भेन तिरस्कारेण कृतम् अलम् तिरस्कारो न

राक्षसः—

दुष्कालेऽपि कलावसज्जनरुचौ प्राणैः परं रक्षता,
नीतं येन यशस्विनातिलघुतामौशीनरीयं यशः।
बुद्धानामपि चेष्टितं सुचरितैः क्लिष्टं विशुद्धात्मना,
पूजार्होऽपि स यत्कृते तव गतो वध्यत्वमेषोऽस्मि सः ॥५॥

कार्यः यतः स्वस्यार्थः स्वार्थः स प्रधानं मुख्यं यस्मिन् स स्वार्थप्रधानः आत्मप्रयोजनसम्पादनप्रवण इत्यर्थः। जीवलोकः संसारः अस्तीति क्रियाशेषः। प्राणव्ययेनाऽपि सुहृत्त्राणाद्यशःप्राप्तिरूपः स्वार्थो यथा तवाऽभिमतस्तथा ममाऽपि साम्प्रतं प्राणव्ययेन भवतः सुहृत्तमस्य रक्षया यशः प्राप्तिरूपः स्वार्थोऽस्तीति भावः।

दुष्कालेऽपीति। असज्जनानां रुचिर्यस्मिन् सोऽसज्जनरुचिस्तस्मिन् असज्जनरुचौ दुर्जनाऽनुरागे दुर्जनप्रीत्युत्पादनशील इति यावत्। दुष्काले पापिन्यपि कलौ कलियुगे प्राणैरसुभिः परमन्यं रक्षता पालयता यशस्विना कीर्तिशालिना येन चन्दनदासेन उशीनरस्य देशस्यायमधिपतिः औशीनरः तस्येदमौशीनरीयं ( गहादिभ्यश्चेति छः प्रत्ययः ) शिविनृपतिगतं यशः कीर्तिः अतिलघुतामत्यन्तानादरास्पदतां नीतं प्रापितम्। तथा, विशुद्ध आत्मा यस्य स विशुद्धात्मा तेन विशुद्धात्मना पवित्रहृदयेन निर्दुष्टस्वभावेनेति यावत्। येन चन्दनदासेन सुचरितैः साधुचरित्रैः ( पुण्यकर्मभिः ) ( करणतृतीयान्तमिदम् ) बुद्धानां प्राणिमात्रेषु दयावतां सुगतानामपि।

सर्वज्ञः सुगतो बुद्धो धर्मराजस्तथागतः।

इत्यमरः। चेष्टितं व्यापारः क्लिष्टं तिरस्कृतम् , ( बुद्धानामतिदयाशालित्वं सुप्रसिद्धम् ) स चन्दनदासः पूजाऽर्होऽर्च्योऽपि यत्कृते यस्य मम ( राक्षसस्य ) रक्षणायेत्यर्थः। गृहजनरक्षणद्वारेति शेषः। त्वं शत्रुत्वं गतः प्राप्तः स एष राक्षसः अहमस्मि। लोकानां प्रायशः कलियुगे स्वार्थप्रधानत्वेऽपि शरणागतवात्सल्यात्सत्ययुगे शरणागतवत्सलाच्छिविनृपतेरप्यस्याऽधिकमहत्त्वम् बुद्धादप्यतिशयदयाशालित्वञ्चेति भावः। एकस्यैव यच्छब्दवाच्यस्य चन्दनदासरूपकर्तृकारकस्य नी-क्लिश-गम् धातुवाच्यक्रियासु सम्बन्धाद्दीपकालंकारः। शिवि-बुद्धोभयाऽपेक्षयाऽऽधिक्योक्त्या व्यतिरेकालङ्कारः। यः पूजार्होऽपि स तव वध्यं गतः इत्यतः पूजार्हस्य वध्यत्वेन परि-

( ५ ) स्वजीवार्पणद्वाराऽन्यरक्षणकर्तृचन्दनदासे शिविबुद्धिसादृश्यं राक्षसेन सूचितम्।

प्रथमः—अले वेणुवेत्तआ ! तुमं दाव सेट्ठिचन्दणदासं गेह्णिअ, इमस्स मसाणपादवस्स छाआए मुहुत्तअं चिट्ठ, जाव अहं अज्ज चाणक्कस्स णिवेदेमि, जधा गहीदो अमच्चलक्खसो त्ति । ( १ )

द्वितीयः—अले वज्जलोमआ ! एव्वं होदु । ( २ )

( इति सपुत्रदारेण चन्दनदासेन सह निष्क्रान्तः )

प्रथमः—( राक्षसेन सह परिक्रम्य । ) के के एत्थ दुआलिआणं ? णिवेदेध दाव णन्दकुलसेण्णसञ्चअचुण्णकुलिसस्स मोलिअकुलपदिट्ठाविदधम्मसञ्चअस्स अज्जचाणक्कस्स । ( ३ )

राक्षसः—( स्वागतम् । ) एतदपि नाम राक्षसेन श्रोतव्यम् !

चण्डालः—एसो क्खु अज्जणीदिसंजमिदबुद्धिपलिसले गहीदे अमच्चलक्खसे त्ति । ( ४ )

( १ ) अरे वेणुवेत्रक ! त्वं तावच्छ्रेष्ठिचन्दनदासं गृहीत्वाऽस्य श्मशानपादपस्य छायायां मुहूर्त्तं तिष्ठ, यावदार्य्यचाणक्यस्य निवेदयामि, यथा गृहीतोऽमात्यराक्षस इति ।

( २ ) अरे वज्रलोमक ! एवं भवतु ।

( ३ ) कः कोऽत्र दौवारिकाणाम् ? निवेदयत तावत् , नन्दकुलसैन्यसञ्चयचूर्णनकुलिशस्य मौर्य्यकुलप्रतिष्ठापितधर्म्मसञ्चयस्यार्य्यचाणक्यस्य ।

( ४ ) एष खल्वार्य्यनीतिसंयमितबुद्धिपरिसरो गृहीतोऽमात्यराक्षस इति

वर्तनात् ( परिवर्तनप्रतीत्या ) परिवृत्त्यलंकारश्चेत्येषां साङ्कर्यम् । वैदर्भी रीतिः । माधुर्य्यगुणः । शार्दूलविक्रीडितं वृत्तम् ॥ ९ ॥

कः कोऽत्रेति । अत्र द्वारे दौवारिकाणां प्रहरिणां मध्ये कः कोऽस्ति, तावत् प्रथमं निवेदयत विज्ञापयत यूयमिति शेषः, नन्दानां कुलं तस्य सैन्यसञ्चयस्तस्य चूर्णनं तस्य ( तस्मै ) कुलिशं तस्य नन्दकुलसैन्यसञ्चयचूर्णनकुलिशस्य नन्दवंशसैन्यवर्गविध्वंसवज्रस्य, मौर्यस्य कुलं मौर्यकुलं तत्र प्रतिष्ठापितो धर्मसञ्चयो येन स तथोक्तस्तस्य मौर्यकुलप्रतिष्ठापितधर्मसञ्चयस्य चन्द्रगुप्तवंशस्थिरीकृतसुकृतपुञ्जस्य आर्यचाणक्यस्य पूज्यकौटिल्यस्य, (सम्बन्धविवक्षायां षष्ठी) उक्तविशेषणविशिष्टाय चाणक्याय विज्ञापयत यूयमिदं मदुक्तमित्यर्थः ।

एष खल्विति । आर्यस्य नीतिरार्यनीतिस्तया संयमितो बुद्धिपरिसरो यस्य स

( ततः प्रविशति जवनिकावृतशरीरो मुखमात्रदृश्यः सहर्षश्चाणक्यः ) ।

चाणक्यः—भद्र ! कथय कथय !—

केनोत्तुङ्गशिखाकलापकपिलो बद्धः पटान्ते शिखी ?
पाशैः केन सदागतेरगतिता सद्यः समासादिता ? ।
केनानेकप दानवासितसटः सिंहोऽर्पितः पञ्जरे ?
भीमः केन चलैकनक्रमकरो दोर्भ्यां प्रतीर्णोऽर्णवः ॥ ६ ॥

---

आर्यनीतिसंयमितबुद्धिपरिसरः चाणक्यनयकुण्ठितमतिवैशद्यः एष अमात्यराक्षसो गृहीतो धृतः ।

तत इति । ततस्तदुत्तरं चण्डालनिवेदनोत्तरमित्यर्थः । जवनिकयाऽऽवृतं शरीरं यस्य स जवनिकावृतशरीरः तिरस्करिण्याच्छादितकायः मुखमात्रदृश्यः आननमात्राऽनाच्छादितः सहर्षः सानन्दश्चाणक्यो विष्णुगुप्तः प्रविशति रङ्गस्थानवर्त्ती भवतीत्यर्थः ।

केनेति । उत्तुङ्गाश्च ताः शिखा उत्तुङ्गशिखास्तासां कलाप उत्तुङ्गशिखाकलापस्तेन कपिलः उत्तुङ्गशिखाकलापकपिलः ऊर्ध्वोत्थितज्वालासमूहपिङ्गलः सुप्रज्वलित इत्यर्थः।शिखी वह्निः केन जनेन पटान्ते वस्त्रप्रान्ते बद्धः संयमितः धृत इति यावत् । ( पटान्त इत्यत्र सप्तम्याधारविवक्षणादिति बोध्यम् ) सदेत्यव्ययम् । सदा सततं गतिर्गमनं यस्य स तथोक्तस्तस्य सदागतेः सततगमनशीलस्य वायोरित्यर्थः ।

मातरिश्वा सदागतिरित्यमरः ।

अविद्यमाना गतिर्यस्य सोऽगतिः तस्य भावोऽगतिता गतिनिरोध इत्यर्थः।केन महापुरुषेण सद्यः अकाण्डे पाशैः रज्जुभिः समासादिता कृता । अनेकाभ्यां मुखशुण्डाभ्यां पिबन्तीत्यनेकपा हस्तिनस्तेषां दानं मदस्तेन वासिता सुरभीकृता सटा यस्य सोऽनेकपदानवासितसटः ।

दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः ।

इत्यमरः ।

सटाजटा केसरयोरिति चामरः ।

द्विरदमदजलभरभीकृतजटः सिंहो हरिः केन पराक्रमशालिना पुरुषेण पञ्जरे

---

( ६ ) नन्दकुलविनाशपूर्वकमौर्याधिपत्यं स्थिरीकृत्य सर्वथा दुष्करस्यापि राक्षसायत्तीकरणस्य सम्पादनाच्चाणक्येनात्मश्लाघापराकाष्ठा दर्शिता ।

चण्डालः—णं णीदिणिउणबुद्धिणा अज्जेण ज्जेव । ( १ )
चाणक्यः—भद्र ! मा मैवम् । नन्दकुलद्वेषिणा दैवेनेति ब्रूहि ।
राक्षसः—( विलोक्य स्वागतम् । ) अये !! अयं स दुरात्मा, अथवा

( १ ) ननु नीतिनिपुणबुद्धिनार्य्येणैव ।

पश्चाद्विबन्धनागारे अर्पितः स्थापितो बद्ध इति यावत् । चलाश्चञ्चला एके महान्तो नक्रा मकराश्च यस्मिन् स चलैकनक्रमकरः बहुलनक्रमकरजलजन्तुः । अत एव भीमो भीषणोऽर्णवः समुद्रः केन पुरुषेण दोर्भ्यां बाहुभ्यां प्रतीर्णः पारं गतः । वस्त्राञ्चलेन वह्निग्रहणमिव दाम्ना वायोर्बन्धनमिव पञ्जरे सिंहस्थापनमिव बाहुभ्यामर्णवतरणमिव दुष्करमपि राक्षससंयमनं मयैव कृतमिति भावः । अप्रस्तुतवह्निग्रहणादिवर्णनात्प्रस्तुतराक्षसग्रहणावगमादप्रस्तुतप्रशंसाऽलंकारः । पटान्तेन वह्नेर्दाम्ना वायोः पञ्जरेण सिंहस्यार्णवेन बाहुतरणस्य चाऽयोगेऽपि तत्तद्योगोक्त्याऽसम्बन्धे सम्बन्धरूपाऽतिशयोक्त्यनुप्राणितः । पटान्तेन वह्निग्रहणवत् दाम्ना वायुनिरोधवत् पञ्जरे सिंहस्थापनवत् बाहुभ्यामर्णवतरणवत् राक्षसग्रहणमसम्भवीति बिम्बप्रतिबिम्बभाव( सादृश्य ) प्रतीत्या मालानिदर्शनाऽलंकारश्चेत्येषामङ्गाङ्गिभावेन साङ्कर्यम् । मयैव पटान्ते शिखी बद्धो मयैव वायोर्गतिर्निरुद्धा मयैव पञ्जरे सिंहः स्थापितो मयैव बाहुभ्यामर्णवः प्रतीर्ण इत्यस्य फलितत्वादेकस्यैव मयेति कर्तृकारकस्य बन्धननिरोधनस्थापन—तरणक्रियासु सम्बन्धादार्थिकदीपकालंकारोऽपि । केनेति पदस्य चतुर्षु पादेषु सत्वादनवीकृतत्वं दोषः । अवश्यस्य राक्षसस्य वशीकरणादात्मनोऽभिमानः सूचितः । ( अद्भुतार्थप्राप्तिरूपगूहनं नामाङ्गमिदम् ) शार्दूलविक्रीडितं वृत्तम् ॥ ६ ॥

नन्विति । ननु भोः ! नीतौ राजनीतौ निपुणा कुशला बुद्धिर्मतिर्यस्य स नीतिनिपुणबुद्धिस्तेन नीतिनिपुणबुद्धिना राजनीतिकुशलमतिना आर्येण पूज्येन भवतैव केनोत्तुङ्गशिखेत्याद्युक्तकार्यं कृतमिति शेषः ।

मा मैवमिति । एवं पूर्वोक्तवाक्यं मा नैव वक्तव्यं त्वयेति शेषः । किन्तु नन्दानां कुलं नन्दकुलं तद्विद्वेष्टीति नन्दकुलविद्वेषी तेन नन्दकुलविद्वेषिणा नन्दवंशविनाशकेन दैवेन भाग्येन केनोत्तुङ्गशिखेत्याद्युक्तकार्यं कृतमितीत्येव ब्रूहि कथय । दैवेन नन्दवंशे क्षयं नीते निराश्रयत्वादेषोऽयं राक्षसो वश्यतां गत इति भावः ।

अयं स महात्मा कौटिल्यः । यतः,—

आकरः सर्वशास्त्राणां, रत्नानामिव सागरः ।
गुणैर्न परितुष्यामो, यस्य मत्सरिणो वयम् ॥ ७ ॥

चाणक्यः—( विलोक्य सहर्षम् । ) अये !! अयममात्यराक्षसः येन महात्मना—

गुरुभिः कल्पनाक्लेशैर्दीर्घजागरहेतुभिः ।
चिरमायासिता सेना वृषलस्य, मतिश्च मे ॥ ८ ॥

---

आकर इति । अयं चाणक्य इत्याक्षेप्यम् सागरोऽर्णवो रत्नानां पद्मरागादीनां मणीनामिव सर्वशास्त्राणां निखिलशास्त्रज्ञानानामित्यर्थः। आकरः उत्पत्तिस्थानम् अस्तीति शेषः । यस्य चाणक्यस्य गुणैश्चातुर्यादिभिः मत्सरिणोऽन्यशुभद्वेषिणो वयं न परितुष्यामो न प्रीतिमाप्नुमः । मत्सरिणां गुणवत्स्वपि दोषोद्घाटनस्वभावप्रसिद्धिरिति भावः । रत्नानामिवेत्यत्र सादृश्यार्थकेवशब्दसत्त्वादुपमा । वस्तुतश्चाणक्ये सर्वशास्त्राकरभिन्नत्वेऽप्यभिन्नत्वारोपाद्रूपकञ्चेत्यलङ्कारद्वयसंसृष्टिः । अनुष्टुप् वृत्तम् ॥ ७ ॥

गुरुभिरिति । ( येन महात्मनेति पदद्वयं गद्यस्थमादायाऽन्वयः कार्यः ) येन महात्मना महत्त्वशालिना भवतेति शेषः।दीर्घश्चासौ जागरो दीर्घजागरस्तस्य हेतवस्तैर्दीर्घजागरहेतुभिः, यद्वा दीर्घा जागरा हेतवो येषां ते दीर्घजागरहेतवस्तैर्दीर्घजागरहेतुभिः चिरनिद्रोच्छेदकारणैः गुरुभिर्महद्भिः कल्पनाक्लेशैः कर्त्तव्याऽकर्त्तव्योपायरचनोत्पन्नदुःखैः वृषलस्य मौर्यस्य सेना चमूः मे मम मतिर्बुद्धिश्च चिरं चिरकालमभिव्याप्य आयासिता क्लेशिता अस्तीति शेषः । यद्बुद्धिमहिम्ना मम वृषलाऽनीकस्य च चिरमायासोऽभूदिति भावः । वृषलसेनाऽस्मन्मत्योभयोः प्रस्तुतयोरायासरूपैकक्रियान्वितत्वेन तुल्ययोगिताऽलङ्कारः । तदुक्तं दर्पणे—

पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत् ।
एकधर्माऽभिसम्बन्धः स्यात्तदा तुल्ययोगिता ॥

इति । प्रस्तुतानां प्रकृतानाम् ( प्राकरणिकानाम् ) अन्येषामप्रस्ततानां वा यदा एकधर्मेण गुणक्रियाऽन्यतररूपेणाऽभिसम्बन्धो योगः स्यात्तदा तुल्ययोगिताऽलङ्कारो भवतीति कारिकार्थः । अनुष्टुप् वृत्तम् । ( इदं दुःखप्रशमनं समयः ) ॥ ८ ॥

( जवनिकामपनीयोपसृत्य च । ) भो भो अमात्यराक्षस ! विष्णुगुप्तोऽभिवादयते ।

राक्षसः—( स्वगतम् । ) अमात्य इति लज्जाकरमिदानीं विशेषणपदम् । ( प्रकाशम् । ) भो भो विष्णुगुप्त ! न मां श्वपाकस्पर्शदूषितं स्प्रष्टुमर्हसि ।

चाणक्यः—अमात्यराक्षस ! नायं श्वपाकः । अयं खलु दृष्टपूर्व एव भवता सिद्धार्थकनामा राजपुरुषः योऽयमसौ द्वितीयः, सोऽपि सुसिद्धार्थकनामा राजपुरुष एव । ताभ्यामेव सह सौहार्दमुत्पाद्य, शकटदासोऽपि तपस्वी तं तादृशमजानन्नेव कपटलेखं मयैव लेखितः ।

राक्षसः—(आत्मगतम् ।) दिष्ट्या, शकटदासं प्रत्यपनीतो विकल्पः ।

चाणक्यः—किं बहुना, सङ्क्षेपतः कथयामि ।

भृत्या भद्रभटादयः, स च तथा लेखः, स सिद्धार्थकः,
तच्चालङ्करणत्रयं, स भवतो मित्रं भदन्तः किल ।

---

जवनिकामिति । जवनिकां तिरस्करिणीमपनीयाऽपसार्य उपसृत्य समीपमेत्य च ब्रवीतीति शेषः । विष्णुगुप्तश्चाणक्योऽभिवादयते स्तौति भवन्तमिति शेषः । स्वनामग्रहणपुरस्सरमेवाऽभिवादनं स्मृत्युक्तमिति विष्णुगुप्तेति स्वनामोक्तिरित्यवसेयम् ।

आत्मगतमिति । आत्मगतमनतिस्पष्टं यथा तथा ब्रवीतीति शेषः । दिष्ट्या भाग्येनेत्यर्थः ( दिष्ट्येति तृतीयान्तप्रतिरूपकमव्ययं हर्षसूचकम् ) शकटदासं प्रत्यपनीतो विकल्पः शकटदासलिखितं पत्रं न वेत्येवंरूपः सन्देहोऽपहृत इत्यर्थः, शकटदासोऽपीत्याद्युक्तचाणक्योक्तेरिति शेषः ।

भृत्या इति । भद्रभट आदिर्येषां ते भद्रभटादयः भद्रभटप्रभृतयः भृत्या अनुचरा मदीया इति शेषः । ( ये भद्रभटप्रभृतयोऽनुचरास्ते साम्प्रतं मौर्ये विरक्ताः सन्तो मलयकेतुमाश्रित्य गजाश्वाध्यक्षादयः सन्तीत्यर्थः ) स च तथालेखः कृत्रिमपत्रम् ( कपटेन शकटदासद्वारा मया लेखित इत्यर्थः ) स च सिद्धार्थकः ( हन्यमानमपवाह्य शकटदासं भवन्तमाश्रित्य इत्यर्थः ) तच्चालङ्करणत्रयं ( पर्वतेश्वरधृतपूर्वं वणिजो भवता क्रीतमित्यर्थः ) य इति प्रागध्याहर्तव्यं यो भवतोऽलीकं मित्रं भदन्तः स च जीवसिद्धिनामधेयो बौद्धसन्न्यासीत्यर्थः ) ( अलीकार्थेऽत्र किलशब्दः ) जीर्णोद्यानगतः पुरातनोपवनप्राप्तः स च आर्त्तपुरुषः ( बन्धुविरहमसह्यमवगत्या-

जीर्णोद्यानगतः स चार्तपुरुषः, क्लेशः स च श्रेष्ठिनः,
सर्वम्मे वृषलस्य वीर ! भवता संयोगमिच्छोर्नयः ॥ ९ ॥

( इत्यर्द्धोक्ते लज्जां नाटयति । )

तदेष वृषलस्त्वां द्रष्टुमागच्छति । पश्यैनम् ।

राक्षसः—( स्वगतम् । ) का गतिः ? ( प्रकाशम् । ) एष पश्यामि ।

( ततः प्रविशति राजा विभवतश्च परिवारः ) ।

राजा—( स्वगतम् ) विनैव युद्धादार्य्येण पराजितं दुर्जयं रिपुकुलमिति, लज्जित इवास्मि । मम हि—

फलयोगमवाप्य सायकाना-
मनियोगेन विलक्षतां गतानाम् ।

---

त्मविनाशोद्यत इत्यर्थः ) स च श्रेष्ठिनो वणिजश्चन्दनदासस्य क्लेशो दुःखम् हे वीर ! पराक्रमशालिन् एतत्सर्वं भवता त्वया सह वृषलस्य मौर्यस्य संयोगं सन्धिमिच्छोरभिलाषुकस्य मे मम नयो नीतिरस्तीति शेषः । भवन्तं चन्द्रगुप्तामात्यपदारूढं कर्तुमेवैतत्सर्वं मया कृतमित्यर्थः ।

बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथातथम् ।
एकार्थ्यमुपनीयन्ते यत्र निर्वहणं हि तत् ॥

इति दर्पणोक्तलक्षणात् ( निर्वहणनामाऽङ्गमिदम् ) । तुर्यपादगतवाक्यार्थस्याऽस्मन्नीतेः पादत्रयगतवाक्यार्थेषु हेतुविषयोक्त्या वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । पादत्रयगतविशेषार्थानां तुर्यपादगतसामान्यार्थेन समर्थनादर्थान्तरन्यासाऽलङ्कारो वा । शार्दूलविक्रीडितं वृत्तम् ॥ ९ ॥

तत इति । ततस्तदुत्तरं विभवेनेति विभवतः ( तृतीयान्तात्तसिप्रत्ययः ) ऐश्वर्याऽनुसारेणेत्यर्थः । परिवारोऽनुचरश्च प्रविशति रङ्गस्थानमिति शेषः ।

स्वगतमिति । अनतिस्पष्टं वचो ब्रवीति मौर्य इत्यर्थः । आर्येण पूज्येन चाणक्येनेति शेषः । युद्धाद्विनैव संग्राममन्तरैव दुर्जयं दुःखेन जेतुं योग्यं रिपुकुलं शत्रुसैन्यं पराजितं पराभूतं वशीकृतमिति यावत् । इत्यतो हेतोः लज्जितस्त्रपायुक्त इवाऽस्मि । ( लज्जा जाताऽस्येति लज्जितः 'तारकादित्वादितच्, युद्धं विनैव शत्रुजयो लज्जाहेतुः ।

फलयोगमिति । फलयोगं लौहमयाग्रकीलसम्बन्धमवाप्य प्राप्यापि अनि-

न शुचेव भवत्यधोमुखानां,
निजतूणीशयनव्रतं प्रतुष्ट्यै ॥ १० ॥

अथवा—

विगुणीकृतकार्मुकोऽपि जेतुं,
भुवि जेतव्यमसौ समर्थ एव ।

योगेनाऽप्रेरणया विलक्षतामशरव्यतां गतानां प्राप्तानां शुचेव विलक्षताप्राप्तिजन्यदुःखेनेव अधोमुखानामानताग्रभागानां सायकानां मम बाणानां निजतूणीशयनव्रतं स्वेषुधिनिश्चलावस्थितिनियमो प्रतुष्ट्यै मम प्रीत्यै न भवतीति शेषः, ( अत्र गद्यस्थममपदसम्बन्धो बोध्यः । तस्याप्युक्तविशेषणविशिष्टत्वमवधेयम् । तत्संघटनप्रकारश्चेत्थम् ) फलयोगं कार्य्यसिद्धिमवाप्य प्राप्यापि अनियोगेन नियोगाऽयोग्यत्वेन विलक्षतां गतानां लज्जावत्तां प्राप्तानां शुचेव अनियोगजनितदुःखेनेव अधोमुखानाम् नतास्यानां मम अस्माकमित्यर्थः; निजतूणीशयनव्रतं स्वगृहे निर्व्यापारतयाऽवस्थानं प्रतुष्ट्यै आत्मनः प्रीत्यै न भवतीति शेषः । शुचेवेत्यत्रोत्प्रेक्षार्थकेवशब्दसत्त्वात् वाच्योत्प्रेक्षालङ्कारः । विशेषणानां श्लिष्टतया श्लेषानुप्राणितगम्योपमालङ्कारश्चेत्यनयोरङ्गाङ्गिभावेन साङ्कर्यम् । मालभारिणीवृत्तम् ।

विषमे ससजा यदा गुरू चेत् सभरा येन तु मालभारिणीयम् ।

इति तल्लक्षणम् ॥ १० ॥

विगुणीकृतेति । स्वपतोऽपि शयानस्याऽपि त्यक्तराज्यकार्यस्याऽपीत्यर्थः । यस्य नृपतेः ममेव तन्त्रे राष्ट्रचिन्तने ।

तन्त्रः स्वराष्ट्रचिन्तायामावापः परिचिन्तने ।

इति वैज० को० । कार्ये जागरूकाः कार्यजागरूकाः कर्त्तव्यकर्मसावधानाः सन्तो गुरवो मन्त्रिप्रधानाः जाग्रति सततं प्रयत्नं कुर्वन्ति प्रतिविधानोद्यताः सन्तीति यावत् । असावेष नृपतिः विगुणीकृतं कार्मुकं येन यस्य वा स विगुणीकृतकार्मुकः मौर्वीहीनशरासनोऽपि सन् भुवि पृथिव्यां जेतव्यं जेतुं योग्यं शत्रुमित्यर्थः । जेतुं पराभवितुं समर्थ एव शक्त एव अर्हमिवेति शेषः । सचिवन्यस्तराज्यभारस्त्यक्तधनुष्कोऽहमिवाऽन्योऽपि तादृशो नृपोऽरिं विजेतुं भुवि समर्थ एवेति भावः । उत्तरार्द्धे पूर्वार्द्धं हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । ममेवेत्यत्रोपमा । रणव्यापारात्मकजयकारणेऽसत्यपि जयसिद्धेरुक्त्योक्तोभयालङ्कारोत्थापितो विभावनाऽलङ्कार-

स्वपतोऽपि ममेव यस्य तन्त्रे,
गुरवो जाग्रति कार्य्यजागरूकाः ॥ ११ ॥

( चाणक्यमुपसृत्य । ) आर्य ! चन्द्रगुप्तः प्रणमति ।

चाणक्यः—वृषल ! सम्पन्नास्ते सर्वाशिषः । तदभिवादयस्व तत्र-भवन्तममात्यराक्षसम्; पैतृकस्तवायममात्यमुख्यः ।

राक्षसः—( स्वगतम् । ) योजितोऽनेन सम्बन्धः ।

राजा—( राक्षसमुपसृत्य । ) आर्य्य ! चन्द्रगुप्तोऽहमभिवादये ।

राक्षसः—( विलोक्य स्वगतम् । ) अये ! अयं चन्द्रगुप्तः !! य एषः—

बाल एव हि लोकेन सम्भावितमहोदयः ।
क्रमेणारूढवान् राज्यं, यूथैश्वर्य्यमिव द्विपः ॥ १२ ॥

( प्रकाशम् । ) राजन् ! विजयस्व ।

राजा—आर्य्य !—

जगतः किं न विजितं मयेति प्रविचिन्त्यताम् ।
गुरौ षाड्गुण्यचिन्तायामार्य्ये चार्य्ये च जाग्रति ॥ १३ ॥

---

रश्चेत्येषामङ्गाङ्गिभावेन सङ्करः । वृत्तं पूर्वोक्तमेव । औपच्छन्दसिकमित्यस्य नामान्तरमिति ध्येयम् । ( इयं वाञ्छितार्थप्राप्तिरानन्दः ) ॥ ११ ॥

बाल एवेति । ( य एष इति गद्यस्थपदमन्वयि ) य एष चन्द्रगुप्तो बाल एव शिशुरेव लोकेन जनेन सम्भावितमहोदयः अनुमितविशिष्टाभ्युदयः य एष चन्द्रगुप्तः यूथैश्वर्य्यं यूथाऽऽधिपत्यं द्विपो हस्तीव क्रमेण राज्यमारूढवान् प्राप्तवान् । करिशावको यथा कालक्रमेण यूथपतित्वं प्राप्नोति तथैव चन्द्रगुप्तोऽपि राज्यमाप्तवानित्यर्थः । द्विप-मौर्ययोरुपमानोपमेययोरिवशब्दस्योपमानवाचकस्य सम्भावितमहोदयत्वात्मकसाधर्म्यस्य च सत्त्वाच्छ्रौतीपूर्णोपमालङ्कारः । अनुष्टुप् वृत्तम् ॥ १२ ॥

जगत इति । आर्ये पूज्ये गुरौ शिक्षके चाणक्ये आर्ये पूज्ये त्वयि च षड् गुणा एव षाड्गुण्यं ( चतुर्वर्णादित्वात्स्वार्थे ष्यञ् ) तस्य चिन्ता भावना तस्यां षाड्गुण्यचिन्तायां सन्धिविग्रहादिव्यापारविधानाऽविधानभावनायां जाग्रति उद्यते सति मयाऽऽत्मना चन्द्रगुप्तेनेत्यर्थः । जगतः ( शेषे षष्ठी ) संसारस्य किं न विजितम् अपि तु सर्वमेव विजितमित्यर्थः। इति प्रविचिन्त्यताम् बुध्यताम् । सन्धिविग्रहादिषड्गुणकर्तव्याकर्त्तव्यविचारशीलस्यार्य्यद्वयस्य सत्त्वे जगदेव मे वशीभूतं जातमि-

राक्षसः—( स्वगतम् । ) स्पृशति मां कौटिल्यशिष्यो भृत्यभावेन अथवा विनय एवैषः । चन्द्रगुप्तस्य मत्सरस्तु मे विपरीतं कलयति । सर्वथा स्थाने यशस्वी चाणक्यः । कुतः ?

द्रव्यं जिगीषुमधिगम्य जडात्मनोऽपि,
नेतुर्यशस्विनि पदे नियता प्रतिष्ठा ।

---

त्यवसेयमित्यर्थः । आर्यद्वयस्य सधर्मत्वोक्त्या तुल्ययोगिताऽलङ्कारः । एकस्याऽऽर्थस्य कार्यसाधकत्वे सत्यप्यन्यार्थस्याऽपि तत्करत्वात्समुच्चयालङ्कारः । आर्यद्वयकर्तृकषाड्गुण्यचिन्ताया जगद्विजयहेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गं मया जगतः किं न विजितमर्थात्सर्वमेव विजितमित्यन्यथावगत्याऽर्थापत्तिरलङ्कारश्चेत्येषामेकत्र नैरपेक्ष्येण स्थित्या संसृष्टिरलङ्कारः । अनुष्टुप् वृत्तम् ॥ १३ ॥

स्वगतमिति । स्वगतं मनोगतं यथा तथा ब्रवीति । कौटिल्यशिष्यश्चाणक्यशिष्यो मौर्य इत्यर्थः । मां राक्षसं भृत्यभावेन सेवकत्वेन स्पृशति मां भृत्यमवगच्छतीत्यर्थः । अथवा किम्वा चन्द्रगुप्तस्य मौर्यस्य एष विनय एव शिष्टतैव तु किन्तु मत्सरोऽन्यशुभद्वेषो मे मम विपरीतमन्यथा कलयति अवगमयति । चाणक्यः कौटिल्यः सर्वभावेन स्थाने युक्त एव यशस्वी कीर्त्तिमान् ।

द्रव्यमिति । द्रव्यं योग्यं जिगीषुं जयोद्यमवन्तं नृपमिति शेषः । अभिगम्य प्राप्य जडो मन्द आत्मा धीर्यस्य स तथोक्तस्तस्य जडात्मनोऽपि मन्दधियोऽपि नेतुर्नायकस्य मन्त्रिणो यशस्विनि कीर्त्तिप्रापके पदे स्थाने प्रतिष्ठा कीर्त्तिप्राप्तिरित्यर्थः । नियतं निश्चितैव भवतीति क्रियाशेषः । तु किन्तु अद्रव्यम् अनुद्योगिनं नृपमिति शेषः । एत्य प्राप्य विविक्तो विशुद्धो नयो नीतिर्यस्य स विविक्तनयो विशुद्धनीतिशाल्यपि मन्त्री सचिवः शीर्ण उच्छिन्न आश्रयोऽवलम्बनं यस्य स शीर्णाश्रय उच्छिन्नावलम्बनः सन् कूलजवृक्षवृत्त्या तटस्थतरुनियमेन तीरजतरुरिव पतति कार्यसम्पादको न भवतीत्यर्थः । उच्छिन्नमूलस्तीरतरुर्यथा पतति स्थित्यात्मककार्यसाधको न भवति तथाऽनुद्योगिनृपाश्रितो नीतिशाली सचिवोऽपि कार्यसाधको नेत्यर्थः । उद्योगशालिनृपाश्रितमन्त्रिणो जयोऽनुद्योगशालिनृपाश्रितमन्त्रिणस्तु पराजय इति सामान्यान्मौर्याश्रितकौटिल्यस्य जयो मलयकेत्वाश्रितराक्षसस्य पराजय इति विशेषार्थप्रतीत्या प्रथमोऽप्रस्तुतप्रशंसाभेदः । एतन्मूलकसामान्यार्थेन कौटिल्यजयात्मकविशेषार्थसमर्थनादप्रस्तुतप्रशंसामूलोऽर्थान्तरन्यासः । जडात्मनो-

अद्रव्यमेत्य तु विविक्तनयोऽपि मन्त्री,
शीर्णाशयः पतति कूलजवृक्षवृत्त्या ॥ १४ ॥

चाणक्यः—अमात्यराक्षस ! अपीष्यते चन्दनदासस्य जीवितम् ?

राक्षसः—भो विष्णुगुप्त ! कुतः सन्देहः ?

चाणक्यः—अमात्यराक्षस ! अगृहीतशस्त्रेण भवताऽनुगृह्यते वृषल इत्यतः सन्देहः। तद्यदि सत्यमेव चन्दनदासस्य जीवितमिष्यते, ततो गृह्यतामिदं शस्त्रम्।

राक्षसः—भो विष्णुगुप्त ! मा मैवम्। अयोग्या वयमेतस्य ग्रहणे, विशेषतस्त्वया गृहीतस्य शस्त्रस्य।

चाणक्यः—अमात्यराक्षस ! योग्योऽहमयोग्यो भवान् !! इति कथमेतत् ? पश्य,—

अश्वैः सार्द्धमजस्रदत्तकविकाक्षामैरशून्यासमान्,
स्नानाहारविहारपानशयनस्वेच्छासुखैर्वर्जितान्।

ऽपि विविक्तनयोऽपीत्युभयत्र किमु तीक्ष्णबुद्धेः, किमु अविविक्तनय इत्येतद्रूपाऽन्यार्थाऽवगमादर्थापत्तिः। कूलजवृक्षवृत्त्येत्यतः कूलजवृक्ष इवेति बिम्बप्रतिबिम्बभावस्य प्रतीयमानत्वान्नि दर्शनाऽलङ्कारश्चेत्येषां साङ्कर्यम्। वसन्ततिलकं वृत्तम् ॥ १४ ॥

अमात्येति। अमात्य राक्षस! अगृहीतशस्त्रेणाऽनादत्ताऽऽयुधेन भवता त्वया वृषलो मौर्योऽनुगृह्यतेऽनुकम्प्यते इत्यतोऽस्माद्धेतोः सन्देहोऽनिर्णयः चन्दनदासजीवने इति शेषः। मन्त्रिग्राह्यायुधाऽग्रहणात्सन्देह इत्यर्थः। ( एष राक्षसस्य मौर्यमन्त्रित्वसाधको यत्न इत्यवधेयम् )।

अश्वैरिति। भो अमात्यराक्षस! हताश्च तेऽरयो हतारयस्तेषां दर्पं छिनत्तीति हतारिदर्पच्छिदस्तस्य हताऽरिदर्पच्छिदोऽभिमानवद्रिपुगर्वविनाशकस्य अतिपौरुषस्यातिशयपराक्रमशालिनो भवतस्तव माहात्म्यात् प्रभावात् अजस्रं दत्ता कविका येषां ते तथोक्तास्तैः अजस्रदत्तकविकैः अनवरतयोजितवल्गैः अत एव क्षामैः कृशैः अशून्यासनैः अनपनीतपर्याणैः अश्वैर्वाजिभिः, सार्द्धं सह,स्नानं चाहारश्च विहारश्च पानं च शयनं च तानि स्नानाहारविहारपानशयनानि तानि च तानि स्वेच्छासुखानि तैः स्नानाहारविहारपानशयनस्वेच्छासुखैः निमज्जनभोजनभ्रमणतृषावारणविश्रामात्मकयथेच्छाव्यापारवर्जितान् रहितान्, परिकल्पनाया व्यतिकरः परिक-

माहात्म्यादतिपौरुषस्य भवतो दृप्तारिदर्पच्छिदः,
पश्यैतान् परिकल्पनाव्यतिकरप्रोच्छूनवंशान् गजान् ॥१५॥

अथवा किमनेन? न खलु भवतः शस्त्रग्रहणमन्तरेण चन्दनदासस्य जीवितमस्ति।

राक्षसः—स्वगतम्।

नन्दस्नेहकणाः स्पृशन्ति हृदये, भृत्योऽस्मि तद्विद्विषां,
ये सिक्ताः स्वयमेव पाणिपयसा च्छेद्यास्त एव द्रुमाः? ।

---

ल्पनाव्यतिकरस्तेन प्रोच्छूना वंशा येषां ते तथोक्तास्तान् परिकल्पनाव्यतिकरप्रोच्छूनवंशान् युद्धसज्जविशेषसंयोगस्फीतमहत्पृष्ठास्थिभागान् एतानमून् हस्तिनः पश्य निरीक्षस्व। भवत्पौरुषमहिम्नाऽस्मदीया गजाश्वादयो मुहूर्त्तमपि विश्रान्तिं न लभन्ते तस्य भवतो नायुधग्रहणायोग्यत्वमिति भावः (एतेन राक्षसपौरुषातिशयस्याऽभिव्यक्तिः) गजाश्वयोः प्रस्तुतयोरेकक्रियाऽभिसम्बन्धेन तुल्ययोगिताऽलङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥ १६ ॥

साचिव्यमवश्यमङ्गीकार्यं भवतेति पक्षान्तरेणाऽभिदधाति—

अथवेति। किं बहुना क्लेशप्रदाऽधिकभाषणेन न प्रयोजनमित्यर्थः। भवतस्तव शस्त्रग्रहणमन्तरेण आयुधग्रहणम्विना चन्दनदासस्य भवत्सुहृदो जीवितं जीवनं मुक्तिरिति यावत् नास्ति न वर्तते।

नन्दस्नेहकणा इति। नन्देषु स्नेहो नन्दस्नेहस्तस्य कणा नन्दस्नेहकणाः नन्दानुरागलेशाः हृदये चित्ते ममेति शेषः। स्पृशन्ति सम्बध्नन्ति, अहमिति कर्तृपदमध्याहार्यम् तेषां विद्विषस्तद्विद्विषस्तेषां तद्विद्विषां नन्दशत्रूणां मौर्यप्रभृतीनामित्यर्थः। भृत्योऽस्मि साचिव्यग्रहणोद्युक्तया सेवकत्वं प्राप्तोऽस्मि ये द्रुमास्तरवो मलयकेतुप्रभृतिरूपा इत्यर्थः। स्वयमेव आत्मनैव मया राक्षसेनेत्यर्थः। पाणिपयसा करात्मकसलिलेन सिक्ताः परिपालिताः परिवर्द्धिता इति यावत्। ते एव द्रुमा मलयकेतुवृक्षाः कथं छेद्या विनाश्याः। मयाऽऽत्मना मित्रशरीररक्षणकृते चन्दनदासरक्षणाय शस्त्रं कौटिल्यप्रदत्तमायुधं व्यापारणीयं ग्राह्यम्। विधेर्भाग्यस्य कार्याणां कृत्यानां गतयः प्रकारा आलोचनागोचरं विवेकविषयं न यान्ति न गच्छन्ति। नन्दस्नेहस्मरणशीलस्याऽपि मे सुहृत्त्राणार्थं मौर्यसाचिव्यग्रहणात्तद्विद्वेषप्रसक्तौ दैवप्राबल्यस्य हेतुत्वान्न कोऽपि मे दोष इति भावः। आद्यचरणे नन्दानुरागवति तद्रिपुभृत्यत्व-

शस्त्रं मित्रशरीररक्षणकृते व्यापारणीयं मया,
कार्य्याणां गतयो विधेरपि न यान्त्यालोचनागोचरम् ॥ १६ ॥

( प्रकाशम् । ) भो विष्णुगुप्त ! उपानय खड्गम् । नमः सर्वकार्य्यप्रतिपत्तिहेतवे सुहृत्स्नेहाय । का गतिः ? एष सज्जोऽस्मि ।

चाणक्यः—( सहर्षं शस्त्रमर्पयित्वा ) वृषल ! वृषल !! अमात्यराक्षसेनेदानीं गृहीतशस्त्रेणानुगृहीतः, दिष्ट्या वर्द्धते भवान् ।

राजा—आर्य्यप्रसाद एष चन्द्रगुप्तेनाऽनुभूयते ।

( प्रविश्य पुरुषः । ) जेदु जेदु अज्जो । अज्ज ! वेसो क्खु भद्दभटभाउराअणप्पमुहेहिं संजमिअकलचलणो मलअकेदू प्पड़िहारभूमिए

---

सत्त्वादेकत्र नन्दानुरागवत्त्वतद्रिपुभृत्यत्वरूपयोर्विरूपयोः ( विरुद्धयोः ) संघटनया विषमालङ्कारः ।

विरूपयोः संघटना या च तद्विषमं मतम् ।

इति दर्पणोक्तेः ) । द्वितीयचरणे मलयकेतुप्रभृतौ द्रुमत्वारोपणस्य पाणौ पयस्त्वारोपणे हेतुत्वात्परम्परितरूपकालङ्कारः । अप्रस्तुतद्रुमच्छेदनोक्त्या प्रस्तुतात्मपक्षविरूपक्रियाप्रतीत्याऽप्रस्तुतप्रशंसाऽलङ्कारश्च । तृतीयचरणे राक्षसकर्तृकशस्त्रग्रहणे मित्रशरीररक्षणस्य निमित्तत्वात्पदार्थहेतुकं काव्यलिङ्गम् । चतुर्थचरणे एतत्प्रतिपाद्यसामान्यार्थेन पादत्रयगतविशेषार्थस्य समर्थनादर्थान्तरन्यासालङ्कारः । तुर्यपादगतालङ्कारेण पूर्वोक्तालङ्काराणां साङ्कर्यम् । शार्दूलविक्रीडितं वृत्तम् ॥ १६ ॥

**प्रकाशमिति** । सुस्पष्टं यथा तथा ब्रवीति । सर्वाणि च तानि कार्याणि सर्वकार्याणि तेषां प्रतिपत्तिः स्वीकारस्तस्या हेतुः कारणं तस्मै सर्वकार्यप्रतिपत्तिहेतवे सकलकृत्यस्वीकारकारणाय सुहृदां स्नेहः सुहृत्स्नेहस्तस्मै सुहृत्स्नेहाय मित्रानुरागाय नमः मित्रस्नेहवशात्सर्वं भवदुक्तकार्यं कर्त्तुमुद्यतोऽस्मीति भावः । एषोऽहं सज्जोऽस्मि शस्त्रमादातुमिति शेषः । ( प्राप्तकार्याऽनुमोदनमाभाषणमङ्गमिदम् ) ।

**आर्य्यप्रसाद इति** । चन्द्रगुप्तेन मया एषोऽयम् आर्यप्रसादः आर्यस्य पूज्यस्य भवतः प्रसादोऽनुग्रहोऽनुभूयते प्राप्यते । भवदनुग्रहेणैव लब्धमेतत्सर्वम्मयेति भावः । ( लब्धस्थिरीकरणं कृतिर्नामाऽङ्गमेतत् ) ।

**जयतीति** । आर्यो जयति सर्वोत्कर्षेण वर्त्तताम् ( वीप्सायां द्विरुक्तिः ) भद्र-

अवत्थापिदो, ता एव्वं सुणिअ एत्थ अज्जो प्पमाणं त्ति । (१)

चाणक्यः—श्रुतम् । भद्र ! निवेद्यताममात्यराक्षसाय, अयमिदानीं राजकार्य्यं करिष्यति ।

राक्षसः—( स्वगतम् । ) कथं दासीकृत्येदानीं विज्ञापनाय मां मुखरीकरोति कौटिल्यः ! ! का गतिः ? ( प्रकाशम् । ) राजन् चन्द्रगुप्त ! विदितमेव यथा वयं मलयकेतौ किञ्चित् कालान्तरमुषिताः, तत् परिरक्ष्यन्तामस्य प्राणाः ।

राजा—( चाणक्यमुखमवलोकयति ) ।

चाणक्यः—वृषल ! प्रतिमानयितव्योऽयममात्यराक्षस्य प्रथमः प्रणयः । ( पुरुषमवलोक्य । ) भद्र ! अस्मद्वचनादुच्यन्तां भद्रभटप्रभृतयः,

( १ ) जयति जयत्यार्यः । आर्य्य ! एष खलु भद्रभटभागुरायणप्रमुखैः संयमितकरचरणो मलयकेतुः प्रतीहारभूमावुपस्थापितः, तदिदं श्रुत्वाऽत्रार्य्यः प्रमाणमिति ।

---

भटप्रभृतिप्रधानैः सैन्यैरित्यर्थः । करौ च चरणौ च करचरणं (प्राण्यङ्गत्वादेकवद्भावः) संयमितं करचरणं यस्य स संयमितकरचरणः बद्धहस्तपादो मलयकेतुः पर्वतकपुत्रः प्रतीहारभूमौ द्वारदेशेऽवस्थापितः आनीतः अस्तीति शेषः ।

भद्रेति । भद्र कल्याणिन् ! अमात्यराक्षसाय राक्षसनाम्ने मन्त्रिणे निवेद्यतां विज्ञाप्यताम् अयं राक्षसः इदानीं साम्प्रतं राजकार्यं निरीक्षणाद्यात्मकं करिष्यति । ( इष्टकार्यदर्शनं पूर्वभावो नामाङ्गमिदम् ) ।

स्वगतमिति । अश्राव्यं यथा तथा ब्रवीति । न दासोऽदासस्तं दासं कृत्वेति दासीकृत्य भृत्यं विधाय । न मुखरोऽमुखरस्तं मुखरं करोतीति मुखरीकरोति वक्तारं करोतीत्यर्थः । यथा भृत्यं राजनिकटे विज्ञप्तुमादिशति तथा चन्द्रगुप्तनिकटे संयमितकरचरणस्य मलयकेतोर्द्वारदेशाऽवस्थापनात्मकं कार्यं निवेदितुं मामप्यादिशतीत्यर्थः । विदितमेव ते त्वया ज्ञातमेवाऽस्तीत्यर्थः ( ते इति क्तस्य च वर्तमाने इत्यनेन कर्तरि षष्ठी ) मलयकेतौ पर्वतकपुत्रे किञ्चित्कालं यावत् उषिताः स्थिताः आधारे सप्तमीविधानात्तस्यात्राऽभावान्न सप्तमीति नाऽऽशङ्क्यम् , आश्रयभूतमलयकेतोर्निवासक्रियाऽऽधारत्वेन विवक्षया तदुपपत्तेः ।

अमात्यराक्षसविज्ञापितो देवश्चन्द्रगुप्तः प्रयच्छति मलयकेतवे पित्र्यमेव विषयम्; अतो गच्छन्तु भवन्तः सहानेन, प्रतिष्ठिते चास्मिन् पुनरागन्तव्यम्।

पुरुषः—जं अज्जो आणवेदित्ति। (१)

चाणक्यः—तिष्ठ तावत्, भद्र! भद्र! एवमपरमुच्यतां विजयपालो दुर्गपालश्च, अमात्यराक्षसस्य गृहीतशस्त्रस्य प्रीत्या देवश्चन्द्रगुप्तः समाज्ञापयति, एष तावच्छ्रेष्ठी चन्दनदासः पृथिव्यां सर्वेषु नगरेषु श्रेष्ठिपदमारोप्यतामिति।

पुरुषः—जं अज्जो आणवेदि। (२)

(इति निष्क्रान्तः।)

चाणक्यः—भो राजन् चन्द्रगुप्त! किं ते भूयः प्रियमुपकरोमि?

राजा—किमतः परं प्रियमस्ति?—

राक्षसेन समं मैत्री, राज्ये चारोपिता वयम्।

(१) यदार्य्य आज्ञापयतीति।
(२) यदार्य्य आज्ञापयति।

---

**प्रतिमानयितव्य इति।** अमात्यराक्षसस्य प्रथमः प्रणयः आद्यं विज्ञापनं प्रतिमानयितव्यः स्वीकर्त्तव्यः। शत्रुशेषोपेक्षणस्याऽनर्थहेतुत्वेऽपि मन्त्रित्वग्रहणाद्योऽनुरोधोऽभ्युपेयः भद्र! अस्मद्वचनान्मदुक्त्या भद्रभटप्रमुखा भद्रभटादयः उच्यन्तामभिधीयन्ताम्, यथा यत् अमात्यराक्षसविज्ञापितो मन्त्रिराक्षसप्रार्थितो देवो राजा चन्द्रगुप्तो मौर्यो मलयकेतवे पर्वतेश्वरपुत्राय पित्र्यमेव विषयम् पितुरागतमेव राज्यं प्रयच्छति ददाति। स्वयम् तथाऽपकुर्वतोऽपि राक्षसस्य स्वस्मिन्नेवमुपकारित्वेन मलयकेतुना तदुपकारशीलत्वज्ञानायाऽमात्यराक्षसविज्ञापित इति विशेषणम्।

**भोराजन्निति।** ते तव भूयः पुनः किं प्रियं करोमि किमिष्टं सम्पादयामि। सकलनन्दवंशीयोन्मूलनान्मौर्यराज्यश्रीस्थैर्यसम्पादनेनाऽयुक्तवृषलपदाभिधानमपहाय राजन्नित्युक्तिः। मलयकेतुराक्षसनिग्रहसंग्रहात्मककार्यादधिकं किमिष्टं कार्यं सम्पादयामीत्यर्थः।

**राक्षसेनेति।** राक्षसेन मन्त्रिराक्षसेन सह सार्द्धं मैत्री सुहृत्त्वं जातेति शेषः।

नन्दाश्चोन्मूलिताः सर्वे, किं कर्त्तव्यमतः परम् ? ॥ १७ ॥

चाणक्यः—विजये ! उच्यतां दुर्गपालो विजयपालश्च, अमात्यराक्षसपरिग्रहेण प्रीतो देवश्चन्द्रगुप्तः समाज्ञापयति, विना हस्त्यश्वं क्रियतां सर्वबन्धमोक्ष इति ! अथवा, अमात्यराक्षसे नेतरि किं हस्त्यश्वेन प्रयोजनम् ? तदिदानीम् ,—

सह वाहनहस्तिभ्यां मुच्यतां सर्वबन्धनम् ।
मया पूर्णप्रतिज्ञेन केवलं बध्यते शिखा ॥ १८ ॥

( इति शिखां बध्नाति ) ।

प्रतीहारी—जं अज्जो आणवेदि । (१)

( इति निष्क्रान्तः । )

चाणक्यः—अमात्यराक्षस ! तदुच्यतां, किं ते भूयः प्रियमुपकरोमि ?

राक्षसः—किमतः परमपि प्रियमस्ति ? यदि न परितोषस्तदिदमस्तु—

भरतवाक्यम् ।

वाराहीमात्मयोनेस्तनुमतनुबलामास्थितस्यानुरूपां,
यस्य प्राग्दन्तकोटिं प्रलयपरिगता शिश्रिये भूतधात्री ।

( १ ) यदार्य्य आज्ञापयति ।

वयञ्च राज्ये आधिपत्ये आरोपिताः स्थिरीकृताः । सर्वे नन्दाश्च नन्दसंज्ञका राजानश्च उन्मूलिता उच्छिन्नाः अतः परमेतदुत्तरं किं विधेयम् ।

समं स्यादानुरूप्येण श्लाघा योग्यस्य वस्तुनः ।

इति दर्पणोक्तयाऽत्र समनामाऽलङ्कारः । अनुष्टुप् वृत्तम् ॥ १७ ॥

सहेति । वाहनहस्तिभ्यामश्वहस्तिभ्यां सह सार्द्धं सर्वबन्धनं सर्वेषां संयमनं मुच्यताम् । पूर्णप्रतिज्ञेन सफलप्रतिश्रुतिना मया केवलं शिखा बध्यते । नन्दोन्मूलनं यावत् शिखामोचनस्य प्रतिज्ञातत्वात्साम्प्रतं प्रतिज्ञापूर्त्यां तद्बन्धनमुचितमेवेति भावः । एकस्यामेव शिखायां विरूपयोर्बन्धनमोचनयोः संघटनयाऽत्र विषमाऽलंकारः। अनुष्टुप् वृत्तम् ॥ १८ ॥

वाराहीमिति । प्रलयेनोपप्लुता प्रलयोपप्लुता कल्पक्षयपरिगता भूतधात्री

म्लेच्छैरुद्वीज्यमाना भुजयुगमधुना पीवरं राजमूर्त्तेः,
स श्रीमद्बन्धुभृत्यश्चिरमवतु महीं पार्थिवश्चन्द्रगुप्तः ॥ १९ ॥

( इति निष्क्रान्ताः सर्वे ) ।

इति सप्तमोऽङ्कः ॥ ७ ॥

---

पृथ्वी प्राक् कल्पारम्भे अतनुबलां प्रचुरबलवतीम् अनुरूपां योग्यां वाराहीं शौकरीं तनुं शरीरमास्थितस्याऽऽश्रितस्य यस्यात्मयोनेः वराहरूपिणः श्रीविष्णोः दन्तकोटिं दन्ताग्रावयवं शिश्रिये आश्रिता । अधुना सम्प्रति म्लेच्छैर्यवनैरुद्वीज्यमाना सम्पीड्यमाना सती राजमूर्त्तेः नृपाकृतेः चन्द्रगुप्तरूपिण इति यावत् । श्रीविष्णोः भुजयुगं बाहुयुगलं संश्रिता समवलम्बिता स श्रीमद्बन्धुभृत्यः लक्ष्मीयुक्तानुचरः चन्द्रगुप्तः पार्थिवो राजा चिरं बहुकालं यावत् महीं पृथ्वीमवतु रक्षतु । चन्द्रगुप्तस्य भगवता श्रीविष्णुना भेदेऽप्यभेदारोपादभेदरूपकमलङ्कारः । अभेदेनाऽध्यवसायादतिशयोक्तिर्वा । ग्रन्थादौ ग्रन्थमध्ये ग्रन्थान्ते च मङ्गलविधानस्य शिष्टाचारात् प्रकृते आदौ धन्या केयमिति, मध्ये आकाशं काशपुष्पमिति, अन्ते वाराहीमिति । मङ्गलत्रयं कविना कृतमित्यवधेयम् । नृपदेशादिशान्तिस्तु प्रशस्तिरभिधीयते इति दर्पणोक्त्या प्रशस्तिर्नाम निर्वहणशेषाऽङ्गं प्रदर्शितम् ) ॥ १९ ॥

इतीति । इतीत्थं प्रस्तुतविषयं समाप्येत्यर्थः । सर्वे नटा निष्क्रान्ताः रङ्गशालातो बहिर्गता इत्यर्थः ।

इति ठक्कुरोपनामकश्रीकनकलालशर्मणो मैथिलस्य कृतौ मुद्राराक्षसभावबोधिनीव्याख्यायां सप्तमोऽङ्कः ।

मुनिमुनिनवचन्द्रैः सम्मिते वैक्रमाब्दे सिततविजयदशम्यामाश्विने भार्गवेऽह्नि ।
कृतिरतिविशदा मे बोधिनी भावपूर्वा गिरिपतितनुजेशाऽनुग्रहात्पूर्त्तिमापत् ॥ १ ॥
श्रीमन्महेशजयदेवगुरुद्वयस्य,भक्त्या गुरोश्च मधुसूदनमिश्रनाम्नः ।
[illegible]लस्य पादकमलानि निधाय चित्ते श्रीस्वर्ण(कनक)लालविदुषा रचिता समाप्ता॥२॥

श्रीसाम्बपूर्णविश्वनाथार्पणम् ।

* श्रीः *

# मुद्राराक्षसनाटकस्य

## भाषाऽनुवादः ।

( नान्दीपाठ )

प्रश्न–हे स्वामिन् ! परमसौभाग्यवाली यह कौनसी स्त्री आपके मस्तक पर बैठी है ?

उत्तर—हे प्राणप्रिये ! यह चन्द्रमाकी कला है ।

प्र०—हे स्वामिन् ! आपके मस्तक पर जो स्त्री बैठी है क्या उसका शशिकला यह नाम है ?

उ०--हे प्रिये ! इसका शशिकला यह नाम हो है, यह तुम्हारी परिचित थी, फिर आज किस कारण विस्मृत हो गई ।

प्र०–हे स्वामिन् ! आपके मस्तक पर जो स्त्री बैठी हुई है उस के विषय में पूछती हूं, चन्द्रमाके विषय में नहीं ।

उ०— हे प्रिये ! मेरा वचन तुम्हारे लिये यदि विश्वास जनक न हो तो विजया ही इसका यथार्थ उत्तर देवे । इस प्रकार जगन्माता पार्वती जी से जगत्पावनी श्रीगङ्गाजी को छिपाने की इच्छा करनेवाले शिवजी की चतुरता ( चातुर्य्य ) तुम सबों की रक्षा करे ॥ १ ॥

दोनों पैरों के इच्छानुकूल चलाने से हो जानेवाली पृथिवी का अधोगति को बचाते हुए, त्रैलोक्यव्यापी अपनी दोनों भुजाओं को बहुत ही थोड़ा फैलाकर नाचते हुए, जलने के भयसे देखेजाने वाले वस्तुओं में अग्निकण उत्पन्न करनेवाली तीव्र दृष्टि (नेत्र) को न देते हुए, त्रिपुरविजयी शिवजीका उक्तहेतुओं के कारण कष्टसाध्य नृत्य ( नाचना ) तुम सबों की रक्षा करें ॥ २ ॥

( नान्दी (मङ्गल) पाठके बाद )

**सूत्रधार**—मङ्गलपाठ में बहुत समय लगाना व्यर्थ है । सभ्यजनों से मुझे आज्ञा मिली है कि आज चक्रवर्त्ती वटेश्वरदत्तके पौत्र पृथु महाराज के पुत्र विशाखदत्त कविका बनाया आ मुद्राराक्षस नामक नाटक का अभिनय करो । जिस

से काव्य के दोष-गुण को जाननेवाली सभामें अभिनय करनेवाले मेरे हृदय में भी बहुत आनन्द होता है ।

किस तरह कि—

खेती के कामको अच्छीतरह नहीं जाननेवाले पुरुष द्वारा भी उत्तम खेत में बोया हुआ बीज बढ़ता है ; जैसे धान्य का बढ़ना ( अधिक होना ) बीजबोने वाले के गुणकी अपेक्षा नहीं करता है ॥ ३ ॥

इसलिये अभी पहले घर जाकर गृहिणी को बुलाकर उस के साथ गान करता हूँ । ( कुछ दूरजाकर घरकी ओर देखता हुआ चकित होकर ) यही मेरा घर है ! अन्दर जाता हूँ ।

( विचित्र ढङ्ग से प्रवेशकर-और देख कर )

आज बहुत ही आनन्द का विषय है, हमारे घर में यह क्या विशेष उत्सव की तरह दीख पड़ता है, स्त्रियें अपने अपने कार्य में लगी हुई हैं ।

जैसे—

( ४ ) यह स्त्री जलको ले आती है । यह स्त्री मसाला पीसती है । यह (स्त्री) अनेक तरहकी मालायें गूथती हैं । यह (स्त्री) बारम्बार मधुर हुङ्कार के साथ मुसल का अनुगमन करती है । तो अपनी गृहिणी ( स्त्री ) को बुलाकर पूछूँ ।

( नेपथ्य को तरफ देख कर )

( ५ ) हे गृहकार्य में नैपुण्यादि गुणवाली ! हे संसार के साधक व्यापार का आश्रय ! हे लोकयात्रा सम्पन्न करनेवाली ! हे धर्म-अर्थ-काम का साधन करने वाली ! हे मेरे घरकी नीतिविद्यास्वरूप ! हे कर्त्तव्याऽकर्त्तव्यके उपदेश करने वाली ! तुम शीघ्र यहाँ आओ ।

**नटी**—( रङ्गशाला में आकर ) आर्यपुत्र ! यही मैं हूँ, आज्ञा देकर मुझे कृतार्थ कीजिये ।

**सूत्रधार**—हे प्राणप्रिये ! आज्ञा करना तो तब तक दूर रहे, पहले यह कहो कि तुम ने आज क्या ब्राह्मणों के निमन्त्रण के कारण इन परिजनों को बुलाया है, या अपनी इच्छा ही से ये सब अतिथि मेरे घर आये हैं, जिस से यह विशेषरूपसे रसोई की तैयारी कर रही हो ।

**नटी**—आर्य ! आज मैंने ब्राह्मणों को निमन्त्रण दिया है ।

**सूत्रधार**—किस वास्ते ?

**नटी**—आज चन्द्रग्रहण है ( चन्द्रमा को राहु ग्रसित करेंगे ) ।

**सूत्रधार**—किसने यह कहा है ?

**नटी**—नगर में रहनेवाले लोग ऐसा कहते हैं ।

**सूत्रधार**—हे प्राणप्रिये ! मैंने चौसठ अङ्गवाले ज्यौतिष शास्त्र में परिश्रम किया है ( इस लिए मुझे मालूम है कि चन्द्रग्रहण कब लगता है । ) ब्राह्मणों के लिये पाक करती हो तो करो, पर चन्द्रग्रहण की बात से किसी के द्वारा ठगी गई हो ।

देखो—

( ६ ) पृथिवी का छायापुत्र क्रूर ग्रह राहु इस समय अपूर्ण बिम्बवाले चन्द्र-मण्डलको जबरदस्ती ग्रसित करने चाहता है ।

( नेपथ्यमें ) आः कौन ऐसा बलवान् पुरुष है जो मेरे रहते चन्द्रगुप्तको बलसे जीतना चाहता है ।

**सूत्रधार**—किन्तु बुधग्रह का योग चन्द्रमाको राहु के ग्रास से बचाता है ।

**नटी**—हे प्राणप्रिय ! यह कौन सा पुरुष है कि जो पृथ्वी में रहता हुआ चन्द्रमा को ग्रह ( राहु ) योग से बचानेकी इच्छा करता है ।

**सूत्रधार**—हे प्राणवल्लभे ! मैंने भी अच्छी तरह उसको नहीं पहचाना । फिरसे सावधानता पूर्वक बोलीसे पहचानूंगा ( क्रूर ग्रह यह श्लोक फिर पढता है )

( नेपथ्यमें ) आः ! कौन यह पुरुष है जो मेरे रहते चन्द्रगुप्त को बलसे जीतना चाहता है ।

**सूत्रधार**—( सुन कर ) मैंने उसे पहचान लिया, यह कौटिल्य (चाणक्य) है ( नटी चाणक्य का नाम सुनकर डरती है ) ।

( ७ ) **सूत्रधार**—जिसने अपने क्रोधरूपी अग्निमें नन्दवंशको हठात (बलसे) जलादिया, वही यह क्रूर बुद्धिवाला कौटिल्य (चाणक्य) ब्राह्मण चन्द्रमा पर राहुका आक्रमण सुनकर समान नामवाले चन्द्रगुप्त पर शत्रु के आक्रमण की आशंका करता है । इस लिये यहां से हम दोनों चलें ।

( नटी-और सूत्रधार दोनों जाते हैं )

इति प्रस्तावना ।

नटी—विदूषक-पारिपार्श्वक—सूत्रधार इन सबों की भावी कथा सूचित करने के लिये होनेवाले परस्पर संभाषण को प्रस्तावना कहते हैं। इसका लक्षण साहित्यदर्पण में लिखा है।

( खुली हुई शिखा का स्पर्श करते हुए चाणक्य का रङ्गस्थान में प्रवेश )

चाणक्य—कहो कौनसा पुरुष मेरे रहने पर भी बल से चन्द्रगुप्त का परास्त करने की इच्छा करता है।

( ८ ) पिये गये हाथी के शोणित से रक्तवर्ण शोभावाले, सन्ध्याकाल के कारण रक्तवर्ण चन्द्रमा की कला के सदृश प्रकाशमान, जम्भाई के कारण मुंह बाये हुए सिंह के दांत को जीत कर कौनसा बलवान् पुरुष उखाड़ने की इच्छा करता है।

और भी—

( ९ ) नन्द वंश के लिये कृष्ण सर्पिणी के समान और क्रोधरूपी अग्नि से बढ़ी हुई चञ्चल धूमलतारूपी मेरी शिखा को कौनसा वध योग्य पुरुष अभी तक बँधी हुई नहीं देखना चाहता।

और भी—

( १० ) नन्द वंशरूपी वन के लिये अग्नि के समान अति प्रज्वलित मेरे क्रोध के प्रताप ( तेज ) का उल्लङ्घन करता हुआ, अपने और पराये की अन्तिम दशा के विचारशून्य कौनसा पुरुष पतङ्ग की तरह मरने चाहता है।

शार्ङ्गरव ! शार्ङ्गरव !

शिष्य—( रङ्गस्थान में प्रवेश करके ) उपाध्याय आज्ञा दीजिए।

चाणक्य—वत्स ! मैं बैठने की इच्छा करता हूं।

शिष्य—उपाध्याय ! यह द्वारप्रदेश में आसन रखा हुआ है, उस पर आप बैठिये।

चाणक्य—वत्स ! कार्य की अधिकता ही मुझे व्याकुल करती है, न कि शिष्य जनों पर होनेवाली उपाध्यायकी स्वाभाविक दुःशीलता। (विचित्र व्यापार से बैठ कर मन ही मन )। यह समाचार नगरवासियों में किस तरह फैल गया कि नन्दकुल के नाश होने से क्रोधी राक्षस, पिता के मरने के कारण क्रोधी और समस्त नन्द राज्य के लोभ से उत्साहित पर्वतक राजा का पुत्र मलयकेतु के

से मिलकर मलयकेतु द्वारा बुलाये गये प्रबल यवनराजके साथ मिलकर चन्द्रगुप्तसे लड़नेके लिये तैयार है। (विचार कर) अथवा जिसे मैंने सब लोगोंके सामने नन्दवंश के वध की प्रतिज्ञा कर दुस्तर प्रतिज्ञारूपी नदी को पार कर लिया सो मैं क्या इस नवीन प्रचलित किम्वदन्ती को व्यर्थ करने के लिए समर्थ नहीं हूँ।

देखो—बढ़े हुए शोकरूपी धूमों से शत्रु की स्त्रीरूपी दिशाओं के मुखरूपी चन्द्रमा को श्यामवर्ण बना कर, मन्त्रिरूपी वृक्ष के वास्ते नीतिरूपी वायु से लाये हुए मोहरूपी भस्म को फैलाकर, उद्विग्न पुरवासी ब्राह्मणों से रहित नन्दवंश के अंकुरों को जला कर, जलाने की वस्तु न रहने के कारण खेद से दावानल की तरह मेरा क्रोधानल शान्त नहीं हुआ है।

( १२ ) जिन लोगों ने राजा के भय से नीचे किये हुये धिक्शब्दवाले मुखों से सोचते हुए मुझे अग्रासनसे हटाया गया देखाथा, वे सब अभी उसी तरह सिंह के द्वारा पर्वत के शिखर से गिराये गये हाथी की तरह मेरे द्वारा परिवार सहित नन्द को सिंहासन से गिरा हुआ देखें।

सो मैं प्रतिज्ञा की पूर्ति होने पर भी चन्द्रगुप्त के अनुरोध से शस्त्र को धारण करता हूँ।

( १३ ) जिसने हृदय के विषय-वासनारूप अन्तःशत्रु के समान परिवार सहित नवों नन्दों को पृथिवी से हटा दिया। ( अथवा ) पृथिवी के हृदय में आनन्द देनेवाले परिवार सहित नन्दों का नाश किया, ( और ) सरोवर में कमलिनी की तरह चन्द्रगुप्त में राज्यलक्ष्मी को स्थिर किया, ( और ) क्रोधित मन से क्रोध और प्रीति के समान उचित द्विविध निग्रह-अनुग्रहरूप फल को शत्रु और मित्र में बाँट कर स्थापित किया।

अथवा—राक्षस को अपने आधीन किये बिना नन्दवंश का विनाश करने ही से क्या लाभ और चन्द्रगुप्त की राज्यलक्ष्मी की स्थिरता ही कैसे होगी? ( विचार कर ) अहो! नन्द के वंश में राक्षस की अनन्य भक्ति है। वह किसी एक भी नन्दवंशीय राजा के रहते चन्द्रगुप्त का मन्त्री नहीं बनाया जा सकता। इसलिये नन्दवंशीयों के मारने में उद्योग रहित होना उचित नहीं है। इसी विचार से तपोवन में रहता हुआ नन्दवंशीय सर्वार्थसिद्धि नामका तपस्वी मारा गया। अभी भी राक्षस मलयकेतु की सहायता से हम सबको मारने के लिये बहुत

कुछ उद्योग कर ही रहा है। ( प्रत्यक्ष की तरह आकाश में राक्षस को स्थित जानकर ) अमात्य राक्षस ! तुम धन्य हो। ओ मन्त्रियों में बृहस्पति के समान ! तुम धन्य हो।

क्यों कि—

( १४ ) सांसारिक मनुष्य धनकी लालसा से सम्पत्तिशाली प्रभु ( स्वामी ) की सेवा करते हैं। शत्रु से प्राप्त दुःख और दुर्भिक्षादि के कारण सम्पत्तिहीन होने पर भी जो मनुष्य स्वामी का अनुगमन करते हैं वे स्वामी के फिर अभ्युदय की आशा से। जो मनुष्य स्वामी के मरने पर भी पूर्वकृत उपकार का स्मरण कर स्वार्थ रहित भक्ति से उनके कार्यभार को वहन करते हैं, वे तुम्हारे जैसे कुशल राजभक्त संसार में दुर्लभ हैं।

इसी लिये तुम्हें वश में करने के लिये मेरा विशेष यत्न है। ( मैं यही सोचता हूँ कि ) किस प्रकार यह चन्द्रगुप्त के मन्त्रिपद को ग्रहण कर कृतार्थ हो।

( १५ ) बुद्धिहीन किन्तु निर्बल स्वामिभक्त भृत्य से क्या प्रयोजन, बुद्धिमान् और पराक्रमी ही हो पर स्वामिभक्तिहीन हो तो ऐसे भृत्य से भी क्या फल, बुद्धि, पराक्रम और भक्ति ये गुणसमुदाय जिन भृत्यों में हैं ऐसे भृत्य स्वामी के सुख दुःख के समय कल्याणकारी होते हैं, और इनसे भिन्न गुणवाले भृत्य केवल कुटुम्ब की तरह पालनीय हैं॥

इसलिये मैं भी इस कार्य में सावधान रहता हूं, और उसे वश में करने के लिये यत्न भी कर रहा हूँ, वृषल और पर्वतक इन दोनों में से किसी एक का भी नाश होने पर चाणक्य का अपकार होता है। इसीलिये राक्षस ने विषकन्या द्वारा मेरे मित्र तपस्वी पर्वतेश्वर को मारा है। यह बात संसार में फैली हुई है। लोगों के विश्वास के लिये तुम्हारे पिता को चाणक्य ने मारा है—ऐसा डराकर मैंने भागुरायण द्वारा पर्वतेश्वर के पुत्र मलयकेतु को अपने कटक से भगा दिया। राक्षस की बुद्धि में पड़े हुए और युद्ध के लिये तैयार इस मलयकेतु को मैं अपने बुद्धि-बल से पकड़ सकता हूं, पर इसके पकड़ने से फैला हुआ पर्वतक के वधका अपयश दूर नहीं हो सकता और मैंने आत्मपक्ष तथा शत्रुपक्ष में अनुरक्त-और विरक्त-जनों को जानने की इच्छा से अनेक देशकी भाषा-वेश आचार-विचार को जानने और अनेक चिन्हवाले दूतों को भेजा है। मेरे सब गुप्तचर कुसुमपुर में रहने

वाले नन्द के मन्त्री के मित्रों की कार्यप्रवृत्ति तथा दशा विशेष को अच्छी तरह देख रहे हैं।

चन्द्रगुप्त के साथ रहनेवाले भद्रभटप्रभृति प्रधानपुरुष मलयकेतु को अपना कर अपने मनोरथ सिद्ध कर लिये। शत्रु से भेजे गये विष देनेवालों का निवारण करने के लिये दृढ भक्तिवाले और राजा के समीप रहने वाले-कार्यों में सावधान एवं विश्वस्त पुरुष वहाँ रखे गये हैं। मेरा सहपाठी मित्र विष्णुशर्मा नामका ब्राह्मण है। वह शुक्र के नीतिशास्त्र में और चौसठ अङ्गवाले ज्योतिष शास्त्र में बहुत प्रवीण है। मैंने नन्द राजाके वध की प्रतिज्ञा करने के बाद ही संन्यासी के वेष में उसे कुसुमपुर ले जाकर नन्दराजा के सब मन्त्रियों के साथ मित्रता करादी। राक्षस नामका नन्दमन्त्री उसमें बहुत ही विश्वास करता है। इससे भी विशेष प्रयोजन सिद्ध होगा। इसलिये ऐसा उपाय करने पर कुछ भी त्रुटि न रह जायगी। चन्द्रगुप्त ही साक्षात् मुख्य मन्त्री है अथवा कार्यविषयक आग्रह से उत्पन्न खेदों से रहित राज्य ही सुखदायक होता है।

जैसे कि—

( १६ ) स्वभाव से बलवान् भी गजराज और राजा, ये दोनों अपने से उपार्जित ( गजेन्द्र पक्षमें ) खाद्य और ( नरेन्द्रपक्षमें ) राज्य को भोगते हुए प्रायः उपार्जनजन्य क्लेशभागी बनकर दुखी होते हैं।

( यमपटको हाथमें लिये हुए चर ( दूत ) का रङ्गस्थान में प्रवेश )

( १७ ) चर-यम देवता के चरणों को प्रणाम करो, अन्यदेवों की उपासना से क्या प्रयोजन ? क्यों कि-यह यम देवता अन्य देवताओं के भक्तों की जीवका हरण कर लिया करता है।

और भी —

( १८ ) भक्ति से प्रसन्न किये हुए यमदेवकी कृपा से प्राणिमात्र का जीवन होता है। उन यमदेवताके द्वारा सब जीवोंका नाश होता है। उन्हीं की दयासे हम सब जीवित रहते हैं॥

इस लिये इस घर में भी जाकर यमपट दिखाता हुआ गाता हूँ। ( यह कहकर घूमता है )।

शिष्य—सौम्य ! भीतर मत आओ।

चर—ब्राह्मण ! किसका यह घर है ?

शिष्य—चाणक्य इस पवित्र नामवाले मेरे उपाध्याय का यह घर है।

चर—( हँसकर ) ब्राह्मण ! तब तो मेरे ही धर्मभ्राता का यह घर है। इसलिये मुझे भीतर जाने दो, मैं तुम्हारे उपाध्यायको धर्मका उपदेश करूंगा।

शिष्य—( क्रोधकर ) अरे मूर्ख ! क्या तू मेरे उपाध्याय से भी विशेष धर्मज्ञ है ?

चर—ब्राह्मण ! क्रोध मत करो, सब लोग सब विषय को नहीं जानते। इसलिये कुछ तुम्हारे उपाध्याय जानते हैं और कुछ हमारे जैसे मनुष्य भी जानते हैं।

शिष्य-( क्रोधकर ) मूर्ख ! तू मेरे उपाध्याय की सर्वज्ञता को छीनने की इच्छा करता है ?

चर-ओ ब्राह्मण ! यदि तुम्हारे उपाध्याय ही सब बातों को जानते हैं तो क्या वे यह जान सकते हैं कि चन्द्रमा किसको प्रिय नहीं है ?

शिष्य-मूर्ख ! इसके जानने से मेरे गुरु को क्या लाभ ?

चर-ब्राह्मण ! इसके जानने से क्या लाभ होगा-सो तुम्हारे गुरु ही जानेंगे। अल्प बुद्धि वाले तुम तो यही जानते होगे कि कमलों को चन्द्रमा अनभिलषितहै। देखो न !

( १९ ) अति सुन्दर भी कमलों के आकार से उस चन्द्रमा का चरित्र भिन्न होता है ; क्यों कि कमल सम्पूर्ण बिम्बवाले चन्द्रमा में विरुद्ध आचरण करता है। भावार्थ यह कि कमल जैसा सुन्दर होता है तो उसका स्वभाव भी सुन्दर होना चाहिये। सो न होकर वह चन्द्रमा को देखकर संकुचित होजाता है। अतएव वह सुन्दर नहीं होता।

इसका गूढ भाव यह है कि राक्षस के पक्षपाती लोग चन्द्रगुप्त से विरुद्ध आचरण करते हैं।

चाणक्य-( मन ही मन ) अरे ! मैं चन्द्रगुप्त के विरोधी लोगों को जानता हूं, यह बात इसने कही है !

शिष्य-मूर्ख ! तू यह क्या असंगत बात कहता है।

चर-ओ ब्राह्मण ! मेरा कहना ठीक ही है।

शिष्य-यदि तुम्हारा वचन ठीक ही हो तो भी इससे क्या लाभ होगा ?

चर-यदि सुनने और जाननेवाला-आ मिले तो हमारा वचन सफल होजाय।

चाणक्य-भद्र ! तुम खुशी से भीतर आओ, यहां सुनने और जानने वाला आदमी तुम्हें मिलेगा।

चर-अच्छा मैं आता हूं। ( प्रवेश कर-और समीप जाकर ) देव चाणक्य ! आपकी जय हो।

चाणक्य-( देखकर मन ही मन ) किस कार्य के लिये मैंने इसको भेजा था कार्यों की अधिकता के कारण यह नहीं जानता। ओह ! जाना, प्रजा की चित्त वृत्ति जानने के लिये इसको मैंने भेजा था। ( जोर से ) आओ, यहां बैठो।

चर-जैसी आपकी आज्ञा ( इतना कह कर पृथ्वी पर बैठ जाता है )

चाणक्य-भद्र ! अपने कार्य का हाल कहो। क्या सब प्रजा चन्द्रगुप्त में अनुरक्त है।

चर-और क्या ! जबसे आपने उनके विराग के कारणों को दूर कर दि ा है तबसे सब प्रजा राजा चन्द्रगुप्त में अनुरक्त है। किन्तु कुसुमपुर में मंत्री राक्षस के तीन ऐसे मित्र रहते हैं, जो कि चन्द्रगुप्त की श्री को सहन नहीं करते।

चाणक्य—( क्रोधकर ) तो कहो कि वे अपने जीवन को नहीं चाहते। भद्र ! तुम उन सब के नाम जानते हो ?

चर-बिना नाम जाने किस तरह आपसे निवेदन करता।

चाणक्य-इसी लिये तो मैं उनके नाम सुनना चाहता हूं।

चर-आर्य ! सुनिये। पहले तो आपके शत्रुपक्ष में रहनेवाला क्षपणक है।

चाणक्य-( खुशीसे मन ही मन ) हमारे शत्रु पक्ष में रहने वाला क्षपणक है। ( जोरसे ) उसका क्या नाम है ?

चर-जीवसिद्धि।

चाणक्य-क्षपणक हमारे शत्रुपक्ष में रहने वाला है, यह तुमने किस तरह जाना ?

चर-इससे कि राक्षस द्वारा भेजी हुई विषकन्या उसने पर्वतेश्वर को अर्पण की।

चाणक्य-( मन ही मन ) जीवसिद्धि तो मेरा गुप्तचर है। ( जोर से ) भद्र ! और दूसरा कौन है ?

**चर**-दूसरा मन्त्री राक्षस का प्रिय मित्र कायस्थ जाति का वह शकटदास है।

**चाणक्य**-( हँसकर मन ही मन ) कायस्थ जाति बलहीन होती है इसलिये यह मेरा अनिष्ट साधक नहीं हो सकता । फिर भी शत्रुदल में रहने के कारण उपेक्षा योग्य नहीं है । ( जोरसे ) भद्र ! अब मैं तीसरे को जानना चाहता हूं ।

**चर**-तीसरा राक्षस के दूसरे हृदय के समान पुष्पपुर में रहने वाला मणिकार श्रेष्ठी चन्दनदास है । जिसके घर में मन्त्री राक्षस अपने परिवार को रख कर कुसुमपुर से चला गया है ।

**चाणक्य**-( मन ही मन ) निश्चय ही चन्दनदास राक्षस का प्रिय मित्र है । अन्यथा वह अपने पुत्रादि को उसके घर कभी नहीं रखता । ( जोर से ) भद्र ! राक्षस ने चन्दनदास के घर में अपने पुत्रादि को रखा है, यह तुमने किस तरह जाना ।

**चर**-आर्य्य ! राक्षस की यह अङ्गुलिमुद्रा आपको सब समाचार जना देगी । ( यह कहकर अङ्गुलिमुद्रा देता है ) ।

**चाणक्य**-( मुद्रा को लेकर और राक्षस के नाम को बांच कर खुशी से मन ही मन ) अब तो राक्षस ही मेरी अङ्गुली में आकर बैठ गया । ( जोरसे ) भद्र ! तुमको यह अङ्गुलिमुद्रा किस तरह मिली ? यह समाचार में विशेषरूपसे सुनना चाहता हूँ ।

**चर**-आर्य्य ! सुनिये । जब आपने मुझको प्रजा के हार्दिक भाव समझने के लिये भेजा तब मैं दूसरों के घर जाने में सन्देह न हो इसलिए यह यमपट लेकर खोजता हुआ मणिकार श्रेष्ठी चन्दनदास के घर में गया । वहां यमपट को पसार कर गाना शुरू किया ।

**चाणक्य**-तब क्या हुआ ?

**चर**-तब पांच वर्ष से कुछ कम अवस्था का अति सुन्दर और लड़कों की स्वाभाविक चंचलता से विकसित नेत्रवाला एक बालक यवनिका को हटाकर बाहर निकला । तब 'हाय बालक बाहर चला गया' इसी तरह यवनिका के भीतर स्त्रियों का बड़ा भारी कोलाहल होने लगा । तब एक स्त्री ने दरवाजे के बाहर थोड़ा मुख निकाल कर भागते हुए उस बालक को डांटकर हाथ से पकड़ लिया । बालक के पकड़ने में शीघ्रता करने के कारण उस स्त्री के हाथकी उंगली से

यह अंगूठी देहली पर गिर पड़ी । इस अंगूठी के गिरने की बात उस स्त्री ने नहीं जानी और मेरे पैर के निकट प्रणाम कर नवीन स्त्री की तरह बैठ गई । मैं भी इस अंगूठी को मन्त्री राक्षस का नामाङ्कित जानकर आपके निकट लाया हूँ । यही इसके मिलने का वृत्तान्त है ।

**चाणक्य**–भद्र ! सुना । अब तुम बाहर जाओ, इस परिश्रम का योग्य पुरस्कार भी शीघ्र ही पाओगे ।

**चर**–आपकी जैसी आज्ञा ( यह कह कर चला गया )

**चाणक्य**–शार्ङ्गरव ! शार्ङ्गरव !!

**शिष्य**–( रङ्गस्थान में प्रवेश कर ) उपाध्याय ! आज्ञा कीजिये ।

**चाणक्य**–वत्स ! कलम–दवात और कागज लाओ ।

**शिष्य**–जैसी आज्ञा ( यह कहकर बाहर जाता है । फिर प्रवेश कर ) उपाध्याय ! यह कलम–दवात और कागज है ।

**चाणक्य**–( लेकर मन ही मन ) इस पत्र में क्या लिखूं कि इस लेख से राक्षस जीता जाय ।

प्रतीहारी–( प्रवेश कर ) आर्य ! आप की जय हो ।

**चाणक्य**–( खुश होकर मन ही मन ) यह जय पागया । ( जोरसे ) शोणोत्तर ! किस लिए आई हो ?

**प्रतीहारी**–आर्य ! राजा चन्द्रगुप्त अञ्जलि बांध कर प्रणाम करते हुए आपसे निवेदन करते हैं कि मैं आपकी आज्ञा पाकर राजा पर्वतेश्वर का पारलौकिक श्राद्ध आदि कर्म करना चाहता हूँ और पहले धारण किये गये उनके अलङ्करणों को पढ़े लिखे ब्राह्मणों को दे देना चाहता हूं ।

**चाणक्य**–( खुशी से मन ही मन ) साधु वृषल ! साधु, मेरे ही हृदय के साथ विचार विमर्श कर के तुमने यह सम्वाद ( समाचार ) भेजा है । ( जोरसे ) शोणोत्तरे ! हमारे कथनानुसार चन्द्रगुप्त से कहो 'वत्स ! तुम लोक-व्यवहार के ज्ञाता हो । इसलिये अपने विचार से कार्य्य करो । परन्तु पहले धारण किये गये बहुमूल्य अलङ्करण गुणवान् ही ब्राह्मणों को देना चाहिये इस वास्ते मैं अपने परीक्षित गुणवाले ब्राह्मणों को भेजता हूं ।

**प्रतीहारी**–आप की जो आज्ञा । ( यह कहकर चली गई )

चाणक्य-शार्ङ्गरव शार्ङ्गरव ! मेरे कहे अनुसार विश्वावसु आदि तीनों भाइयों से कहो कि चन्द्रगुप्त से अलङ्कारणों को लेकर आप तीनों मुझसे मिलें।

शिष्य-आपकी जैसी आज्ञा ( यह कहकर चलागया )

चाणक्य-( मन ही मन ) यह लेख का अन्तिम अर्थ है। पूर्व लेख का अर्थ कौन सा होना चाहिए ? ( विचार कर ) हां जाना। दूतों के द्वारा पहिले जान चुका हूँ कि इस म्लेच्छराजकी सेना में से पांच राजा परम भक्ति से राक्षस का अनुगमन करते हैं। उन लोगों के नाम ये हैं।

( २० ) कुलूत देश का राजा चित्रवर्मा, मनुष्यों में सिंह के समान मलय देशका राजा सिंहनाद, कश्मीर देश का राजा पुष्कराक्ष, शत्रु की सामर्थ्य दूर करने वाला सिन्धुदेशका राजा सिन्धुषेण, बहुत से घोड़ों के समान बलवाला पारस देश का राजा और पांचवां मेघाक्ष नामका है। मैं अभी इन सबका नाम लिखता हूं। चित्रगुप्त इनके नामों को मेट सकें तो मेटें।

( सोच कर ) अथवा नहीं लिखूँगा तब तक यह सब बात गुप्त ही रहे। ( जोरसे ) शार्ङ्गरव !

शिष्य-( प्रवेश कर ) उपाध्याय ! आज्ञा कीजिये।

चाणक्य-वत्स ! बहुत यत्न से भी लिखे गये वैदिक पण्डितों के अक्षर स्पष्ट नहीं ही होते। इसलिये मेरे कथनानुसार सिद्धार्थक से कहो। ( कान में ) इन अक्षरों से किसी कारण कुछ किसी को स्वयं कहना चाहिये। ऊपर नहीं लिखा गया है। शकट दास से उक्त नाम वाला लेख लिखा कर मेरे पास आओ। इस लेख को चाणक्य लिखाता है, यह बात किसी से भी न कहना।

शिष्य-ऐसा ही करूंगा। ( चला गया )

चाणक्य-( मन ही मन ) हर्ष का बात है। कि मलयकेतु जीत लिया गया।

सिद्धार्थक-( हाथ में लेख को लिए हुए प्रवेश कर )। आर्य ! आपका जय हो। यह लेख शकटदास का लिखा हुआ है।

चाणक्य-( पत्र लेकर और देख कर ) अक्षर बहुत ही सुन्दर हैं। ( बांच कर )। भद्र ! इस मुद्रा से इसको मुद्रित करदो।

सिद्धार्थक-आप की जैसी आज्ञा। ( पत्र में मुहर लगाकर ) आर्य ! यह लेख मुद्रित होगया। इसलिये आज्ञा कीजिये कि अब कौनसा दूसरा कार्य करूँ ?

**चाणक्य**-भद्र ! मैं अपने करने योग्य किसी कार्य में तुम को लगाना चाहता हूँ ।

**सिद्धार्थक**-( खुशी से ) आर्य ! मैं आपका दयापात्र हूं, इसलिये आप आज्ञा कीजिये कि यह दास कौन सा कार्य करे ।

**चाणक्य**-भद्र ! पहिले तो वध्यस्थान में जाकर वहां के घातक जनों को क्रोध से दहिने नेत्र का इशारा करो, उन सब के इशारा समझ जाने और भय से इधर उधर चले जाने पर शकट दास को वध्यस्थान में लाकर राक्षस के के पास पहुँचाओ और मित्रको प्राणरक्षा से प्रसन्न राक्षस से पारितोषिक (इनाम) लो । इसके बाद कुछ दिन तक राक्षस ही के पास रहो । शत्रु के समीप रहने पर यह कार्य करना ( कान में कहता है ) ।

**सिद्धार्थक**—आपकी जैसी आज्ञा ।

**चाणक्य**—शार्ङ्गरव ! शार्ङ्गरव !!

**शिष्य**—( प्रवेश कर ) उपाध्याय ! आज्ञा कीजिये ।

**चाणक्य**—हमारे कथनानुसार कालपाशिक और दण्डपाशिक, दोनों दूतों को कहो कि चन्द्रगुप्त आज्ञा करते हैं कि जो यह राक्षसका भेजा हुआ जीवसिद्धि नामका क्षपणक है और जिसने विषकन्या के द्वारा पर्वतेश्वर को मारा है । उसको इस दोष से तिरस्कार के साथ नगर से बाहर कर दो ।

**शिष्य**—ऐसा ही करूंगा । ( जाता है ) ।

**चाणक्य**—वत्स ! ठहरो २, जो यह दूसरा राक्षस का भेजा हुआ शकटदास नाम का कायस्थ है, उसको भी इसी अपराध में फांसी देदी जाय और इसके परिवारभरको कारागारमें बन्द कर दिया जाय ।

**शिष्य**—ऐसा ही होगा ( चलागया )

**चाणक्य**—(चिन्तित भावसे मन ही मन ) । दुरात्मा राक्षस वशीभूत-हो ( अर्थात् पकड़ा जाय )

**सिद्धार्थक**—आर्य ! मैंने आपका सन्देश ग्रहण किया ।

**चाणक्य**—( खुशीसे मन ही मन ) हर्षकी बात है, राक्षस ग्रहण कर लिया गया ( जोरसे ) भद्र ! यह कौन ग्रहण किया गया ?

सिद्धार्थक—मैंने आपका सन्देश ग्रहण किया और अब कार्य सिद्धिके वास्ते जाता हूँ ।

चाणक्य—( मुहर किया हुआ पत्र देकर ) भद्र सिद्धार्थक ! जाओ, तुम्हारा कार्य सिद्ध हो ।

सिद्धार्थक—आपकी जैसी आज्ञा । ( प्रणामकर चलागया )

शिष्य—( प्रवेशकर ) उपाध्याय ! कालपाशिक-और दण्डपाशिक ये दोनों आपसे निवेदन करते हैं कि हम दोनों चन्द्रगुप्त राजाकी आज्ञा को मानते हैं ।

चाणक्य—अच्छा । वत्स ! मैं अभी राक्षसके मित्र वैश्यजातीय चन्दनदास को देखना चाहता हूँ ।

शिष्य—जैसी आपकी आज्ञा । ( यह कहता हुआ बाहर जाता है और चन्दनदासके साथ फिर प्रवेशकर ) । चन्दनदास ! इधर २

चन्दनदास—( मन ही मन )

( २१ ) इस निर्दयी चाणक्यसे बोलनेवाले निरपराध पुरुषको भी भय होता है, फिर अपराधी पुरुषकी तो बात ही क्या है ॥

इसीलिये मैंने धनसेन आदि तीन व्यापारी बनियों से कह दिया है कि जबतक दुष्ट चाणक्य मेरे घरकी तलाशी न ले ले तबतक के लिए स्वामी मन्त्रि-राक्षस के कुटुम्बवर्ग को सावधानी के साथ मेरे घरसे दूसरी जगह ले जाओ, मुझे जो होना हो सो हो ।

शिष्य—चन्दनदास ! इधर २ ।

चन्दनदास—मैं चल रहा हूँ । ( दोनों जाते हैं )

शिष्य—उपाध्याय ! चन्दनदास वैश्य उपस्थित है ।

चन्दनदास—( समीप जाकर ) आपकी जय हो ।

चाणक्य—( विचित्र ढंग से देखकर ) चन्दनदास ! यहां आओ, इस आसन पर बैठो ।

चन्दनदास—( प्रणाम कर ) । आप क्या नहीं जानते कि अनुचित सत्कार साधारण दुःखसे भी महान् दुःख देनेवाला होता है, इसलिये मैं इसी जगह पर बैठता हूँ ।

**चाणक्य**—चन्दनदास ! ऐसा मत कहो, हमलोगों के साथ आपका यह बर्ताव उचित ही है, इसलिये आसन ही पर बैठो ।

**चन्दनदास**—( मन ही मन ) ज्ञात होता है कि इसने मेरे अपराध को जान लिया है ( जोरसे ) जो आप की आज्ञा ( बैठ जाता है ) ।

**चाणक्य**—चन्दनदास ! तुम्हारा व्यवसाय तो उन्नति पर है न ?

**चन्दनदास**—( मनही मन ) इस तरह अधिक (बहुत) आदर अनिष्टसूचक है ? ( जोर से ) आर्य ! और क्या, आपकी कृपा से मेरा व्यापार अच्छी तरह से चलता है ।

**चाणक्य**—चन्दनदास ! क्या कभी-कभी राजा चन्द्रगुप्त के दोष और भूतपूर्व राजा नन्द के गुणों को प्रजा स्मरण करती है ?

**चन्दनदास**—( दोनों कानों को ढांककर ) ऐसा न कहिये । शरद् कालीन पूर्णिमा के चन्द्रमा की तरह चन्द्रगुप्त से प्रजा बहुत प्रसन्न है ।

**चाणक्य**—चन्दनदास ! यदि ऐसी बात है तो राजा प्रसन्न प्रजा से किसी प्रियवस्तु की इच्छा करता है ।

**चन्दनदास**--आप आज्ञा कीजिये, महाराज क्या वस्तु और कितना धन हम से चाहते हैं ।

**चाणक्य**—चन्दनदास ! यह चन्द्रगुप्त का राज्य है, नन्द का राज्य नहीं । क्योंकि धन के लोभी नन्द ही को प्रजा से धन लेना भाता था । चन्द्रगुप्त को तो आपलोगों को क्लेश न होना ही प्रसन्नता का साधक है ।

**चन्दनदास**—( हर्ष से ) । आर्य ! मैं आपकी दया से कृतार्थ हूँ ।

**चाणक्य**—चन्दनदास ! प्रजा को क्लेश न हो, यह किस तरह हो सकता है यह बात आपने मुझसे नहीं पूछी ।

**चन्दनदास**—आप आज्ञा कीजिये ।

**चाणक्य**—संक्षेपमें यह कहा जा सकता है कि प्रजाको राजा के विरुद्ध व्यवहार नहीं करना चाहिये ।

**चन्दनदास**—आर्य ! फिर आप किस अभागे को राजाके विरुद्ध समझते हैं ।

**चाणक्य**—पहले तो आप ही हैं ।

